# महाभाष्य-समीक्षणम्

डा गिरीशचन्द्र त्रिपाठी

# महाभाष्य-समीक्षणम्

( प्रदीपोद्द्योतानुसारि-नवाह्निकं यावत् )

लेखकः

डॉ० गिरीशचन्द्र त्रिपाठी

व्याकरणाचार्यः, साहित्यरत्नम्, एम्० ए०, पी-एच्० डी०

प्राचार्यः

श्रीराघवेन्द्र-ब्रह्मर्षि-दूधाधारी-बर्फानी

संस्कृतविद्यापीठम्, हरिद्वारम्

प्रकाशकः

श्रीबटुकप्रकाशनम्

दूधाधारी आश्रम भूपतवाला, हरिद्वार

वैक्रमाब्दः २०४४ ] [ ख्रिष्टाब्दः १९८७

**प्रो० करुणापति त्रिपाठी**

अध्यक्ष

संस्कृत अकादमी उत्तरप्रदेश लखनऊ।

**भूतपूर्व कुलपति**

सम्पूर्णानन्द संस्कृत विश्वविद्यालय वाराणसी।

महाभाष्यसमीक्षणं (प्रदीपोद्योतानुसारि नवाह्निकं यावत्) मया सम्यगवलोकितमवहितेन च चेतसा यत्र तत्राधीतमपि। समीक्षणकर्त्रा डॉ० गिरीशचन्द्रत्रिपाठिना विदुषा प्रदीपकारस्योद्योतकारस्य चोभयोः सम्मतमतानि समुद्धृत्य तयोराशयं च पृथक्पृथक् सम्यग् विविच्य समुद्धृत्य च स्वकीया सुस्पष्टा विस्तृता प्रमाणप्रमाणिता समीक्षा विहिता। अस्मिन् प्रसङ्गे यत्र तत्र निष्कर्षरूपेण प्रदीपोद्योतकारमतेषु यदि कश्चिद्विरोधो मतभेदो वा लेखकदृष्ट्या लक्ष्यते तदोभयोष्टीकाकारयोर्मतयोरन्यतरस्य सविमृष्टमतस्य साधीयस्त्वं चापि सप्रमाणं स्पष्टीकृतम्। एतस्य समीक्षणस्य कृते लेखकः साधुवादार्हः। आशास्यते च लेखकेनानेनान्येषां व्याकरणग्रन्थानां समीक्षणं भविष्यति काले भविष्यति। यदि च महाभाष्य-नवाह्निकपर्यन्तप्रदीपोद्योतानुसारिसमीक्षकेणैतादृशं समीक्षणं समग्रस्य महाभाष्यस्याकरिष्यत्तदा महते उपकारायाभविष्यदिति कामयते—

प्रबोधिन्यामेकादश्यां वैक्रमे
२०४४ तमे संवत्सरे—

त्रिपाठीकरुणापतिः

**विद्या निवास मिश्र**

कुलपति

काशी विद्यापीठ वाराणसी ।

महाभाष्यसमीक्षणमिति शोधनिबन्धो मया समदर्शि। अत्र नवाह्निकं यावन्महाभाष्यस्य प्रदीपाख्यायां टीकायामुद्योताख्यायां चोपटीकायां ये केचन नूत्ना विचाराः पुरोनीताः तानधिकृत्य सम्यग् विमृष्टम्। नवाह्निके व्याकरणशास्त्रस्य सारभूतः पदार्थो व्यवारि, प्रदीपकारेण कैयटेन यत्र तत्र विवृतिरूपेण नवनवा उन्मेषा उपकल्पिताः। प्रस्तुते निबन्धे एतादृशां स्थलानां सूक्ष्मेक्षिकया पर्यालोचनं प्रस्तुतमिति महते सन्तोषाय। विशेषतः गुणादिपारिभाषिकाणां शब्दानां शास्त्रान्तरावधारणा अपि पुरस्कृत्य तुलनात्मको विमर्शः प्रास्तावीति साम्प्रतं समादृतान्तर्विद्यापरका पद्धतिरपि समनुसृता।

संक्षेपेण शोधनिबन्धोऽयं नवनवोन्मेषशाली शास्त्रमन्थनपरः कश्चन श्लाध्यः प्रयत्न इति निबन्धकारा डॉ० गिरीशचन्द्रत्रिपाठिनः साधुवादार्हा स्नेहाशिषां भाजनानि चेति विरम्यते।

**विद्यानिवासमिश्रः**

मार्गशीर्ष शु. १।२०४४ वि०

**डॉ० रामयत्न शुक्ल**

आचार्य (व्याकरण वेदान्त सांख्य, योग

अध्यक्ष--वेदवेदाङ्ग सङ्काय

सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

संस्कृतवाङ्मयमनादिकालतोऽविच्छिन्नं नित्यं नवनवायमानमति- चकास्ति। देशभेदेऽपि कालभेदेऽपि सामानमेवाभाष्यत। तदिदमस्य प्राशस्त्यमेतदीय व्याकरणविज्ञानाधीनम्। व्याकरणञ्च नानाविधं किन्त्वद्यत्वे पाणिनीयमेव बहुमन्यतेऽनेकगुणत्वात्। पाणिनिप्रणीताष्टाध्यायीग्रन्थस्यात्यन्तनिगूढार्थतया तदीयं हार्दं प्रकाशयितुं महामुनिः पतञ्जलिर्महाभाष्यमभाषत। यदि नाम महाभाष्यं नाभविष्यत्, पाणिनेरभिप्रायो नानुभविष्यत। किञ्च महाभाष्याशयोऽपि सर्वसाधारणसुज्ञेयतां नागच्छत्। अत आसीत् तदीय गूढाशयविस्फोरणमावश्यकमिति समये एव डॉ० गिरीशचन्द्रत्रिपाठिमहोदयेन विदुषा विचिन्त्य विशिष्टप्रतिभासनाथेन महाभाष्यसमीक्षणमिति विषयमाधारीकृत्यानुसंहितम्। अत्रानुसन्धाने प्रदीपोद्योतयोरपि सूक्ष्मार्थानामनुस्फोरणं छात्राणामध्यापकानामुपकारकम्, व्याकरणशास्त्रोपबृंहणार्थञ्च साधुभविष्यतीतिग्रन्थमेनं निरीक्ष्यादरभावमादधानोऽस्य सुप्रचाराय कीर्त्यनुवृत्तये च भवानीनाथं विश्वनाथं प्रार्थयते—

**रामयत्नशुक्लाः**

**१-११-८७**

# भूमिका

निखिलेऽप्यवनितलेऽस्मिन् समस्तस्यापि संस्कृतवाङ्मयहर्म्यस्य सिंहद्वारभूते व्याकरणशास्त्रे यथोत्तरं मुनीनां प्रामाण्यमित्याभाणकं सर्वथा नाविदितमेव विद्यावताम्। उक्तप्रामाण्ये उत्तरतमाऽवधिभूतो भगवान् पतञ्जलिरेव। तस्य ग्रन्थग्रन्थिमाश्रित्य विरच्यमानेऽस्मिन् ग्रन्थे शास्त्रचर्चैवापेक्षते, तथाऽपि भगवतः पतञ्जलेः, प्रदीपकारस्य श्रीकैयटस्य, किञ्चोद्द्योतकारस्य महामहोपाध्यायस्य श्रीनागेशभट्टस्य चैतिहासिकतथ्योल्लेखोऽपरिहार्य इति कृत्वा प्राप्तप्रसङ्गतया समासतः समुपस्थाप्यते—

**महाभाष्यकर्तुर्भगवतः पतञ्जलेर्जीवनवृत्तं महाभाष्यञ्च—**

भगवान् पतञ्जलिर्महाभाष्यं निर्माय व्याकरणशास्त्रस्य महान्तमुपकारमकरोत्। महामुनिपाणिनिप्रणीताया अष्टाध्याय्या गाम्भीर्यं दुर्बोधत्वञ्चासीत्। महाभाष्येण तस्याः सौगम्यं सर्वजनसुज्ञेयत्वञ्च समजनि। पतञ्जलेर्न किल केवलव्याकरण एवाधिकारः किन्तु योगशास्त्रे वैद्यकशास्त्रेऽपि तथैव निर्बाधोऽधिकार आसीत्। तदेतद् सर्वम्--

'योगेन चित्तस्य पदेन वाचा, मलं शरीरस्य तु वैद्यकेन।
योऽपाकरोत् तं प्रवरं मुनीनां, पतञ्जलिं प्राञ्जलिरानतोऽस्मि॥'

इत्यनेन श्लोकेन व्यज्यते। योगसूत्रनिर्माणद्वारा चित्तस्य, महाभाष्यनिर्माणेन वाचां, वैद्यकशास्त्रनिर्माणेन च शरीरस्य मलापनोदनद्वारा लोकं भृशमुपाकरोति। सोऽयं पतञ्जलिः कस्मिन् देशे कस्मिँश्च काले भारतभुवमलञ्चकार इति जिज्ञासा तन्निर्मितमहाभाष्यस्यान्तरङ्गपरीक्षया शाम्यति।

व्याकरणशास्त्रेतिहासकारो युधिष्ठिरमीमांसकीः कथयति यत् श्रीपतञ्जलिरयं काश्मीरदेशस्थ आसीत् तेषामिदं कथनं यत् 'अभिजानासि देवदत्त कश्मीरान् गमिष्यामः। तत्र सक्तून् पास्यामः' इत्याद्युदाहरणैः काश्मीरगमनोत्कण्ठायाः असकृत्सङ्केतो मिलति, तेन च तेषां तद्देशस्थता सिध्यतीति। किन्तु पश्चाद्वर्तिनः पं० बलदेवोपाध्यायादय इतिहासकारा अस्य निर्णयस्य औचित्यं न स्वीकुर्वन्ति। तेषामयमभिप्रायो यत् काश्मीरं जिगमिषुः स एव भवति यः काश्मीरे न निवसति। विद्याध्ययनार्थं छात्राः, आर्यावर्तात् सर्वदा शारदापीठं गच्छन्तिस्म। काशीमण्डलस्य छात्रः सक्तुपानस्य तथा ओदनस्य लुब्धो भवति। अत एव पूर्वोक्तकथनेन काश्मीरयात्रायां सक्तुपानस्य ओदनभोजनस्य च प्रलोभनमुपस्थाप्यते।

पतञ्जलेः परिज्ञातं भौगोलिकं क्षेत्रं भारतवर्षस्य पूर्वोभागोऽस्ति, यः काश्याः सम्बद्धो वर्तते। स मथुरा-साकेत-कौशाम्बी-पाटलिपुत्राणां सम्यग् ज्ञाता वर्तते। महाभाष्यवर्णिताचारविचारौ विशेषतोऽनेनैव देशेन सम्बद्धौ प्रतीयेते। तद् युगस्य प्रतिनिधिर्मनुष्यो देवदत्तोऽस्ति। स देवदत्तो दध्योदनस्य लिप्सुः सक्तुपानस्य चाभ्यासी वर्तते। धान्यानां (व्रीहीणां) भेदानां परिचयः महाभाष्ये भृशं मिलति। मगधदेशे भवानां सुगन्धितशालीनां, व्रीहीणां, नीवाराणाञ्च सङ्केतोऽनेकशः प्राप्यते। सक्तुपानपरम्परायाः भूयान् उल्लेखोऽस्ति, यः सक्तुः प्रायो यवैर्निर्मीयते। दधिमिश्रिताः सक्तवो दधिग्रन्थपदेन तथोदकमिश्रिताः सक्तव उदमन्थशब्देन कथयन्तेस्म। गुडरसेन पक्वाधानाः गुडधानापदेन तथा "तिलकूटः" पललपदेन कथयन्तिस्म। ब्राह्मणभोजने दधिपरिवेषणस्य प्रचलनमासीत्, यदर्थसिद्धेरारम्भः मन्यतेस्म, यथा "दधिभोजनमर्थसिद्धेरादिः"।[1]

एतावदेव नह्यपितु कृषिप्रचारस्य समस्तं भाष्यसम्मतं वर्णनमद्यापि प्रत्यक्षीकर्तुं शक्यते। अस्तु, उक्तकथनैरिदं सिद्धयति यद् भगवान् भाष्यकारः काशीमण्डलीय आसीद् न तु काश्मीरवास्तव्यः।

अन्ये "गोनर्दीयस्त्वाह" इत्याधारेणास्य जन्मभूमिः गोनर्दमिति कथयन्ति। गावो नर्दन्ति यस्मिन् स गोनर्ददेशः इति व्युत्पत्त्या आधुनिको गोंडाजनपदः सम्भाव्यते। महाभाष्यानुशीलनेनास्य प्रौढग्रन्थस्य रचनाकाल-विवरणं मिलति। पतञ्जलिः पुष्यमित्रेण स्वयं यज्ञसम्पादनस्योल्लेखमकरोत् तथा इमां क्रियां "प्रवृत्तस्य विरामः" इति कथयित्वा वर्तमानकालिकीमकथयत्, यथा—"प्रवृत्तस्य विरामे शासितव्या भवन्ती इहाधीमहे, इह वसामः, इह पुष्यमित्रं याजयामः"।

पुष्यमित्रः कण्ववंशस्य संस्थापको ब्राह्मणराजा आसीत्, यो बौद्धमतानुयायीनां मौर्याणाञ्च नाशं कृत्वा स्ववंशस्य स्थापनामकरोत्। एवञ्च दिग्विजयसन्दर्भे वारद्वयमश्वमेधयज्ञमकरोत्। इयं घटना ई० पू० द्वितीयशत्या उत्तरार्द्धभागस्य वर्तते।

लङ्लकारव्याख्यायां भाष्यकारो ब्रूते यल्लोकविज्ञातं परीक्षा यद्वस्तु वर्तते तद्यदि प्रयोक्तृदर्शनस्य विषयस्तदा लङ्प्रयोगो जायते—"परोक्षे च लोक-विज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः। अरुणद् यवनः साकेतम्, अरुणद् यवनो माध्यमिकाम्" इति। फलतो यवनद्वारा साकेतस्य, चित्तौरसमीपवर्तिन्याः माध्यमिकायाश्चावरोधघटना पतञ्जलिजीवनकालेऽभूत्। आक्रामकोऽयं यवनो 'मीनाण्डर' इति ग्रीकनाम्ना प्रख्यात आसीत्, यो बौद्धः सन्नपि "मिलिन्दः" कथ्यते स्म।

---

१. म० भा० ६।४।१६१

स पञ्चनदस्य, अफगानिस्तानस्योपरि १४२ ई० पू० समीपे शासनं करोति स्म। अस्तु, महाभाष्यस्य रचनाकाल ई० पू० द्वितीयशत्या मध्यभागोऽथवा १५० ई० पू० समीप एव मन्तुं शक्यते। शुङ्गकालीन-वैदिकधर्मस्याभ्युदयेन सह वेदज्ञानोपयोगिनो व्याकरणग्रन्थस्य महाभाष्यस्य रचना सङ्गच्छते।

तस्मादुपर्युक्तविचारेण सिध्यति यत् पुष्यमित्रकाल एव भगवतः पतञ्जलेः काल इति।

श्रीपतञ्जलिलिखिताः ग्रन्थाः—(१) व्याकरणमहाभाष्यम्, (२) योगसूत्रम्, (३) चरकसंहिता च।

भाष्यवैशिष्ट्यम्--

अयं ग्रन्थो व्याकरणविषयकप्रौढपाण्डित्येन गम्भीरार्थविवेचनेन पूर्णानुशीलनेन व्यापकदृष्ट्या च अनुपमो वर्तते। अन्यदार्शनिकसम्प्रदायस्य मूलविवेचका ग्रन्था भाष्यपदेनाभिधीयन्ते, किन्तूक्तवैशिष्ट्येनैव पतञ्जलेरयं ग्रन्थो महाभाष्यपदाभिधेयतया मण्डितो भाति।

अयं ग्रन्थो भाषादृष्ट्या सरलः सुबोधस्तथा उदाहरणप्रचुरतया नितान्तं रोचको वर्तते। इदं महाभाष्यमाह्निकैर्विभक्तम्, एकदिनेन अधीतोंऽश आह्निकपदेनोच्यते। अस्य ग्रन्थस्य शैली कथोपकथनाभ्यां युक्ता संवादप्रचुरा आस्ते। अनया च शैल्या गुरुः शिष्येण विद्याभ्यासं पाठान् हृदयङ्गमाञ्च कारयति। एवं प्रतीयते यद् ग्रन्थकारः स्वपाठकान् प्रत्यक्षस्थितान् कृत्वा पाठयति। इदं महाभाष्यं केवलो ग्रन्थो नास्त्यपितु, स्वयमेको ग्रन्थालयो वर्तते। अनेन ग्रन्थरत्नेन तस्य युगस्य आचारविचारस्य, धर्माधर्मस्य, भोजनभाजनस्य, कृषेर्वाणिज्यस्य साहित्यस्य दर्शनस्य च प्रभावपाठकानां हृत्पटलेऽङ्कितो भवति। महाभाष्यस्य संवादशैली, तस्य स्वगतं वैशिष्ट्यं भाष्यलक्षणञ्च—

"सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥" इत्यनेन साधु स्फुटति।

महाभाष्यं न केवलं व्याकरणनिबन्धः, अपि तु सर्वाण्यपि ज्ञातव्यानि विषयजातानि स्थाने स्थानेऽत्र सपरिकरं विवेचितानि। लौकिका व्यवहाराः, प्राक्तना इतिहासाः, आवश्यका धर्माः, दर्शनानां सिद्धान्ताः, गूढतमानि विज्ञानानि चेति सर्वमेतन्महाभाष्ये कृतपरिश्रमैः सम्यक् परिच्छेत्तुं शक्यते।

न च पतञ्जलेरिव सरलगम्भीरा प्राञ्जलतमा भाषाऽपि कस्याप्यन्यस्य ग्रन्थकृतो भाग्ये विधिना निवेशिता। तस्मान्महाभाष्यमिदमलौकिकं वस्तु संस्कृतवाङ्मय-

मन्दिरस्य सुवर्णकलशायमानमित्यत्र न सन्देहः। महाभाष्येऽर्थगर्भाः, एवंभूताः शब्दाः, प्रयुक्ताः सन्ति, येषां कृते सम्पूर्णं वाक्यमावश्यकं भवति। तेषु कतिपयशब्दा उदाहरणरूपेणाधो निर्दिश्यन्ते—

शब्दगण्डुमात्रम्, काकपेयानदी, वहं लिट्, शीतकः, पुष्करः, इत्येवमादयः।

कासाञ्चिद् सूक्तीनामुदाहरणानि यथा-(१) द्विबद्धं सुबद्धं भवति, (२) बुभुक्षितं न प्रतिभाति किञ्चित्, (३) आम्रान् पृष्टः कोविदारानाचष्टे, (४) पर्याप्तो ह्येकः पुलाकः स्थाल्या निदर्शनायेत्यादिः।

पतञ्जलिरयं भगवान् शेषावतार आसीदिति सर्वसम्मतः पक्षः, अयं भगवान् वेदस्य विशेषतया मर्मज्ञः प्रतीयते। तेषां वेदाध्ययनं गभीरं मौलिकञ्चासीत्। इदं ज्ञानं महाभाष्यस्य पस्पशाह्निके उद्धृतेन वैदिकमन्त्रचतुष्टयेन प्रतिज्ञायते यथा—[1] "चत्वारि शृंगाः, [2]चत्वारि वाक् परिमिता, [3]उतत्वः पश्यन्, [4]सक्तुमिव तितउना पुनन्ति—इत्यादिः अन्येऽपि मन्त्राः अनुष्ठानवाक्यानि च प्रसङ्गतो निर्दिष्टानि वर्तन्ते। भगवान् पतञ्जलिर्वेदस्य, वैदिकशाखायाः, वैदिकचरणस्य परिचयाय वेदाध्ययनप्रणाल्या चोपरि प्रचुरां सामग्रीं महाभाष्ये विहितवान्। निस्सन्देहं श्रीपतञ्जलिः संस्कृतवाङ्मयनिबद्धसर्वविषयपरिसुस्नातः प्रखरः प्रतिभाशाली, श्रेष्ठोऽधिष्ठाता च वर्तते।

वाक्यपदीयद्वितीयकाण्डस्थकारिकाभिरस्य महाभाष्यस्य वर्णितं महत्त्वं सम्यक् समर्थितं भवति। तेन तस्मिन्नपि कालेऽस्य ग्रन्थरत्नस्य कियन्महत्त्वमासीदित्यप्यनुपदमभिव्यज्यते। परन्तु तदनवगमात् सङ्ग्रहग्रन्थ इव महर्षेरिदं महाभाष्यमपि विलुप्तं सञ्जातम्। चन्द्राचार्यद्याचार्यादिभिरस्योद्धारस्य कथा कल्हणकथनेन ज्ञायते। कल्हणस्य राजतरङ्गिणीग्रन्थप्रसङ्गात् प्रतीयते यदेतन्महाभाष्यं पुनर्द्वितीयवारमपि विलुप्तं सञ्जातम्। अनन्तरं क्षीराचार्यप्रेरणया तदीयाध्यक्ष्य एव बहिर्देशत आहूतैः पण्डितवर्य्यैर्जयापीडस्तस्योद्धारं कृतवान्। स्वकीयमण्डले प्रचारितश्च। अध्ययनेन प्रतीयते यदस्मिन्नेवावसरे कैयटो भाष्यव्याख्याग्रन्थस्य प्रदीपनामकस्य रचनां कृतवान्। तस्य समक्षं महाभाष्यस्य भर्तृहरिकृतवाक्यपदीयग्रन्थस्य विद्यमानत्वेऽपि महाभाष्यग्रन्थस्य समुचिताऽखण्डा विस्तृता च काचिद्व्याख्या नासीदिति सम्भाव्यते। तथाऽपि—अन्यत्रोपलब्धमहाभाष्यपाठादिभिर्मेलनं कृत्वा समालोचनञ्च कृत्वा कैयटेन प्रदीपग्रन्थो रचितः। यतो हि स्थाने स्थाने नष्टः पाठ इत्येवमुल्लिखति।

---

१. ऋ० ४।५८।३  
२. ऋ० १।१६४।४५  
३. ऋ० १०।७१।४  
४. ऋ० १०।७१।२

**महाभाष्यग्रन्थस्य दार्शनिकः पक्षः—**

महाभाष्यग्रन्थस्य समालोचनाप्रसङ्गे तद्ग्रन्थस्य दार्शनिकपक्षोपरि दृष्टिपातोऽवश्यं करणीयो भविष्यति । सर्वेषां न्यायबीजानां महाभाष्ये निबन्धनमित्यनुसृत्य महाभाष्ये दार्शनिकपक्षस्यैव प्राबल्यमस्तीति वक्तुं शक्यते । अत्र सर्वेषामितिशब्देन सङ्ग्रहग्रन्थसङ्गृहीतन्यायबीजानामित्येवार्थः सम्भाव्यते । यतो हि तत्र सङ्ग्रह एवैतादृशा दार्शनिकविचारा विद्यन्ते स्म इति श्रूयते । व्याकरणस्य रचनात्मकभूमिकां शब्दसाधुत्वप्रणालीं वाऽतिक्रम्य दर्शनतत्त्वैः सह सम्मेलनं कृत्वा समेषां न्यायबीजानां सुललितं वर्णनमनुपदमेवावलोकयितुं शक्यतेऽस्मिन् महाभाष्ये । तेनाऽऽलोचनेन प्रतीयते यदयं शब्दः कथं साधु भवतीति न केवलं मुख्यं कार्यं व्याकरणशास्त्रस्यास्ति, अपितु अस्य शब्दस्य केन रूपेण व्यवहारो भवितुमर्हति किमर्थं वा ।

एषा परम्परा व्याडिनिर्मिताऽस्ति । तत्रावश्यमेव कात्यायनस्यापि सहयोगोऽस्ति । यतो हि तदीयवार्तिकेषूपरि वर्णितानां तत्त्वानां सम्यग् दर्शनं भवति । तथाऽपि तयोराचार्ययोर्भावनामभिलक्ष्य स्वाऽप्रतिमप्रतिभया सुललितवर्णनचातुर्येण च सम्पोषणं कृत्वा महात्मना पतञ्जलिना महाभाष्यरूपेणोपस्थापितमस्माकं समक्षम् तस्मात्पाणिनिव्याडिकात्यायनसमर्थित-व्याकरणदर्शनस्याधायकरूपेणाद्यपि महाभाष्यग्रन्थोऽन्यतम एव विद्यते । तत्र निदर्शनरूपेण कानिचिद्दार्शनिकतत्त्वानि वर्ण्यन्ते ।

**शब्द :**

'कः शब्द इति' इति प्रश्नं कृत्वा येनोच्चारितेन सास्नालाङ्गूलककुद्खुरविषाणिनां सम्प्रत्ययो भवतीत्युत्तरदानेन द्रव्याकृतिध्वन्यादीनां शब्दत्वस्य खण्डनं कृत्वा स्फोट एव शब्द इति सिद्धान्तितम् ।

**शब्दार्थसम्बन्धनित्यता—**

स च स्फोटरूपः शब्दो वैयाकरणानां सर्वस्वभूतो नित्य एवेति सिद्धान्तितं तत्र महाभाष्ये—"कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्-सिद्धे शब्देऽर्थे सम्बन्धे चेति प्रश्नोत्तराभ्याम् । एवं हि शब्दस्य अर्थस्य तयोः सम्बन्धस्ये च नित्यतायाः स्पष्टरूपेणोद्घोषणा च कृता । कथं ज्ञायते यत्कूटस्थेष्वविचालिभावेष्विति प्रश्नोत्तराभ्यां च नित्यत्वस्यापि स्वरूपं प्रकटीकृतम् ।

**अपशब्दधर्मौ—**

"अथवा भूयानधर्मः प्राप्नोति । भूयांसो ह्यपशब्दाः । एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः क्रियते" इत्यादिमहाभाष्यप्रसङ्गालोचनेनापशब्दस्वरूपस्य तेन जायमानस्याधर्मस्य, शब्दस्वरूपस्य तेन जायमानस्य धर्मस्य च साधुस्वरूपस्य स्पष्टतया सुगमतया च परिचयो जायते ।

अपि च सध्वसाधुव्यवस्था अखिलब्रह्माण्डसंभरणप्रवाहनित्यता–इव प्रमाणिता भवति। नित्यानित्यव्यवस्थायाः स्थापनमपि नातीव सुकरं कार्यमिति सुसिद्ध्यति।

**वर्णानामर्थवत्ता—**

एकवार्णिकशब्दानामर्थभावनायाः शब्दसारूप्यस्य च विद्यमानतायामप्यागम्यमानानामर्थान्तरादीनां समस्या व्यक्तविचारमालोचयन्नेवमनुभवति पतञ्जलिर्यद् वर्णानामर्थवत्ताविषये किमपि निश्चितरूपेण वक्तुं न शक्यते इत्येषैव वास्तविकी स्थितिर्विद्यते वर्णानाम्। यतो हि ते विभक्ताऽपि भवन्ति अभक्ताऽपि भवन्ति, लुप्ताः परिवर्तितास्यापि भवन्ति। एतासु स्थितिषु वर्णानामर्थोपरि क्वचित् प्रभावो भवति, क्वचिन्न भवति। केचिदर्थवन्तोऽन्ये स्थितिवशादनर्थका इत्येव वस्तु स्थितिरिति स्पष्टमेव सिद्धान्तितं महाभाष्ये।

**व्याकरण-शब्दार्थः**

यद्यपि व्याक्रियन्ते साधुशब्देभ्यः पृथक्कृत्य व्युत्पाद्यन्तेऽसाधुशब्दा अनेनास्मिन्नित्येवं व्याकरणशब्दार्थो वक्तुं शक्यते, तथापि पस्पशाह्निके महाभाष्ये सूत्रं व्याकरणमिति दार्शनिकं तर्कसंगतं वा लक्षणं स्पष्टमेव निगदितमस्ति। यद्यपि लक्ष्यलक्षणसमुदाय एव उदाहरणानि प्रत्युदाहरणानि वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति। व्याख्यानञ्च विगृहीतं सूत्रमेति सूत्रं व्याकरणं सिद्ध्यति, मन्दबुद्धीनां कृत एव, उदाहरणादीनां भेदो भवति। आचार्यस्य तु सूत्रत एव तत्सर्वं भवति। अतः सर्वभावसमन्वितं सूक्ष्मं परिशुद्धञ्च व्याकरणस्य लक्षणं सूत्रमेव सिद्ध्यति।

**ध्वनिविभाजनम्—**

उत्तरभूयः वर्णसमानैकदेशाः वर्णान्तरसमानाकृतयः, वर्णतुरीयभागः, अर्धैकाराधौकारावित्यादि विभिन्नप्रसङ्गेभ्यो वर्णविभाजनस्य वस्तुस्थितेः परिचयो भवति।

एवं हि-अनेकानि दार्शनिकतत्त्वानि सलक्षणानि सव्याख्यानानि चात्र महाभाष्ये स्पष्टमनायासेनैवोपलभ्यन्ते। यानि हि पश्चाद् भाव्यमानानां वैयाकरणदार्शनिकग्रन्थानां सर्वथाऽऽधारभूतानीति निश्चयेन वक्तुं शक्यन्ते। वैयाकरणदार्शनिकशिरोमणीनां श्रीभर्तृहरिपादानां दार्शनिकग्रन्थोऽनुपदमेव महाभाष्यमनुवर्ततीति को विपश्चिन्न जानाति। को हि वैयाकरणदार्शनिकग्रन्थो योऽस्य वाक्यपदीयग्रन्थस्याधमर्ण्यं न स्वीकरोति।

**प्रदीपकारकैयटः—**

भर्तृहरेरनन्तरं कैयटेन समो महाभाष्यस्य मर्मज्ञोऽपरो वैयाकरणो नाभूत्। अयं कैयटः काश्मीरवास्तव्य उवटमम्मटयोरग्रजोऽभूत्, किन्त्वयं निर्णयो

भ्रामकोऽस्ति। प्रदीपस्य पुष्पिकया ज्ञायते यदस्य पितुर्नाम जैयटोपाध्याय आसीत्। पदमञ्जर्याः प्रदीपस्य च तुलनाकरणेन प्रतीयते यत्कैयटो हरदत्ताऽपेक्षया पूर्वं आसीत्। पदमञ्जर्यां प्रदीपमतस्य बहुशः खण्डनमक्रियत। पदमञ्जरीकारो हरदत्तो "भाष्यं व्याचक्षाणाः" इति कथयित्वा भाष्यस्य व्याख्यां प्रति स्पष्टं सङ्केतमकृत।[1] सर्वानन्दाष्टीकासर्वस्वस्य रचनां सं० १२१५ (११५८ ईशवीये) कृतवान्, सर्वानन्दो मैत्रेयस्य, मैत्रेयः स्वधातुप्रदीपे धर्मकीर्तेः, धर्मकीर्तिश्च पदमञ्जरीकारस्य हरदत्तस्य चोल्लेखमकार्षीत्। प्रतिग्रन्थकारं परस्परं पञ्चविंशतिवर्षैः व्यवधानं यदि स्वीक्रियेत तर्हि कैयटस्य समय ईशवीय एकादशशताब्द्याः (१००० ई०–१०५० ई०) पूर्वार्द्धं स्वीकर्तुं शक्यते।

महाभाष्यस्य प्रदीपो नाम नितान्तप्रौढो ग्रन्थोऽस्ति, अस्य सहायतां विना महाभाष्यस्य रहस्यं ज्ञातुं नितान्तं कठिनमस्ति। काश्मीरवैयाकरणानां सम्पूर्णं वैदुष्यमेतत्प्रदीपाश्रयणेनैव अस्माकं समक्षं प्रतिफलति। कैयटात्पूर्वैराचार्यैर्महाभाष्यस्य व्याख्या लिखिताः, तासां सर्वासां सारसङ्कलनं कृत्वा अनेन स्वीयो महत्त्वपूर्णो ग्रन्थोऽलेखि।

भर्तृहरेर्महाभाष्यदीपिकापरनामकस्य त्रिपदीग्रन्थस्यानन्तरं पाणिनीयव्याकरणशास्त्रमाधारीकृत्य बहवो ग्रन्था निर्मिताः। अस्य युगस्य काशिकाग्रन्थो महानिधिरिति विश्रुतः। एतदाधारीकृत्य पश्चान्निर्मितानां न्यासादिग्रन्थानामवलोकनेन प्रतीयते यदस्मिन् काल एकवारं पुनर्भर्तृहरेस्त्रिपदीग्रन्थप्रभावेण भाष्यपरम्परोच्छिन्नेव सञ्जाता, वृत्तिपरम्परा च सम्प्रसारभूमिमागता। अस्मिन् युगे नूतनानां व्याकरणग्रन्थानां निर्माणोऽप्यारब्धः। एतेषामाधारश्चान्द्र इव पाणिनीव्याकरणस्य सर्वस्वभूतस्य महाभाष्यस्य सुनिर्गतमधुररस एवाऽऽसीत्। कातन्त्रव्याकरणञ्चापरामेव धारां सूचयतिस्म। तेषु च बह्वष्टीका ग्रन्था अपि निर्मिताः सञ्जाताः। एवं त्रि-चतुःशतकपर्यन्तं वृत्तिपरम्परया भाष्यपरम्परोज्झिता सञ्जाता। एतदनन्तरमयं कैयटो भाष्यपरम्परामारब्धवान्। कैयटस्याऽऽधारग्रन्थावतिविलुप्तौ महाभाष्यत्रिपदी वाक्यपदीयञ्च विद्येते। कैयटप्राक्तनानां वैयाकरणानां महाभाष्यप्रतिलिपिकाराणां वा प्रमाद एव महाभाष्यकृते महद्ग्रहणं सञ्जातम्। अतोऽनन्तरं कैयटप्रादुर्भावस्य तत्प्रयासस्य च सर्वथा साफल्यं सिद्धम्। अयं हि स्वनवीनरचनया स्वाप्रतिमप्रतिभया च भाष्यपरम्परां लुप्तप्रायां पुनरुज्जीवितवान्। तदीयातीवतपसः प्रभाव एवायं यत्तदारभ्य महाभाष्यपरम्पराद्यावध्यनवरुद्धा प्रचलति।

---

१. अन्ये तु हे त्रप्वित्ति प्राप्ते हे त्रपो इति भवतीति भाष्यं व्याचक्षाणा नित्यमेव गुणमिच्छन्ति। पदमञ्जरी ७ ।१।७२–म० भा० प्र०–हे त्रपु हे त्रपो इति–हे त्रपु इति-हे त्रपो इति भवतीत्यर्थः।

कैयटद्वारा—एतत् परम्परोद्धारविषये प्रेरकमेकं कारणमवलोक्य यत् कैयट-समकालीनः कल्हणो जयापीडप्रेरणया महाभाष्यस्य जीर्णोद्धारस्य विषये विस्तृतरूपेणालिखत् । एतत् प्रकरणं तादृशमेवासीद्यथा चान्द्रव्याकरणप्रणेतुः प्रेरणमभिमन्युद्वारा सञ्जातम् । अभिमन्युर्विलुप्तस्य भ्रष्टस्य च महाभाष्यस्योद्धारार्थं यथा चन्द्राचार्यस्याध्यक्षे वैयाकरणानां गोष्ठीं निर्मापयतिस्म तथैव जयापीडेनापि महाभाष्यस्योद्धारार्थं कैयटः प्रेरितः । बौद्धवैयाकरणानां प्रमादवशात् महाभाष्यपाठस्य भ्रंशनं सञ्जातमिति विदुषामनुमानमस्ति । अनेन प्रसङ्गेन स्पष्टमेव प्रतीयते यन्महाभाष्यस्य मूलपाठोऽपि सर्वथा भ्रष्टः सञ्जातः । भर्तृहरिकृतत्रिपदी ( महाभाष्यदीपिका ) ग्रन्थसाहाय्येन कृतमहाभाष्यसंस्कारमनुलोकरुचिमनुमोदयन् अतिसंक्षिप्ता प्रदीपनाम्नी महाभाष्यव्याख्या लिखिता । प्रदीपग्रन्थं प्रदीपमहाभाष्यम्, महाभाष्यप्रदीपो वेत्यपि व्यवहरन्ति जनाः । भर्तृहरेस्त्रिपदीग्रन्थस्यानन्तरं परवर्तिव्याकरणस्य चिन्तनाधारभूतः कैयटनिर्मितः प्रदीपग्रन्थः स्वकीयां मौलिकतामपरित्यजन्निवास्माकं पुरस्तिष्ठति । तथाप्यत्र भर्तृहरेर्मतस्य सारोऽप्यविकलरूपेण समाविष्ट इत्यत्र नास्ति शङ्कालेशावशेषः । यथैतान्निदर्शनरूपेण किञ्चिदग्रे निरूप्यते ।

(१) महाभाष्यस्योद्घाटकमधिकारसूत्रम् "अथ शब्दानुशासनम्" इत्येतदधिकारार्थे इत्युक्त्वा पतञ्जलिना अष्टाध्यायीसूत्रवद् वार्तिकसूत्रवद् वा व्याख्या क्रियते । यद्यप्येतेषामेष स्वभाव एव यत् स्वकीयमहाभाष्यसूत्राणामपि पाणिनिकात्यायनसूत्रवदेव व्याख्यानं कुर्वन्ति सर्वत्र । भर्तृहरेस्त्रिपदीग्रन्थस्याऽऽरम्भस्य कानिचित्पृष्ठानि विलुप्तानि तेनास्य मतस्य सिद्धान्तस्वरूपं नागच्छति पुरः । अत्र प्रदीपमारम्भयन् कैयटस्याऽऽरम्भवाक्यमेवैतादृशं येन महाभाष्यस्य "अथ शब्दानुशासनम्" इति वाक्यांशस्याऽऽधिकारिकता प्रामाणिकता च तथा हि—भाष्यकारो विवरणकारत्वाद् व्याकरणस्य साक्षात् प्रयोजनमाह—इति वदति कैयटः । तदनु च स्ववाक्यं व्याख्यातुं तदवयवमथशब्दं तावद् व्याचष्टे इति वदति । पश्चाच्च—अधिकारः प्रस्तावः, द्योत्यतेनास्य प्रयोजनमित्यर्थः । निपातानाञ्च द्योतकत्वं वाक्यपदीये निर्णीतम्—इति च वदति । तथा चैतद् वाक्यं न पाणिनीयमपि तु भाष्यकारकृतमेवेति सिद्ध्यति । तथा च भर्तृहरेराश्रयता हि स्वतः सिद्ध्यति ।

(२) त्रिपदीग्रन्थस्योपलब्धांश एवमारभ्यते—"पनार्थवैदिकानां पृथगुपादानम् । प्राधान्यस्यापि सामान्यन्तर्भूतस्य पृथगुपदेशो दृश्यते, ब्राह्मणा आयाता वसिष्ठोऽप्यायात इति । अथवा लौकिकानामित्येवमुक्ते लौकिकशब्दं सामान्यमपि विशेषेण प्रतिपद्यते । भाषाशब्दानामेवेदमनुशासनम्, न वैदिकानाम् । यस्मात्ते हि नियतसंवेशाः प्रतिनियतप्रातिशाख्या दृष्टानुविधित्वात्तेऽिचति" । एनं प्रसङ्गमत्यन्तेन संक्षेपेणातिसरलतया चाक्षरशोऽनुवदति कैयटः—"वैदिकानामपि लौकिकत्वे

प्राधान्यख्यापनाय पृथगुपादानम् । यथा ब्राह्मणा आयाता वसिष्ठोऽप्यायात इति वसिष्ठस्य । एषां तु प्राधान्यं यत्नेनापभ्रंशपरिहारात् । अथवा भाषाशब्दानामेव लौकिकत्वमितिभेदेन निर्देशः । तत्र लोके पदानुपूर्वीनियमाभावादिति" द्वयोरुपर्युक्त-प्रसङ्गयोः समीक्षणेन भर्तृहरिराधारः कैयटस्य महाभाष्यव्याख्याप्रसङ्गे इति स्पष्टमेव प्रतीयते ।

(३) "नेत्याह, आकृतिर्नाम सा" इति महाभाष्यस्य—आकृतिरिति तत्संस्थानम् । किन्तर्हि जातिरेव । ... आक्रियतेऽनयेत्याकृतिः आक्रियते इति भिद्यते पदार्थान्तरेभ्य इत्याकृतिः" इति तत्रत्यस्त्रिपदीग्रन्थः । तत्र—" आकृतिः—जातिः संस्थानञ्च आक्रियते–व्यवच्छिद्यते स्वाश्रयोऽनयेति" इति व्याख्यानं करोति कैयटः । एवमुपर्युक्तप्रतिज्ञातो विषयः सर्वथा समर्थितो भवति ।

(४) "सम्प्रति द्रव्यादिषु निरस्तेषु द्वयमपि स्थितम् ।......इत्यतः पृच्छति—कस्तर्हि शब्द इति" ? इति त्रिपदीग्रंथस्य व्याख्यानं तथैव करोति कैयटः । यथा—"द्रव्यादिषु निरस्तेषु पृच्छति कस्तर्हीति ।" इति ।

एवमुपर्युक्तैर्निदर्शनैः स्पष्टी भवति यदेकत्र भाष्यस्य भर्तृहरिसम्मतस्यार्थस्य प्रकटीकरणमुद्देश्यमस्ति; तत्रैव तस्य संक्षेपकरणमपि तथैवोद्देश्यभूतं प्रदीपकारस्य कैयटस्यास्ति ।

महत्त्वपूर्णस्य भाष्यप्रदीपस्य कतिपयटीकाकाराः— चिन्तामणिः नागनाथः, रामानन्दः सरस्वती, ईश्वरानन्दः सरस्वती, अन्नं भट्टः, नारायणशास्त्री, नागेशभट्टः मल्लययज्वा, रामसेवकः, नारायणः, हरिराम इत्यादयः सन्ति । एभिः टीकाकारैः प्रदीपस्य श्रेष्ठत्वं गाम्भीर्यत्वञ्च गम्यते ।

**वैयाकरणशिरोमणिः श्रीनागेशः—**

श्रीमहामहोपाध्यायो नागेशभट्टो महाराष्ट्रियो ब्राह्मण आसीत्, अस्यापरनाम नागोजिभट्टोऽप्यासीत् । अस्य पिता श्रीशिवभट्टः, तथा माता सतीदेवीति ।

लघुशब्देन्दुशेखरस्य मङ्गलाचरणस्य, ग्रन्थसमाप्तौ "श्रीमदुपाध्यायोपनामकशिव-भट्टसुतसतीगर्भजनागेशभट्टविरचितलघुशब्देन्दुशेखरे–" इत्यादेरध्ययनेन विदितमिदं भवति यदस्य काऽपि सन्ततिर्नाभवत्, किन्तु श्रीबलदेवोपाध्यायादया एका कन्यका आसीदिति मन्यन्ते । काश्याः सिद्धेश्वरीक्षेत्रे (मुहल्ला इति) अस्य गृहमासीत् । अयं नव्यव्याकरणस्य प्रतिष्ठापको वर्तते ।

श्रीनागेशः साहित्यिकं जीवनं काश्यामेव व्यतीयाय तथा चात्रैव क्षेत्र-संन्यासेना-ग्रहीत् । जयपुरराज्यसंस्थापकेन महाराजजयसिंहेन अश्वमेधयज्ञे निमन्त्रितोऽपि सम्मिलितो भवितुं नाशकत् । कृष्णकविः "ईश्वरविलासकाव्ये" अकथयद् यदश्व-

मेधयज्ञ आषाढकृष्णद्वितीयायां सं० १७९९ (१७४२) ईशवीयतमे वर्षे जयपुरे समपद्यत। फलतः श्रीनागेशभट्टस्य समयः सप्तदशशताब्द्या अन्तिमो भाग अष्टादशशताब्द्याः पूर्वभागश्च (१६७५–१७४५ ई० वर्षे) स्वीकर्तुं शक्यते। श्रीनागेशस्योपनाम "काले" इत्यासीत्, महाराष्ट्रियपरम्परानुसारेणास्य सम्पूर्ण नाम "नागेशशिवभट्टकाले" इति भवेत्। प्रयागसमीपस्थ–शृङ्गवेरपुराधीशेन राज्ञा रामेणाऽयं सम्मानितोऽभूत्। अस्योल्लेखः तेन स्वयं कृतः।[1]

श्रीनागेशस्य वैदुष्यं चतुरस्रमभूत्। एतेन व्याकरणस्य, अलङ्कारशास्त्रस्य, धर्मशास्त्रस्य, दर्शनानाञ्च विषयेऽनेके महत्त्वपूर्णा ग्रन्थाः प्रणीताः, परन्तु मूलतोऽयं वैयाकरण एवासीत्, यथा सर्वजनानां प्रत्ययः। व्याकरणशास्त्रस्य मौलिकग्रन्थानां तथा टीकाग्रन्थानां च रचनया अयं लोकविश्रुतोऽभूत्। शब्देन्दुशेखरः, लघुशब्देन्दुशेखरः, उद्द्योतश्चैतस्य प्रख्याताः व्याख्याग्रन्थाः सन्ति। परिभाषेन्दुशेखरस्तथा मञ्जूषा–(बृहल्लघुपरमलघु) इत्येतत् विविधविशेषणविशिष्टा अस्य मौलिग्रन्था वर्तन्ते, यत्र व्याकरणस्य दार्शनिकसिद्धान्ताः विस्तरेण सह व्याख्याताः समालोचिताश्च। नव्यन्यायशैल्या अयं नव्यव्याकरणप्रतिष्ठापकतया सर्वत्र विख्यातोऽस्ति। एतद्ग्रन्थोपरिटीका–प्रतिटीकानां विशालं साहित्यं विद्यमानं वर्तते। एतेषां वैयाकरणानां प्रभावेण काश्याः ख्यातिः पण्डितगोष्ठीरूपेण अद्याप्यक्षुण्णा अस्ति।

**महामहोपाध्यायस्यान्या रचनाः—**

सापिण्डप्रदीपः (हस्तलिखितः) रचनाकालः १८०३ ईशवीयः, रसमञ्जरीप्रकाशः १७१२ ईशवीतः पूर्वम्, गुरुमर्मप्रकाशिका (रसगङ्गाधरस्य व्याख्या) रचनाकालः सम्भवतः १७०५ ईशवीतः पश्चात्, अशौचनिर्णयः (हस्तलिखितः) प्राप्तिस्थानम्–मुम्बईविश्वविद्यालयः, लिपिकालः १७२२ ईशवीयः।

**श्रीनागेशस्य वैशिष्ट्यम्—**

महामहोपाध्यायश्रीनागेशस्य वैशिष्ट्यं व्याकरणशास्त्रेऽनुपममासीत्। प्रौढग्रन्थानां रचनया स्वयुगेऽपि प्राचीनशास्त्राणां मर्मवेत्ता, विशिष्टवैदुष्यमण्डितः; पण्डितश्च मन्यते स्म। उद्द्योतद्वारा महाभाष्यस्य बृहच्छब्देन्दुलघुशब्देन्दुशेखराभ्यां च प्रौढमनोरमायाश्च गभीररहस्यानां पूर्णतोऽभिव्यञ्जनाय भृशं समर्थोऽस्तीत्यस्मिन् विषये विदुषां मतैक्यमस्ति। परिभाषेन्दुशेखरे विशेषानुशीलनद्वारा परिभाषाणां स्वरूपक्षेत्रयोः सम्यक् प्रतिपादनेन विषयं नवीनतया उपस्थापितवान्। इदानीन्तनव्याकरणयुगस्य सङ्केतः शेखरयुगशब्देन क्रियते तन्नानुचितम्। शेखरग्रन्थ एवं प्रचारितो वर्तते येन व्याकरणस्य मूलभूतग्रन्थमहाभाष्यस्याध्ययनाध्यापने अस्तङ्गत

---

१. याचकानां कल्पतरोररिकक्षहुताशनात्।
शृंगवेरपुराधीश-रामतो लब्धजीविकः॥

इवाभवताम्, शेखरस्याऽयं विजयः श्रीनागेशपण्डितस्य डिमडिमघोषः। यथार्थतया नागेशस्य वैयाकरणसिद्धान्तमञ्जूषैव पूर्णतया मौलिको ग्रन्थः, यः पाणिनीयदर्शनस्य विस्मृतं स्वरूपं विदुषां समक्षं पूर्णवैभवेन सह प्रस्तुतं कर्तुं कृतकार्योऽभूत्। व्याकरणस्य दर्शनत्वप्रतिष्ठार्थं श्रीनागेशस्य समस्तवैदुष्यस्य धारा प्राथम्येनोपस्थिता अभूत्।

**शिष्यपरम्परा—**

श्रीनागेशभट्टः महाभाष्यस्याध्ययनं भट्टोजिदीक्षितस्य पौत्रात् हरिदीक्षितात्, न्यायशास्त्रस्याध्ययनं रामरामभट्टाचार्यादकरोत्। अयं भट्टाचार्यः काश्यास्तद् युगस्य प्रख्यातस्तर्कवेत्ता आसीत्। नागेशस्य स्वगुरुं प्रति असीमा श्रद्धा आसीत्। श्रीरामरामस्यानुकम्पया न्यायशास्त्रस्य स्वगभीरज्ञानस्योपरि स्वमनसि विशिष्टो गर्व आसीत्। अस्य सङ्केतो लघुमञ्जूषायां यथा—

'अधीत्य फणिभाष्याब्धिं सुधीन्द्र–हरिदीक्षितात्।
न्यायतन्त्रं रामरामद् वादिरक्षोघ्नरामतः॥
दृढस्तर्कोऽस्य नाभ्यास इति चिन्त्यं न पण्डितैः।
दृषदोऽपि हि संतीर्णाः पयोधौ रामयोगतः॥' इति।

अस्तु शाब्दिकवर्गश्चिराय महामहोपाध्यायश्रीनागेशभट्टस्याधमर्णो भविष्यति।

"महाभाष्ये नवाह्निकपर्यन्तं प्रदीपोद्द्योतानुसारि-समीक्षात्मकमध्ययनमि" त्यभिधाने प्रस्तुते निबन्धे पञ्चाध्याया वर्तन्ते, प्रत्यध्यायं चत्वारः पादाश्च सन्ति। तत्र सर्वत्र महाभाष्यीयाणि तान्येव स्थलानि प्रायशो गृहीतानि, यत्र प्रदीपकृदुक्त्या सह उद्द्योतकारोक्तेर्विरोधः प्रतीतो भवति। कुत्रचित्तु महाभाष्यकारीयं रहस्यमप्युद्दिश्य विमर्शः कृतोऽस्ति। तत्र प्रथमाध्याये प्रथमपादे वर्णितविषयस्य संक्षिप्तो विमर्शः उपस्थाप्यते—

**प्रथमोध्यायः—**

अथ शब्दानुशासनमिति भाष्यवाक्येऽथशब्दस्याधिकारार्थद्योतकत्वं स्वीकृतं प्रदीपे–निपातानां द्योतकत्वात्। उद्द्योतकृता तु तस्य वाचकत्वमेव स्वीकृतम्, अधिकृतमिति चाऽर्थो निर्दिष्टः, भाष्ये प्रयोज्यते, इत्यनेन वर्तमानकालिकनिर्देशेन अथशब्दस्याधिकारवाचकत्वं सर्वप्रसिद्धं न तु वृद्ध्यादिवत्पारिभाषिकमिति ध्वनितमित्यप्युक्तम्। तदनु प्रदीपोद्द्योतकारीया मङ्गलभाष्यव्याख्या संक्षिप्तं प्रस्तुता, तत्र च मङ्गलार्थत्वमप्यथशब्दस्य दर्शितम्, अन्यार्थं नीयमानस्य दध्यादेरन्यस्य यात्रिणः कृते समक्षदर्शनेन यथा मङ्गलसूचकत्वं तद्वत्प्रकृतेऽप्यधिकारार्थं प्रस्तुतस्य अथशब्दस्य मङ्गलव्यञ्जकता इत्यादि चाभीहितम्। अन्ततो निष्कर्षं इत्थं दर्शितो यत् प्रदीपसम्मतो द्योतकतापक्ष एव समीचीनो भवितुमर्हति, अस्मिन् पक्षे उपसर्गाणां

तदतिरिक्तनिपातानां च एकरूपता भर्तृहरिप्रभृतिभिराचार्यैरपि स्वीकृताऽस्ति, उद्द्योतसम्मतवाचकत्वपक्षे तूपसर्गाणां द्योतकत्वं तदतिरिक्तनिपातानां वाचकत्वमित्येवमर्धजरतीयं स्यात्। उद्द्योतप्रयुक्ता वाचकत्वसाधकाः सर्वेऽपि हेतवः क्रमशो युक्त्या निरस्ताः, ग्रन्थे द्रष्टव्या इति।

शब्दानुशासनमित्यत्र कर्मणि षष्ठ्या समासः। कर्मणि[1] चेति षष्ठीसमासनिषेधस्त्वत्र न शङ्कनीयः, उभयप्राप्तौ कर्मणीति सूत्रविहितषष्ठ्या एव समासे करणीये तन्निषेधस्य प्रवृत्तिर्भवति, "उभयप्राप्तौ"[2] इति सूत्रेण त्वत्र षष्ठी न विहिता, कर्तृकर्मोभयवाचकपदप्रयोग एवास्य शास्त्रस्य प्रवृत्त्यङ्गीकारात्। केषां शब्दानामिति भाष्यस्याशयः स्पष्टीकृत-उद्द्योतकृताकाकादिशब्दानां ध्वनीनां च व्यावृत्तये इदं भाष्यं प्रवृत्तमिति, सर्वनाम्नां बुद्धिस्थपरामर्शित्वसिद्धान्तेन किं शब्द उत्तरपदार्थविशेषणीभूतस्याऽपि शब्दस्य परामर्शकः।

"यस्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं स शब्दः" इति भाष्यव्याख्यावसरे सामान्यभूतमित्यत्र भूतशब्दः स्वरूपार्थक इत्युद्द्योतकारसम्मतिः, उपमार्थक इत्यत्र प्रदीपकृत्सम्मतिः। अस्यां स्थितौ प्रदीपसम्मत एव पक्षः दृढीकृतोऽस्त्युद्द्योतग्रन्थे स्वमतपोषकाः प्रदीपमतविघटकाश्च ये हेतवः प्रदर्शिताः ते सर्वे युक्तिभिरपसारिताः।

"कानि पुनः शब्दानुशासनस्य प्रयोजनानी" ति भाष्यव्याख्याने प्रदीपाशय इत्थं वर्णितः—यथा सन्ध्योपासनादिनित्यं कर्म तस्यानुष्ठानाभावे प्रत्यवायोत्पत्तिरनुष्ठाने तु फलाभावः—तद्वद् व्याकरणशास्त्राध्ययनं यदि नित्यं स्यात्तदा तदध्ययनजन्यं फलं न सिध्येत, अध्ययनाभावे प्रत्यवायश्च स्यात्। अत्रोद्द्योतकारस्याऽप्येष आशयः- यत्प्रयोजनशब्दः करणल्युडन्ततया प्रयोजकपरः कर्मल्युडन्ततया फलपरो वाः तत्रागम प्रयोजकः, रक्षादीनि तु फलानीत्यादि उक्तम्। असन्देहरूपे फलवाचके शब्दे नञ्शब्दस्य कोऽर्थं इत्यंशे भूयशो विचारान् प्रदर्श्य अन्ततः प्रागभावस्य परिपालनमेव लक्षणया नमर्थो निर्णीतः।

"दुष्टः शब्दो स्वरतो वर्णतो वा" इत्येतद् व्याख्यावसरे इन्द्रशत्रुशब्दे बहुव्रीहितत्पुरुषयोः विचारे बहुव्रीहिकरणेन विपरीतफलावाप्तिः सुष्ठु दर्शिता, शत्रुशब्दे योगशक्तिश्च समादृता न तु शत्रुत्वावच्छिन्ने रूढिः।

---

१. पा० सू० २।२।१४

२. पा० सू० २।३।६६

"चतुर्भिश्च प्रकारैः विद्योपयुक्ता भवति"

एतद्व्याख्यानसमीक्षायां प्रकारशब्दे बाहुलकात्करणे घञ्, विद्याशब्देऽपि करणे क्यबित्यादिस्पृहणीयव्युत्पत्तयः द्रष्टव्याः ।

लोके तावद् "अभक्ष्योग्राम्यकुक्कुटः" इत्यादिव्याख्यानावसरे शक्यञ्चानेन स्वमांसादिभिरपि क्षुत्प्रतिहन्तुमिति भाष्यवाक्ये प्रदीपोद्द्योतयोर्विचारः समीक्षितः ।

"खेदात्स्त्रीषु प्रवृत्तिर्भवति" अत्र खेदनिवृत्तिरूपं यत्फलं तत्साधनतया यदि पुरुषकर्तृका स्त्रीविषयिका प्रवृत्तिर्भवेत् तदा विवाहितायां तद्भिन्नायां चोभयत्राऽपि समानरूपेण खेदनिवृत्तिर्भवितुमर्हति । तत्र शास्त्रेण नियमः क्रियते "इयं गम्येयमगम्येति" । एतद्विषय उद्द्योताभिप्रायः विशदकृतो ग्रन्थो द्रष्टव्याः ।

"किं पुनः–शब्दस्य ज्ञाने धर्मः, आहोस्वित्प्रयोगे" इति भाष्यवाक्यव्याचक्षाणयोः प्रदीपोद्द्योतयोरभिप्रायं स्फुटीकृत्य सिद्धान्तपक्षः समर्थितो द्रष्टव्यः ।

"कूपखानकवदेतद्भविष्यती"ति वाक्यस्य पर्यालोचने प्रदीपोद्द्योतयोर्मतं प्रदर्श्य विशदरूपेण समीक्षा विहिता सा चावश्यं द्रष्टव्या । यथा कूपखननान्तरीयकशरीरव्यापाररूपं कर्म कूपखननाद् भिन्नमेवास्ति, तज्जनितमृत्तिकासंश्लेषादिदोषः कूपखननादुत्पन्नेन जलेन नाश्यो भवति, एवं च तद्दोषनाशकतया तद्वीपरीतफलजनकं कूपखननं स्वीक्रियते । अनया रीत्या प्रकृतेऽपि साधुशब्दज्ञाननान्तरीयकापशब्दज्ञानजन्याधर्मरूपो दोषः साधुशब्दज्ञानजन्यधर्मरूपफलं न नाश्यो भवति ।

व्याकरणशब्दार्थविचारे "किमर्थमिदमुभयमुच्यते–" भवेच्च तद्धितः, प्रोक्तादयश्च तद्धिताः, इति । न प्रोक्तादयश्च तद्धिताः, इत्येव भवेच्च तद्धित, इति चोदितः स्यात् ? ।" अत्र प्रदीपोद्द्योतयोर्मतसमीक्षा जिज्ञासुजनव्युत्पादनाय व्याख्यातव्येऽर्थे आचार्यस्य तात्पर्यं भवतीति कृत्वा पुनरुक्तजन्यं गौरवं न दोषावहम् । अतः वेदतुल्याः महर्षयः स्वोक्तं न निवर्तयन्तीति रीत्या भाष्यग्रन्थयोजनायामपि प्रदीपोद्द्योतयोर्वैमत्यमपसारितमिति द्रष्टव्यम् ।

अग्रे च "द्विगता अपि हेतवो भवन्ति" इत्यस्य समीक्षा कृताऽस्ति ।

तृतीये पादे—"अकारस्य" विवृतोपदेशः । किं प्रयोजनम् ? आकारग्रहणार्थः" इत्यादि भाष्यव्याख्यानभूतयोः प्रदीपोद्द्योतयोः समालोचनां विधाय अन्त्ये अकारसंवर्णग्रहणेन अष्टादशभेदविशिष्टमवर्णं यथा गृहणीयात्, तदनुगुणः विवृतोपदेशः करणीयः । तेन सर्वे विवृतप्रयत्नीयाः अवर्णाः सवर्णसंज्ञकाः भविष्यन्ति, अतश्च तद्ग्रहणेन ग्रहीष्यन्ते ग्राहकशास्त्रेणेति भाष्याशयः स्पष्टीकृत ।

पुनश्च " अ इ उ"[1] इत्यादिशिवसूत्रचतुष्टये सन्धिकार्यस्य शङ्काकृता, तद्विषये प्रदीपोद्द्योतयोर्मतं प्रदर्श्य वस्तुतस्त्वित्यादिना समीक्षा कृता, सा ग्रन्थे द्रष्टव्या ।

---

१. शि० सू० ।

अग्रे च—"आचार्यप्रवृत्तिर्ज्ञापयति–भवत्याक्षरसमाम्नायिकेन धात्वादिस्थस्य ग्रहणमी"त्यादिभाष्यस्य तत्सम्बन्धिनोः प्रदीपोद्द्योतयोश्च मतं विशदीकृत्य समीक्षा कृता सा चेत्यम्–वाक्यशेषे केचिदित्यादिना उद्द्योकृता यदुक्तं तन्न समीचीनं प्रतिभाति, यतो हि भगवता पाणिनिना तत्र तत्रोपदिष्टासु "अक् अच्" इत्यादिप्रत्याहारसंज्ञासु आदिमवर्णानामाक्षरसमाम्नायिकवर्णानामकनुकरणत्वम् अन्त्यवर्णानाञ्च तत्रत्यान्त्यवर्णानामनुकरणत्वमित्यकः सवर्ण इत्यात्रापिदं वक्तुं शक्यते—यदनुबन्धलिङ्गेन अकारस्य विवृतोपदेश इति। "हे देवदत्त अजस्ति" इत्यादावस्मदादिवाक्ये त्वजादिपदे उपदेशेऽजित्यादिशास्त्रघटकाजादिपदकानुकरणत्वम्, एवं चात्रेदं न युज्यते यदनुबन्धचिह्नेन अकारस्य विवृतोपदेश इति, एवं रूपेण स्पष्टीकृता समीक्षा ग्रन्थे द्रष्टव्या।

एवमेव "लृकारोपदेशः क्रियते—यदृच्छाशब्दार्थोऽशक्तिजानुकरणार्थः प्लुत्याद्यर्थश्च। अस्मिन् भाष्येऽपि समीक्षायामुद्द्योतमतस्य चिन्त्यता प्रदीपमतस्य ज्यायस्त्वं सयुक्तिकं यदुक्तं तद्ग्रन्थेऽवश्यं द्रष्टव्यम्।

एवमेव "एषोऽपि ऋफिडः, ऋफिड्डश्च" कथम्? इति भाष्यस्य "स एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन् प्रत्याख्यायते, सैषा महतो वंशस्तम्भाल्लट्वानुकृष्यते" इति भाष्यस्य च समीक्षा दर्शनीया। तथा हि-बहवायासेन साध्यमल्पं फलं यथोचितं न भवति, तथा प्रकृतेऽपि लृकारोपदेशप्रत्याख्यानरूपं फलं भूयसा परिश्रमेण कृतमौचित्यं न वहति, स्वल्पस्य प्रयोजनस्य कृते भूयान् परिश्रमो नोचित इति तात्पर्यम्।

नेत्याह, तादपि परस्तपर इति भाष्यग्रन्थमादाय प्रदीपकारस्योद्द्योतकर्त्तुश्चाभिप्रायं प्रदर्शयता मया या समीक्षा कृता तस्याः सारांशः प्रदर्श्यते तथाहि सकृदुच्चरितत्वे सत्यनेकार्थबोधकत्वं तन्त्रलक्षणम्, तदुदाहरणंचोक्त्वा असहविवक्षायामपि तन्त्रन्यायस्य प्रवृत्तिं दर्शयित्वा प्रकृते तपरशब्दे सहविवक्षायामेव तन्त्रन्यायः प्रवृत्तः यतो हि–उभयोरपि तपरपदार्थयोरुभयत्वेन रूपेण समकालसवर्णपदार्थे बोधकतारूपशक्तिसम्बन्धेनान्वयः स्वीकृतोऽस्तीति च दर्शितम्। तदनु एकशेषाश्रयणमपि वैकल्पिकोपायमर्थद्वयबोधनं कथितवान् प्रदीपकारः, तत्र चिन्त्यत्वं ब्रुवतोद्द्योतकृतोच्यते—"समाहारद्वन्द्वविषय एकशेषाभावेनैकवचनानुपपत्त्येति। अत्रेदमालोच्यते यद्युद्भूतावयवभेदघटितसमुदायविवक्षा क्रियेत तदा इतरेतरयोगद्वन्द्वः सुलभ एव, सुविभक्तिस्तु "[1]सुपां सुलुगि" त्यनेन कर्तुं शक्या, एवं चैकशेषाश्रयणमपि सूत्रमते समादरणीयमेव। तत्प्रत्याख्यानपक्षेऽपि शास्त्रीयप्रयोगसिद्ध्यर्थं तस्याः आवश्यकत्वमेव बोद्धॄणां बोधस्त्वावृत्त्या भवतु नाम।

---

१. पा० सू० ७।१।३९

"परलोकस्य स्थानिवद्भावादसिद्धत्वाच्चे"ति महाभाष्यं व्याचक्षाणयोः प्रदीपोद्द्योतयोर्मतप्रदर्शनपुरसरं या समीक्षा कृता तस्याः अयं भावः—याता वाता इत्यत्र यावाधात्वोराकारे वर्णैकदेशस्याकारस्य स्वतन्त्रेणाकारेण ग्रहणपक्षेद्वावकारौभविष्यतः, तत्र परस्य लोपे कृतेऽवशिष्टोऽकारः कथन्न लुप्यत इति प्रश्ने परलोपस्य स्थानिवत्त्वेन व्यवधानात्पूर्वलोपो न भविष्यति। अथवा "असिद्धवदत्राभात्"[1] इत्यनेनासिद्धत्वात्पूर्वलोपो न भविष्यतीति समाधाने चिणो लुङ्न्यायः प्रदर्शितः, यथा—अपाचिततरामित्यत्र चिणो लुगित्यनेन त-शब्दस्य लुकि कृते तरप्रत्ययस्य लुङ् न भवति, प्रथमस्य तप्रत्ययलुकोऽसिद्धत्वात्। एवं च प्रतिलक्ष्यं लक्षणोपप्लवेन यथा "चिणो लुक्"[2] सूत्रभेदस्तथैव प्रकृतेऽप्यतो लोप इति सूत्रभेदः स्वीकृतः।

एवं तर्हि योगविभागः करिष्यते, "रषाभ्यां नो णः[3] समानपदे" ततः—"व्यवाये च रषाभ्यां नो णो भवतीति। ततः—"अट्कुप्वाङ्नुम्भिः" इति। इदमिदानीं किमर्थम्? नियमार्थम्—एतैरेवाक्षरसमाम्नायिकैर्व्यवाये, नान्यैः" इतीति भाष्यग्रन्थमादाय प्रदीपोद्द्योतयोर्विचारं प्रदर्श्य अन्ते या समीक्षा कृता सा अवश्यं ग्रन्थे द्रष्टव्या। तत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकमडादिकर्तृकव्यवायत्वम्, तद्व्यापकं रूपमाक्षरसमाम्नायिकवर्णकर्तृकव्यवायत्वम्। नियम्यशास्त्रं व्यवाये इति। तदीयोद्देश्यतावच्छेदकं यत्किञ्चित्कर्तृकव्यवायत्वम्, तद्व्याप्यञ्च रूपमाक्षरसमाम्नायिकवर्णकर्तृकव्यवायत्वमिति, तद्रूपावच्छिन्नातिरिक्तत्वेन यत्किञ्चित्कर्तृकव्यवायत्वावच्छिन्ने सङ्कोचः। अत आक्षरसमाम्नायिकवर्णकृर्तृकव्यवाये रषाभ्यां परस्य नस्य णत्वञ्चेत्तर्ह्यडादिकर्तृकव्यवाय एवेति नियमसूत्रस्यार्थेन आदर्शेनेत्यादौ दोषं विद्यमानं दृष्ट्वा नियामकशास्त्रीयोद्देश्यतावच्छेदकरूपमपर्याप्त्या अडादिकर्तृकत्वमेव गृहीतम्, तद्व्यापकं रूपमाक्षरसम्नायिकवर्णकर्तृकत्वम्। नियम्यशास्त्रीयोद्देश्यतावच्छेदकं रूपं यत्किञ्चित्कर्तृकत्वम्, तद्व्याप्यं रूपमाक्षरसमाम्नायिकवर्णकर्तृकत्वरूपम्, एवञ्चाक्षरसमाम्नायिकवर्णकर्तृकत्वावच्छिन्नातिरिक्तत्वेन यत्किञ्चित्कर्तृकत्वावच्छिन्ने सङ्कोचो विधेयः। अनेन रूपेणाडादिभिरेव व्यवाये इति फलितार्थमादाय दोषो निराकृतः।

अग्रे च चतुर्थे पादे "द्विर्वचनेऽपि। नेमौ रहौ कार्यिणौ द्विर्वचनस्य। किं तर्हि? निमित्तमिमौ रहौ द्विर्वचनस्य। तथा ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्" इति। नेदानीं तौ भुञ्जाते, इति भाष्यग्रन्थस्य व्याख्यानं कुर्वतोः प्रदीपोद्द्योतकारयोर्मतं याथार्थ्येन प्रदर्श्य या समीक्षा कृता, तत्र च तक्रकौण्डिन्य-

१. पा० सू० ६।४।२२
२. पा० सू० ६।४।१०४
३. पा० सू० ८।४।१

न्यानेन माठरपरिवेषणन्यायस्य ऐक्यरूप्यं प्रदर्शयत उद्द्योतकारस्य मतं चिन्त्यतया सहेतुकं समीक्ष्य द्वयोर्न्याययोर्महान् भेदः प्रदर्शितः, स ग्रन्थे द्रष्टव्यः ।

"यदि तर्हीमे वर्णा अर्थवन्तः" इत्यादि भाष्यं प्रदीपोद्द्योतदृष्ट्या व्याख्याय समीक्षा विहिता, तस्या अयमाशयः यदेकस्मिन्नेव कालेऽवयवानां समुदायस्य च प्रातिपदिकसंज्ञा प्रवृत्ता, अर्थवत्त्वमप्यवयवेषु समुदाये चैकमेव न त्वनेकम् । अतः तादृशार्थकत्वनिबन्धनमुद्देश्यत्वम् अवयवे इव समुदायेऽपी" ति कृत्वा तन्मध्यपतित-तन्न्यायप्रवृत्तिर्दुर्वारा, एवं च प्रदीपग्रन्थस्य युक्तत्वमेव प्रतिभातीति विशदं ग्रन्थे द्रष्टव्यम् ।

"वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनान्मन्यामहे-अनर्थका वर्णा इतीमं भाष्य-ग्रन्थमादाय प्रदीपोद्द्योतयोर्व्याख्यानं च प्रदर्श्य समीक्षा कृता । तस्याः इदं तात्पर्यं यद् वर्णव्यत्ययादिषु सत्सु पूर्वार्थस्य दर्शनरूपहेतुना पूर्वोक्तहेतुद्वये व्यभिचारः दर्शितः प्रदीपकृता, संघातार्थत्वरूपे हेतुरेवावशिष्यते । तस्य[1] परिहारोऽर्थवत्सूत्रे स्वयं भगवता भाष्यकृतोक्तः, तथा सुरायाः अवयवानां प्रत्येकमुन्मादाजनकत्वेऽपि समुदायभूतायाः सुरायाः उन्मादजनकता, तथैव समुदितशब्देष्ववयवभूतवर्णानामनर्थकत्वेऽपि समुदित-शब्दस्यार्थवत्ता, एवञ्च सङ्घातार्थवत्वस्य व्यभिचारित्वादिष्टसाधनत्वं नास्ति ।

"एषा ह्याचार्यस्य शैली लक्ष्यते-यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति-अचोऽक्षु हलो हल्षु ।" इदं भाष्यं व्याचक्षाणस्य प्रदीपोद्द्योतग्रन्थस्याशयं प्रदर्श्य यथा लोके ब्राह्मणैः सह ब्राह्मणाः भोज्यन्ते, तथा शास्त्रेऽप्यज्भिः सहाचामेवोपदेशः कृतोऽस्ति न हलाम् । एवं च हल्षु संज्ञिविशेषबोधनाय अगृहीता अपि णकारादयो वर्णाः अच्प्रत्याहारे संज्ञित्वेन न गृह्यन्तेऽपि त्वित्संज्ञया लुप्यन्ते । अत्रैवाचारादप्रधानत्वा-ल्लोपश्च बलवत्तरे इत्येवं हेतुत्रयं निर्दिष्टम् । अत्र पक्षसाध्योरपि निर्देश आवश्यक इति कृत्वा सर्वेषां विशदं स्वरूपं ग्रन्थे द्रष्टव्यम् ।

"असंदिग्धं पूर्वेण, न परेण । कुत एतत् ? पराभावात् । न हि पदान्ताः परेऽणः सन्ति" । अस्मिन्नपि भाष्यग्रन्थे प्रदीपोद्द्योतयोर्व्याख्यानं दर्शयित्वा या समीक्षा कृता सा निबन्धे द्रष्टव्या अस्ति । तत्र चावसाने पदानामेवानुनासिको भवतीत्याशयेन एतद्भाष्यं प्रवृत्तम्, यतश्च "अणोऽप्रगृह्यस्यानुनासिकः"[2] इति सूत्रे पदान्ताधिकारो नास्तीत्युक्तमुद्द्योतकृता ।

अन्ते च पदान्ताः परेऽणः कार्यभाजो न भवन्तीत्यादितात्पर्यं द्रष्टव्यम् ।

---

१. पा० सू० १।२।४५

२. पा० सू० ८।४।५७

अध्यायान्ते च "अश्नोतेर्वा पुनरयमौणादिकः सरन् प्रत्ययः। अश्नुते इत्यक्षरमि"ति भाष्यविषयिका प्रदीपोद्द्योतविषयिणी च समीक्षा कृता। तस्या अयं भावः वर्णानामानर्थक्यमुक्तवता प्रदीपग्रन्थस्य चिन्त्यत्वं च कथयत उद्द्योतकारस्यौचित्यं न प्रतीयते, तथा ह्यक्षरशब्देन पदं वाक्यं वा अत्राभिप्रेतं तद्दृष्ट्या अश्नुते अर्थं व्याप्नोतीति व्युत्पत्तिर्दर्शिता प्रदीपग्रन्थे। अक्षरपदेनाऽत्र वर्णरूपोऽर्थो न गृहीतः, वर्णं "वाहुः पूर्वसूत्रे" इति भाष्येण विरोधात्, एवं च प्रकृते वर्णानर्थक्यहेतुना प्रदीपकारीयव्युत्पत्तिखण्डनमनुचितमेव प्रतीयते।

## द्वितीयोऽध्यायः—

द्वितीयेऽध्याये ये विषयाः वर्णिताः तेषां स्वरूपं संक्षेपतः प्रदर्श्यते। तत्र "किं पुनरिदं तद्भावितग्रहणं वृद्धिरित्येवं ये आकारैकारौकारा भाव्यन्ते, तेषां ग्रहणम्; आहोस्विदैज्मात्रस्येति भाष्यग्रन्थे प्रदीपोद्द्योतयोर्मतं दर्शयित्वा विशदसमीक्षा विहिता, द्वयोः पक्षयोर्गुणदोषौ विवेचितौ सारांशश्चेत्थम्—यथा अनुनासिकादिसंज्ञासूभयेषां ग्रहणं कृतं तद्रीत्या अत्राऽपि स्यात्ः। अथवा टिघुभादिसंज्ञावदतभावितानामेव ग्रहणरूप एकतरपक्ष एवं स्यात्तत्र हि तद्भावितपक्षासम्भवात् द्वितीयपक्षाश्रयणं कृतम्; अत्र तु न तादृशी स्थितिः एवञ्च वृद्धिशब्दे तन्त्राद्यङ्गीकारे तद्भावितग्रहणम्, तदनङ्गीकारकल्पे त्वतद्भावितपक्षः श्रेयान्, अन्ततश्चोभयपक्ष आश्रयणीयत्वेन सिद्धान्तितः।

[1]वृद्धिरादैजिति सूत्रे "संज्ञाधिकारः संज्ञासम्प्रत्ययार्थः। इतरथा ह्यसंप्रत्ययः यथा लोके" इति भाष्यग्रन्थे प्रदीपोद्द्योतयोर्मतं विवेचयता मया महती समीक्षा दर्शिता अस्ति, तस्या अयमाशयः—वृद्धिरादैजित्यादिसूत्रे शास्त्रीयसङ्केतानुरोधेनैव सामानाधिकरण्यं ज्ञातुं शक्यं नान्येनोपायेन। यद्यपि पूर्वोच्चारितः सञ्ज्ञीपरोच्चारितः संज्ञा भवति कार्यिणः सत्वे एव तस्य किञ्चित्कार्यं विधातुं शक्यते। लोकेऽपि स्वत एव दासपिण्डस्य देवत्तादिसंज्ञा विधीयत इति कृत्वा "आदैज्वृद्धिरि"ति भाष्यं न तु वृद्धिरादैजिति। अस्मिन् संशये भाष्यकृतोक्तं मङ्गलार्थं वृद्धिशब्दस्यादौ प्रयोग इति। मङ्गलप्रयोजन आचार्यः शास्त्राध्ययने मङ्गलं भवेद् विघ्नो माभूदिति विचार्य वृद्धिशब्दस्य संज्ञाशब्दत्वेऽपि तं पूर्वं प्रयुक्तवान्, अपृक्त एकाल् प्रत्यय इत्यादिकं तु परिभाषासूत्रमतो न व्यभिचारः।

"इग्ग्रहणं किमर्थमितीको गुणवृद्धी"[1] इति सूत्रीयं भाष्यमधिकृत्य व्याख्यानं कुर्वतोः प्रदीपोद्द्योतयोर्मतं स्फुटीकृत्य तत्र समीक्षा कृता। तत्र[2] "आतोऽनुपसर्गे कः"

१. पा० सू० १।१।१ २. पा० सू० ३।२।३

इति कित्वं व्यापकं स्वीकृतमस्ति, यदाकारस्थस्य अकारस्य आकारग्रहणेन ग्रहणं न भवति, एवमेव व्यञ्जनस्य गुणाभावे "जनेडः" इति सूत्रे ङित्करणस्य ज्ञापकत्वमुक्तम् ।

किं पुनरयमलोऽन्त्यशेषः, आहोस्विदलोन्त्यापवाद ? इति भाष्यमाधृत्य प्रदीपोद्द्योतयोर्व्याख्या दर्शिता, तत्र समीक्षा विशदं निहिता । तस्या अयमाशयः यत्तच्छेषपक्षमादाय अलोऽन्त्यसूत्रस्य शेषात्वमुक्तं भगवता, तत्रानयोरुभयोरपि परस्परं विशेष्यविशेषणभावो द्रष्टव्यः । एतत्प्रसङ्गे प्रदीपकारेणोक्तं यदिका अङ्गस्य विशेषणत्वे तदन्तविधौ सतीगन्ताङ्गस्य गुणो भवति, स च भवन् सन् अन्त्यस्यालः स्थाने भवतीति पक्षे इगित्यस्य विशेषणत्वम्, अलोऽन्त्यस्य विशेषत्वम् । अन्त्यस्येको गुण इति द्वितीयपक्षे त्वलोऽन्त्यस्य विशेषणत्वम्, इकः विशेष्यत्वम्, एवं सति द्वयोः तच्छेषत्वव्यवहारः सम्पद्यते । यदा तु गुणवृद्धिविधायकेषु शास्त्रेष्वङ्गस्येति न स्थानषष्ठी किन्त्ववयवषष्ठी, तदा अङ्गावयवस्येकः स्थाने गुणः स्यादित्यर्थकृते स्थानषष्ठ्याः अभावादलोऽन्त्यपरिभाषायाः उपस्थितिर्न भवितुमर्हति, अस्मिन् पक्षेऽप्राप्त्यनुमानरूपमपवादत्वमिक्परिभाषायाः । अन्ते च यद्यपि तच्छेषपक्षे दूषणोद्धारः सम्भवति, एवं तदपवादत्वपक्षेऽपि तस्य सम्भवोऽस्ति, तथाऽपि बृहद्गौरवमालोच्य पदोपस्थितपक्ष एव सिद्धान्तितः । उक्तं च भगवता भाष्यकृता—एवं तर्हि नाऽयं तच्छेषः नाऽपि तदपवादः, अन्यदेवेदं परिभाषान्तरमसम्बद्धमनया परिभाषया ।

"यद्यचो वृद्धिरुच्यते, "स्यमाटं" अटोऽपि वृद्धिः प्राप्नोति "इति भाष्यग्रन्थं विवृण्वतो प्रदीपोद्द्योतकृतोर्मतं सम्यग् दर्शयित्वा विहितायाः समीक्षायाः तात्पर्यमिदं यल्लादेशे कृते शपि च कृतेऽडागम इति पक्षे प्रवृत्तः प्रदीपग्रन्थः समीचीन एव प्रतिभाति । शपं बाधित्वा परत्वाद् वृद्धिर्भविष्यतीति प्रदीपग्रन्थे परत्वादित्यस्य अड्बाधने न तात्पर्यम्, यतो हि लादेशे कृते सत्यडितिकल्पेऽटा सह वृद्धियौगपद्यं न सम्भवतीति ।

"अथवा—षष्ठ्यधिकारे इमौ योगावपेक्षिष्यामहे"—इति भाष्यं व्याकुर्वतो प्रदीपोद्द्योतयोर्मते दर्शिते, तत्र समीक्षाया अयमभिप्रायः दर्शितः, यत्[1] षष्ठीस्थानेयोगेति सूत्रे योगविभागे कृते सति "षष्ठी" इति सूत्रं साकाङ्क्षमिति कृत्वा अपेक्षालक्षणो लौकिकोऽधिकारः प्रदर्शितः ततश्च[2] इको गुणवृद्धि, इग्यणः[3] सम्प्रसारणमित्येतत्सूत्राभ्यां यदुपाक्रान्तं तद् यत्र षष्ठी तत्रानुवर्तते, तत्र योग्यतया व्याख्यानेन त्र "षष्ठी" इति विभक्तियोगेऽनयोरेव सूत्रयोरपेक्षा नान्येषाम् ।

---

१. पा० सू० १।१।४९ २. पा० सू० १।१।३
३. पा० सू० १।१।४५

पूर्वास्मिन्नुशास्त्रीयाधिकारकल्पे तु षष्ठ्यधिकारस्थत्वेन "इकः" इत्यस्य यत्र स्थानषष्ठीनिर्दिष्टस्य गुणवृद्धिशब्दाभ्यां गुणवृद्धी विधीयेते तत्रैक इति षष्ठ्यन्तं पदमुपतिष्ठते। एवमिग्यणः इत्यत्रोऽप्यर्थः कृतः, एवं च एनयोर्द्वयोर्न स्वातन्त्र्येण विधायकता, अपि तु विधिप्रदेशे तत्तत्पदोपस्थापकता। संज्ञा त्वर्थापत्तिमूलकवाक्य-कल्पनया साधयितुं शक्येति कृत्वा गौरवग्रस्तः स पक्षस्त्यक्तः लाघवमूलकश्चाऽयं लौकिकाधिकारपक्षः समाश्रित इति।

"न धातुलोप आर्धधातुके"[1] इति मूलभूतं सूत्रमुद्दिश्य भाष्याभिप्रायः समीक्षितः, पुनश्च किं पुनरिदमार्धधातुकग्रहणं लोपविशेषणम्, आहोस्विद् गुणवृद्धि-विशेषणमित्यंशे समीक्षा विहिता। तत्प्रसङ्गे उपलक्षणस्योपाधेर्विशेषणस्य चाव्या-प्त्यातिव्याप्त्यासम्भवाख्यदोषरहितानि लक्षणानि निरूपितानि।

पुनश्च "बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः, असिद्धं बहिरङ्गमन्तरङ्गे"[2] इत्यंशे समीक्षा कृता, द्विविधबहिरङ्गस्य। समकालप्रातिकस्य जातस्य च। अन्तरङ्गशास्त्रे प्रवर्तनीयेऽसिद्धत्वं दर्शितम्। तत्र पदावधिकेऽन्वाख्याने प्रकृतस्थले समकालिकत्वं भवत्येव, क्रमिकान्वाख्यानपक्षेऽपि बौद्धं समकालिकत्वमादाय व्यवस्था सम्पादनीया।

पुनश्च "यावता चेदानींरकि, जीवेरपि सिद्धं भवती" ति भाष्यमुक्त्वा तत्प्रसङ्गे प्रदीपमुद्द्योतञ्च दर्शयित्वा विशदं समीक्षा कृता।

क्ङिति[3] चेति सूत्रमुपधारोरवीत्यर्थमिति वार्तिकप्रसङ्गे प्रदीपकृत उद्द्योत-कृतश्च मतं सुष्ठु दर्शितं समीक्षा चाऽपि विशदं विहिता। उपमार्थं रोरवीत्यर्थञ्चेति व्याख्यानेन बहुव्रीहिसमास एव तात्पर्यं दर्शितम्, अन्यथा अर्थशब्देन सह नित्यसमासे तात्पर्यं स्यात् तदोपधाये रोरवीतये चेदमिति व्याख्या कर्तव्या स्यादित्येवं समीक्षा ग्रन्थे द्रष्टव्या।

"चतुर्थी[4] तदर्थे" इति सूत्रेऽर्थेन नित्यसमासो वक्तव्यः सर्वविङ्गता च वक्त-व्येत्येवं रूपेण वार्तिकस्वरूपं दर्शितम्, तद्विषये शब्दबोधस्य स्वरूपमपि सूचितम्।

"अग्रे च" ङितो यत्कार्यं तद्भवति, ङिति यत्कार्यं तन्न भवती" ति भाष्यं विवृण्वतः प्रदीपस्योद्द्योतस्य च मतं दर्शयित्वा या समीक्षा कृता तस्याः विशदं स्वरूपं ग्रन्थेऽवश्यमवलोकनीयम्।

---

१. पा० सू० १।१।४  २. पा० शे० ५०

३. पा० सू० १।१।५  ४. पा० सू० ६।२।४३

इटश्चाऽपि ग्रहणं शक्यमकर्तुम् । कथम् ? अकणिषम्, अरणिषम्, कणिताश्वः, रणिताश्वः, इत्यादिभाष्यग्रन्थे प्रदीपोद्द्योतयोर्व्याख्यां दर्शयित्वा समीक्षा विहिता । "हलोऽनन्तराः संयोगः[1]" इति सूत्रम् ऋलृवर्णयोर्मिथः सावर्ण्यं वाच्यमिति वार्तिकञ्च आधारीकृत्य प्रदीपोद्द्योतयोः अभिप्रायं प्रकाश्य या समीक्षा कृता सा द्रष्टव्या ।

पुनश्च "एवमपि बहूनामेव प्राप्नोति, यान् हि भवान् षष्ठ्या प्रतिनिर्दिशति, एतेषामन्येन व्यवायेन भवितव्यमि" ति भाष्यग्रन्थस्य व्याख्यानभूतयोः प्रदीपोद्द्योतयोः स्वरूपं प्रदर्श्य समीक्षा कृता सा ग्रन्थे द्रष्टव्या ।

"मुखनासिकावचनोऽनुनासिकः[2]" इति सूत्रीयं भाष्यमुद्दिश्य प्रदीपोद्द्योतौ प्रदर्श्य कृतायां समीक्षायां चतुर्विधेषु समासेषु कस्य ज्यायस्त्वमिति सयुक्तिकमालोचितम्, प्रसङ्गतः नासिकाभिहतवायुना अभिव्यञ्जित इत्यनुनासिकपदस्य व्युत्पत्तिरपि दर्शिता, प्रासादवासिन्यायेन मुखग्रहणस्य प्रत्याख्यानमपि दर्शितम् ।

"तुल्यास्यप्रयत्नं[3] सवर्णमि" ति सूत्रे किमिदं तुल्यास्यप्रयत्नमित्यादिकभाष्यमाधृत्य बहुविधसमासप्रदर्शनं कृतम् ।

पुनश्च "आस्यं च प्रयत्नश्चास्यप्रयत्नं तुल्यौ चास्यप्रयत्नौ यस्य तत्तुल्यास्यप्रयत्नमिति सिद्धान्तो दर्शितः । द्वन्द्वादौ श्रूयमाणन्यायेन तुल्यशब्दस्य प्रत्येकमन्वयो दर्शितः, आस्यग्रहणाभावे जबगडदशां सवर्णसंज्ञाम् आशङ्क्य परिहृता ।

अग्रे च "ऋलृवर्णयोर्मिथः[4] सावर्ण्यं वाच्यमि" ति वार्तिकमादाय समीक्षा कृता, ऋति ऋवा, लृति लृवा, इति वार्तिकेन सह तुलनात्मकं समीक्षणं कृतम् ।

अन्ते च "नाऽज्झलौ"[5] इति सूत्रमुद्दिश्य—"स्याद् भेदो यदि नित्यो लोपः स्यात्, विभाषा तु सलोपः" इति भाष्यग्रन्थं व्याकुर्वाणयोः प्रदीपोद्द्योतयोर्मतं दर्शयित्वा या समीक्षा कृता सा ग्रन्थे दर्शिता ।

## तृतीयोऽध्यायः—

तृतीयेऽध्याये "ईदूदेद्द्विवचनं[6] प्रगृह्यमि" ति सूत्रमुद्दिश्य महाभाष्यकृता किं पुनः प्लुतस्य प्रगृह्यसंज्ञावचने प्रयोजनमित्यारभ्य प्रगृह्याश्रयः प्रकृतिभावो यथा

---

१. पा० सू० १।१।७
२. पा० सू० १।१।८
३. पा० सू० १।१।९
४. भा. वा.
५. पा० सू० १।१।१७
६. पा० सू० १।१।११

स्यादित्यन्त्यं यदुक्तं तद्व्याख्यानभूतयोः प्रदीपोद्योतयोः स्वरूपं निर्दिश्य या समीक्षा कृता तस्याः अयमभिप्रायः—प्लुतस्य प्रगृह्यसंज्ञाकरणे प्रकृतिभावः प्रयोजनमस्ति।

न च प्लुतप्रयोज्यः प्रकृतिभावः स्यादिति वाच्यम्, "अवैदिके" इति शब्दे तथा सति दोषप्रसङ्गात्। यतो ह्यप्लुतवदुपस्थित इति सूत्रे वद्ग्रहणस्यैव एतत्फलमस्ति यत् प्लुतस्याप्लुतवत्कार्यं भवेन्न तु प्लुतत्वप्रयुक्तं प्रकृतिभावादिकार्यम्। यदि वद्ग्रहणं न क्रियते तर्हि प्लुत एव निषिध्येत, ततश्च त्रिमात्रिकस्य श्रवणं न सम्भवेत्। प्रकृतिभावस्तु प्रगृह्यसंज्ञाप्रयुक्तस्तिष्ठत्येव, एतदर्थं प्लुतस्य प्रगृह्यसंज्ञा विधानमावश्यकम्। एवं च यत्र प्रगृह्यसंज्ञायाः प्रसक्त्यभावः "देवत्त इति" इत्यादौ, तत्राप्लुतवदुपस्थित इति सूत्रविहितः प्लुतप्रकृतिभावश्च निषेधः चरितार्थः। एवमेव "प्लुतभावीप्रकृत्येत्येवमेतद् विज्ञायते" इति भाष्यस्य प्रदीपोद्योतसम्बन्धिनि समीक्षा ग्रन्थे सुविशदं कृताऽस्ति, अथ च 'एवं तर्हि किमेतेन यत्नेन, कार्यकालं संज्ञापरिभाषमित्यादिमहाभाष्यस्य समीचीना विशदसमीक्षा ग्रन्थेऽवश्यं द्रष्टव्या।

पुनश्च "कथं पुनरिदं विज्ञायते—ईदादयो यद् द्विवचनम्, आहोस्विदीदाद्यन्तं यद् द्विवचनमिति महाभाष्यमुद्दिश्य ईदूदेदिति[1] सूत्रार्थविषये ये चत्वारः पक्षाः दर्शिताः तेषां युक्तायुक्तत्वविवेकः ग्रन्थे द्रष्टव्यः।

'अदसो मादि'[2] ति सूत्रविषये यदुक्तं भगवता भाष्यकृता—"वचनार्थो हि सिद्धे, नेदं वचनाल्लभ्यम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? यत्सिद्धे प्रगृह्यसंज्ञाकार्यं तदर्थमेतत्स्यात्—"अणोऽप्रगृह्यस्यानुनासिकः[3] "इती" त्यन्तं ग्रन्थमादाय प्रदीपोद्योतयोर्विवरणं दर्शयित्वा समीक्षा विहिता, तस्या अयं भावः—सिद्धकाण्डे यत्प्रगृह्यसंज्ञा प्रयुक्तं कार्यमस्ति तदर्थमेतच्चरितार्थं भविष्यति। यथा "अणोऽप्रगृह्यस्यानुनासिकः"[4] इति सूत्रदृष्ट्या अदसोऽसेर्दादुदो म[5] इति सूत्रं पूर्वत्रिपादीस्थत्वात् सिद्धमेव, तत्रानुनासिकत्वाभावात्प्रगृह्यसंज्ञाविधानं सफलं भविष्यति। अतश्च वचनप्रामाण्येन अयादीनां प्रतिषेधः कर्तुं न शक्यते।

कार्यकालपक्षे विधिसूत्रदेशे संज्ञाशास्त्रस्योपस्थितिरिति तदेकवाक्यतापन्नत्वात् तद्देशीयान्येव भवन्ति। अतः "अणोऽप्रगृह्यस्येत्येतत्सूत्रप्रदेशे उपस्थितस्य अदसो मादिति सूत्रस्य तद्देशीयतैव जातेत्यादिरूपा समीक्षा ग्रन्थे दर्शनीया।

---

१. पा० सू० १।१।११ २. पा० सू० १।१।१२
३. पा० सू० ८।४।५७ ४. पा० सू० ८।४।५७
५. पा० सू० ८।२।८०

पुनश्च "विप्रतिषेधाद्वा (प्रगृह्यसंज्ञा)" इति भाष्यस्य "मार्थादीदाद्यर्थानां वे" ति भाष्यस्य च समीक्षा कृता अस्ति, "शे"[1] इति सूत्रमधिकृत्य "शेऽर्थवद्ग्रहणात्।" अर्थवतः शेशब्दस्य ग्रहणम्। न चैषोऽर्थवानिति भाष्यमादाय प्रदीपोद्द्योतयोः प्रदर्शनपुरःसरं समीक्षा कृता।

"निपात[2] एकाजनाङि" ति सूत्रमाधृत्य एवं तर्हि सिद्धे सति यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति—इत्यादिना तदुपन्नं भवती" त्यन्त्येन भाष्यकृता यदुक्तं तदुद्दिश्य प्रदीपोद्द्योतविषयिणी मत्समीक्षाविषयिणी चालोचना ग्रन्थे विशदं कृता अस्ति।

पुनश्च "एवं तर्हि 'गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः' इति। तद्यथा—गोरनुबन्ध्योऽजोऽग्नीषोमीयः' इति न वाहीकोऽनुबध्यते इति, भाष्यग्रन्थीया, अर्थाश्रय एतदेवं भवति। यद्धि शब्दाश्रयम्, शब्दमात्रे तद्भवति। शब्दाश्रये च वृद्धयात्वे" इति भाष्यग्रन्थं चादाय प्रदीपोद्द्योतयोर्व्याख्यानं च प्रदर्श्य समीक्षा विहिता।

'उञ ऊँ'[3] इति सूत्रे 'आचार्यप्रवृत्तिर्ज्ञापयति—' नोञ एकादेश उञ्ग्रहणेन गृह्यन्ते' इति। यदयम्—'ओद्' इत्योदन्तस्य निपातस्य प्रगृह्यसंज्ञां शास्ती' ति भाष्यं व्यावृण्वतोः प्रदीपोद्द्योतयोर्मतं प्रदर्श्य समीक्षा विहिता सा द्रष्टव्या।

तृतीयाध्यायस्य द्वितीये पादे 'ईदूतौ[4] च सप्तम्यर्थे' इति सूत्रे ज्ञापकं स्यात् तदन्तत्वे — इत्यादिना — प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवतीऽत्यन्तेन यदुक्तं भगवता तद्विषये प्रदीपोद्द्योतयोर्व्याख्या समीक्षा च दर्शिता।

"दा धा घ्वदाप्"[6] इति सूत्रे समानशब्दप्रतिषेधः। समानशब्दानां प्रतिषेधो वक्तव्यः। प्रनिदारयति प्रनिधारयति। दाधा घुसंज्ञा भवन्तीति घुसंज्ञा प्राप्नोतीत्यन्तं भाष्यग्रन्थमादाय व्याख्यानं कुर्वतोः प्रदीपोद्द्योतयोः स्वरूपं निर्दिश्य समीक्षा विशदं विहिता सा तत्र द्रष्टव्या।

पुनश्च "न वार्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते यथाऽन्यत्र इत्यादिभाष्यग्रन्थस्तत्सम्बन्धिनौ प्रदीपोद्द्योतग्रन्थौ च स्वरूपतो निर्दिश्य समीचीना समीक्षा कृता अस्ति, सा चावश्यं ग्रन्थेऽवलोकनीया।

---

१. पा० सू० १।१।१३
२. पा० सू० १।१।१४
३. पा० शे० १२
४. पा० सू० १।१।१७
५. पा० सू० १।१।१९
६. पा० सू० १।१।२०

पुनश्च आदेशास्तर्हीमे भविष्यन्ति अनागमकानां सागमकाः । तत् कथम् ।
"सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।

एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥" इति भाष्यग्रन्थस्य प्रदीपोद्द्योत-विषयिणीं समीक्षा कृताऽस्ति । तत्तात्पर्यञ्च भवितव्यमित्यादौ भूधातोः तव्यप्रत्ययः तस्य चेडागम इत्येवं व्यवहारो न करणीयः, अपितु तव्यस्य स्थाने इतव्यादेशः । पुनश्च भू इतव्य इत्यस्य स्थाने गुणादिद्वारेण भवितव्यादेशः । अत्र कारिकायां शक्तं पदमित्यस्य ग्रहणेन प्रकृतिप्रत्ययादिकं सर्वमपि पदशब्देन ग्रहीतुं शक्यते । नित्यं वस्तु कदाऽपि न विक्रियते बुद्धिविपरिणामाय भवति, शब्दस्तु साधुरसाधुर्वा स्वस्वरूपेण नित्य एव । एवं च विकाराभावोपपादनपरकोऽयं ग्रन्थ इति द्रष्टव्यः ।

"तत्र व्यपदेशिवद्वचनम् । तत्र व्यपदेशिवद्भावो वक्तव्यः । व्यपदेशिव-देकस्मिन् कार्यं भवतीति वक्तव्यम्" इति भाष्यग्रन्थे प्रदीपोद्द्योतयोर्व्याख्यां दर्शयित्वा या समीक्षा कृता तस्याः अयमाशयः आभ्यामित्यादावाकारस्य दीर्घत्व-सम्पत्तये "अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन्निति"ति वचनेष्टसिद्धावपि धुक् धुगित्यादौ स्वस्मिन् स्वावयवत्वाभावेन[1] "एकाचो बशोभष" इति भष्भावो न स्यात्, अतः व्यपदेशिवद्वचनं स्वीकर्तव्यं स्वस्मिन् स्वावयवत्वसम्पादनाय । व्यपदेशिवत्पदे तेन[2] तुल्यमित्यनेन वतिप्रत्यये विमर्शः कृतः । तत्र तस्येत्यनेन वतिप्रत्ययाभावे समीक्षा कृता ।

[3]तरप्तमपौ घः इति सूत्रे तरब्ग्रहणं ह्यौपदेशिकम् । औपदेशिकस्य तरपो ग्रहणम् । न चैष उपदेशे तरप्शब्दः, इति भाष्यग्रन्थे प्रदीपोद्द्योतयोः स्वरूपं तत्सम्बन्धिनी समीक्षा च कृता । तस्या अयमाशयः औपदेशिकप्रायोगिकयोरौप-देशिकग्रहणं कर्तव्यमित्यनया परिभाषया औपदेशिकस्यैव प्रामुख्यं प्रतीयते, अग्रिमेण भाष्येण तु प्रायोगिकस्यैव यद्यपि तत्त्वं निश्चीयते तत्त्वन्यद् ।

अग्रे च "नैष दोषः । अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवती"त्यादिभाष्यमादाय समीक्षायाः सारांश इत्थं बोध्यः । यथा अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसम्प्रत्ययो भवति, तथैवाऽत्र शास्त्रेऽपि प्राप्नोति, यतो हि असौ जानाति बह्वादीनां संख्यासंज्ञाकरणाच्च तासामपि ग्रहणम्, अनेन ज्ञायते यद् व्याकरणशास्त्रस्य समन्वयकारिणी दृष्टिरस्त्येव ।

---

१. पा० सू० ७।२।१७
२. पा० सू० ५।१।११५
३. पा० सू० १।१।२२

"ष्णान्ता षडिति[1]" सूत्रे शताद्यष्टनोर्नुम्नुडर्थम् । शतानि सहस्राणीत्यादिना उपदेशग्रहणाद् भवतीत्यन्तेन च भाष्यकृता यदुक्तं तस्य समीक्षा विधाय सिद्ध- विपर्यासश्च इत्यारभ्य "इदं तद्गृहमिदं तद्गृहमि"त्यन्तस्य च भाष्यग्रन्थस्य समीक्षा कृता तस्या अयमाशयः[2] "क्तक्तवतू निष्ठे"तिगेसूत्रे समानशब्दानां तादीनां प्रतिषेधः कर्तव्यः, इत्युक्त्या तस्य निरर्थकतोक्ता, क्तघटकस्य ककारानुबन्धस्य भेदकत्वात् । पुनरप्यनुबन्धे जाते अज्ञातानुबन्धस्य शङ्का कृता, यद्यप्यनुबन्धोऽनुक्तः तथापि विपर्यासोऽवश्यं भवितुमर्हति यदयं स एव तशब्दो यश्च "लोतो गर्तः" इत्यत्र वर्तते, अथवा यः लूनो गीर्ण इत्यादौ वर्तते सोऽस्तीत्यादि ।

[3]"सर्वादीनि सर्वनामानी"ति सूत्रे णत्वाभावविषयिका समीक्षा, "संज्ञोपसर्जन- प्रतिषेधविषयिका च समीक्षा, "अथवा अङ्गाधिकारे यदुच्यते, गृह्यमाणविभक्ते- स्तद्भवती" त्येतद्विषयिका समीक्षा, "कथं पुनरेकेन यत्नेनोभयं लभ्यमि" त्यादि विषयिका, "येन नाप्राप्ते तस्य बाधनं भवती"त्यादिविषयिका च समीक्षा, "अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ" इत्येतद् विषयिका च समीक्षा ग्रन्थे द्रष्टव्या ।

"विभाषा दिक्समासे बहुव्रीहौ[4]" इत्यस्मिन् सूत्रे "समासे" इति वर्तमाने पुनः समासग्रहणं किमर्थमित्यारभ्य तद्यतादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणमित्यन्तस्य भाष्यग्रन्थस्य च समीक्षा वैशद्येन सम्पादिता अस्ति, सा ग्रन्थे द्रष्टव्या ।

तृतीयाध्यायस्य चतुर्थे पादे [5]"पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायामि"ति सूत्रे "कथं पुनर्ज्ञायते स पूर्वः पाठः, अयं पुनः पाठः" इति भाष्य- मुद्दिश्य, "शाकटयुगाद्यर्थमि"त्यादि भाष्यं चोद्दिश्य समीक्षा सम्पादिता ।

पुनश्च[6] "तद्धितश्चासर्वविभक्तिरि"तिसूत्रमुद्दिश्य भाष्यकृता यदुक्तं "तच्चाप्येत- देवानुगम्यमानं दृश्यताम् किञ्चिदव्ययं विभक्त्यर्थप्रधानं, किंचिद् क्रियाप्रधानमित्यादि तद्विषयिका समीक्षा वैशद्येन विहिता ।

पुनश्च "स्त्रीपुन्नपंसकानि सत्वगुणाः" इत्यारभ्य—

---

१. पा० सू० १।१।२४
२. पा० सू० १।१।२६
३. पा० सू० १।१।२७
४. पा० सू० १।१।२८
५. पा० सू० १।१।३४
६. पा० सू० १।१।३८

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥"

इत्यन्तस्य भाष्यवचनस्य प्रदीपोद्द्योतानुसारिणी समीक्षा सम्पादिता अस्ति ।

तदनु "कृन्मेजन्तः"[1] इति सूत्रमाधृत्य "हेस्वत्वं तुग्विधेरनिमित्तमि" त्यारभ्य "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवती"–त्यन्तस्य भाष्यस्य प्रदीपोद्द्योतयोर्युक्तायुक्तत्वविवेचिका समीक्षा ग्रन्थे द्रष्टव्याः ।

अग्रे च "सुड नपुंसकस्ये"[2]ति सूत्रमुद्दिश्य "यदप्युच्यते—असमर्थसमासश्चायं द्रष्टव्यः"–इत्यादिभाष्यस्य समासविषयिका युक्तायुक्तत्वसमीक्षा, तदनु "नवेति विभाषे" ति सूत्रे "समानशब्दप्रतिषेधः"[3] इत्यंशे, "अशिष्यो वा विदितत्वादि" त्याद्यंशे च भूयसी समीक्षा युक्तायुक्तत्वविवेकगर्भा साधिता अस्ति, सा च ग्रन्थेऽवलोकनीया ।

## चतुर्थोऽध्यायः—

चतुर्थेऽध्याये "इग्यणः[4] सम्प्रसारणमि"ति सूत्रे "अथवा–इजादियजादिप्रवृत्तिश्चैव हि लोके लक्ष्यत इत्यादिना क्विति साधुर्भवति, ङिति साधुर्भवती"त्यन्ते भाष्यकृता यदुक्तं तद्विषये प्रदीपादिविवरणं प्रदर्श्य समीक्षा कृता । तस्याः भाव इत्थं बोध्यः–बुद्धिविपरीणाममात्रं स्थान्यादेशभावस्वरूपम्, तत्र यण्प्रयोगे प्रसक्ते प्रयुज्यमानो च इक् स सम्प्रसारणसंज्ञः स्यात् । तज्ज्ञानं तु यजाद्युपदेशज्ञानमात्रमेव; वचिस्वपीत्येतज्ज्ञानं विनाऽपि भवितुमर्हति । वचिस्वपीत्यादेशश्चायमर्थो बोध्यः—यण्घटितप्रयोगे प्रसक्ते इग्घटितः शब्दः प्रयोक्तव्यः, स साधुर्भवतीति साधुत्वज्ञानमेव शास्त्रेण विधीयते न तु यणः स्थाने इगुत्पद्यते । एवञ्चासाधुत्वप्रकारिका या भ्रमात्मिका बुद्धिस्तस्याः अपायः तत्र साधुत्वप्रकारकबुद्धेश्चोत्पादः शास्त्रेण सम्पाद्यत इत्यादिविस्तरेण ग्रन्थे द्रष्टव्यः ।

अग्रे "आद्यन्तौ टकितौ" इति सूत्रे "अर्थनिमित्तक एवं शब्दः"[5] यदुक्तं भाष्यकृता तद्विषये प्रदीपोद्द्योतस्वरूपयोः दर्शयित्वा महती समीक्षा कृता ।

पुनश्च "मिदचोऽन्त्यात्परः"[6] इति सूत्रे "अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः" इत्यादि भाष्यविषये प्रदीपोद्द्योतयोर्व्याख्यानं प्रदर्शयता विशदसमीक्षा

---

१. पा० सू० १।१।३९
२. पा० सू० १।१।४३
३. पा० सू० १।१।४४
४. पा० सू० १।१।४५
५. पा० सू० १।१।४६
६. पा० सू० १।१।४७

विहिता। सवर्णे च पूर्वान्तत्वपक्ष एव सिद्धान्तितो भगवता भाष्यकृता, नानादोष-प्रसङ्गेनाभक्तत्वपक्षः परादित्वपक्षश्च पराकृतः।

"एच इग्घ्रस्वादेशे"[1] इति सूत्रे "ऐचोश्चोत्तरभूयस्त्वादवर्णो न भविष्यती"-त्यादि भाष्यस्य प्रदीपोद्द्योतविषयिका समीक्षा विहिता।

पुनश्च "षष्ठी स्थाने योगे"[2] ति सूत्रेऽधिकारस्य त्रैविध्यविषयकत्वं भाष्यकृता दर्शितम्, तस्मिन् विषये प्रदीपोद्द्योतव्याख्यानगर्भा समीक्षा दर्शिता।

पुनश्च "स्थानेऽन्तरतमः"[3] इति सूत्रमुद्दिश्य तदुदाहरणविषये "इको[6] यणची" ति सूत्रं दर्शितम्, दध्यत्रेत्यादि तदुदाहरणम्, आन्तरतम्यपरीक्षा च कृता, पुनः प्रदीपोद्द्योतयोः स्वरूपनिर्देशपूर्वकं समीक्षा कृता। पुनश्चात्रैव सूत्रे "राथि-श्छान्दसः दृष्टानुविधिश्छन्दसि भवती" ति भाष्यमुद्दिश्य विशदं समीक्षितम्।

तदनु "अचेतनेष्वपी"त्यादिना "ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः" इत्यन्तेन ग्रन्थेन भाष्यकारेण यदुक्तं तत्समीक्षा या कृता सा ग्रन्थे द्रष्टव्या।

पुनश्च "उरण रपः"[4] इति सूत्रे "आदेशो रपर इति चेद्रीरिविधिषु रपरत्वस्य प्रतिषेधो वक्तव्य." इत्यादि भाष्यस्य व्याख्यानभूतयोः प्रदीपोद्द्योतयोः स्वरूपं दर्शयित्वा विशदं समीक्षा विहिता। अत्रैव सूत्रे 'अर्थवता व्यपदेशिवद्भावः। न चैषोऽर्थवान्। तस्मान्नैवं शक्यम्। न चेदेवम्, उपसंख्यानं कर्तव्यम्। इह च रपरत्वस्य प्रतिषेधो वक्तव्यः—मातु पितुरिति" भाष्यमुद्दिश्य व्याख्याभूतयोः प्रदीपोद्द्योतयो स्वरूपनिर्देशपूर्विका समीक्षा कृता।

पुनश्च लुप्यतेऽत्र प्रत्ययो "रात्सस्य" इति महाभाष्यमादाय व्याचक्षाणयोः प्रदीपोद्द्योतयोः स्वरूपं युक्तायुक्तत्वसमीक्षा च समीक्षिता।

पुनश्च "यदि पुनरयं योगशेषो विज्ञायेत" इत्यस्य भाष्यस्य "ङिच्चे"[5] ति सूत्रीयस्य "तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशः" इत्यादिभाष्यस्य च समीक्षा द्रष्टव्या।

अन्ते च "अनेकाल्[6] शित्सर्वस्ये" ति सूत्रे "शित्सर्वस्येति किमुदाहरणमि"-त्यादिभाष्यस्य विशदसमीक्षा निबन्धस्था अवश्यमालोचनीया।

---

१. पा० सू० १।१।४८
२. पा० सू० १।१।४९
३. पा० सू० १।१।५०
४. पा० सू० ६।१।७७
५. पा० सू० १।१।५१
६. पा० सू० १।१।५५

"स्थानिवदादेशोऽनल्विधौ"[1] इति सूत्रे भाष्यकृतोक्तं नैतदस्ति प्रयोजनम्। प्रातिपदिकनिर्देशोऽयम्। प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, न कांचित्प्राधान्येन विभक्तिमाश्रयन्ति। तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा सा आश्रयितव्या" इति। अत्र प्रदीपोद्द्योतयोः स्वरूपं निर्दिश्य समीक्षा विशदं विहिता।

पुनश्च "एकदेशविकृतस्यानन्यत्वात्सिद्धमि[2]"त्यादि भाष्यग्रन्थमुद्दिश्य या समीक्षा कृता तस्या अयमाशयः—स्थानिवत्सूत्रे [3]"एकदेशविकृतस्योपसंख्यानं कर्तव्यमिति वार्तिकमपूर्वं विधाय "पचती" त्यत्र तिग्रहणेन ग्रहणं यथा स्यात्, तदनु लौकिकन्यायेन तद्वार्तिकं प्रत्याख्यातं भाष्यकृता। तत्र न्यायस्य लौकिकत्वं विशदयति प्रदीपकारः छिन्ने पुच्छेऽवशिष्टाः येऽवयवाः तदीयः सन्निवेशः, श्वात्वजातिमभिव्यनक्ति, एवं पचतीत्यत्रेकारस्य "एरुः"[4]त्यनेनोकाररूपे विकारेऽप्यवशिष्टस्तकारः, तित्वधर्मस्य प्रकाशकोऽभिव्यञ्जको भवति। तथा चेकारलोपेऽपि "अपचदि" त्यादौ तकारमात्रस्य तित्वमर्थबोधजनकत्वं च भवति, नाश्वो न गर्दभ इति। अत्रत्युमुद्द्योतकृन्मतं प्रदीपसमर्थकं सम्यक् प्रतिभाति।

पुनश्च "लक्षणप्रतिपदोक्तयोः[5] प्रतिपदोक्तस्यैवेति" भाष्यमादाय तत्सम्बन्धिनोः प्रदीपोद्द्योतयोः प्रदर्शनं विधाय समीक्षा विहिता।

पुनश्च "गोः पूर्वणित्वात्वस्वरेषु प्रतिषेधो वक्तव्यः। चित्रग्वग्रं शबलग्वग्रम्। "सर्वत्र विभाषा गोः" इति विभाषा पूर्वत्वं प्राप्नोती"दं भाष्यं विवृण्वतोः प्रदीपोद्द्योतयोः स्थितिं दर्शयित्वा समीक्षा सम्पादिता, तत्रैव प्रदीपोद्द्योतयोरालोचना द्रष्टव्या।

अग्रे च "अचः[6] परस्मिन्नि" ति सूत्रे चतुर्थप्रयोजनोपपादनसमये प्रदीपोद्द्योतयोर्मतनिरूपणपुरःसरं युक्तायुक्तत्वसमीक्षा कृता।

पुनश्च "नैतदस्ति प्रयोजनमित्यादिना—"एङ्ह्रस्वात्सम्बुद्धेः"[7] इत्येग्रङ्हणं करोतीत्यन्तेन यदुक्तं भाष्यकृता तस्याः अयं भावः—अचः परस्मिन्नित्यत्र पूर्वविधाविति पदाभावे हे गौरित्यत्र औकाररूपवृद्ध्यादेशस्य परनिमित्तकत्वाद् अनेन सूत्रेण तस्य स्थानिवद्भावे सत्यौकारस्य ओकारबुद्धावेङन्तत्वाद् 'एङ् ह्रस्वादि-'त्यनेन सम्बुद्धिलोपः प्राप्नोति। पूर्वविधावित्यस्य सत्वे त्वत्र स्थानिभूता अचः पूर्वस्य विधिर्नास्तीति कृत्वा लोपो न भवति, इष्टं रूपञ्च सिध्यतीत्यादिकं बहुविशदं समीक्षणकार्यं ग्रन्थे द्रष्टव्यम्।

---

१. पा० सू० १।१।५६
२. पा० शे० ३७
३. भा०भा०वा० ३९९
४. पा०सू० ३।४।८६
५. म०भा०पृ० ४२३
६. पा०सू० १।१।५७
७. पा०सू० ६।१।६९

पुनश्च—

'स्तोष्याम्यहं पादिकमौदवाहिं ततः श्वोभूते शातनीं पातनीं च।

नेतारावागच्छतं धारणिं रावणिं च ततः पश्चात्स्रंस्यते ध्वंस्यते च॥'

इत्यादिना 'स्थानिवद्भावान्न भवती' त्यन्तेन भगवता यदुक्तं तस्याऽपि भाष्यस्य प्रदीपोद्द्योतविवरणमुखेन समीक्षा कृता, ततश्चोत्तरपदलोपे च दोषो भवति। दध्युपसिक्ताः सक्तवो दधिसक्तवः। अचीति यणादेशः प्राप्नोतीति भाष्यस्य समीक्षा-सम्बन्ध्यभिप्राय इत्थं दर्शितः—दध्नोपसिक्ताः सक्तवः दधिसक्तवः, अत्रोत्तरपदस्य लोपे कृते सत्यचः[1] परस्मिन्निति सूत्रेण स्थान्याभावे सति यणादेशः प्राप्नोति। तदुपरि प्रदीपकृतोद्द्योतकृता च यद् गभीरं व्याख्यानं तत्समीक्षितं ग्रन्थे लिखितं च।

अग्रे च चतुर्थाध्यायस्य चतुर्थे पादे 'न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वार-दीर्घजश्चर्विधिष्वि'[2] ति सूत्रमुद्दिश्य, पदान्तविधिं प्रति न स्थानिवदित्युच्यते। तत्र वेतस्वानिति रुः प्राप्नोति, अस्मिन् भाष्यग्रन्थे प्रदीपोद्द्योतयोर्विचारं दर्शयित्वा समीक्षा विहिता, तस्याः संक्षिप्तोऽयमाशयः—पदस्य अन्तः पदान्तः तस्य विधिरिति कर्मणि षष्ठ्या समासः विधानं विधिरिति भावे किप्रत्ययः। एवं चाकर्मकविधाने इत्याद्यर्थे वेतस्वानित्यत्र रुः प्राप्नोति, अनेन सूत्रेण टिलोपस्य स्थानिवत्प्रतिषेधे सान्तस्य पदसंज्ञायां रुत्वं प्राप्नोतीति भाष्याशयः।

अन्ते च शेषषष्ठ्या समासपक्षो दूषितः, उपपदविभक्तेरिति न्यायात्। पदान्तस्थानिकविधावित्यस्य पदान्तत्वावच्छिन्ने उद्देश्यताके विधावित्याद्यर्थे एषो यन् हसतीत्यादौ सुलोपापत्तिः स्यात्, पदचरमावयवे विधेये इत्यर्थे तु सुलोपे कर्तव्ये स्थानिवद्भावेन हल्परत्वं न भवति, रुत्वे कर्तव्ये तु स्थानिवत्वमेव न भविष्यति; अनेनैव स्थानिवत्वनिषेधात्।

ततश्च 'वाचिक षडिकौ न संवदेते। कर्तव्योऽत्र यत्नः' इति भाष्यग्रन्थस्य समीक्षा द्रष्टव्या। अतश्च 'पदेऽन्तः पदान्तः, पदान्तस्य विधिः पदान्तविधिः पदान्तविधिं प्रतीति' इति भाष्यस्य समीक्षा कृता।

अन्ते च "यथैवान्यान्यपि पदकार्याण्युपप्लवन्ते रुत्वं जश्त्वं च। एवमिदमपि पदकार्यमुपप्लोष्यते। किम्?। भसंज्ञा नामेत्यस्य भाष्यस्य, प्रतिषेधे स्वरदीर्घ-यलोपविधिषु लोपाजादेशो न स्थानिवदित्यस्य भाष्यस्य, अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनमि"त्यादि भाष्यस्य च समीक्षा विशदं कृता अस्ति।

---

१. पा०सू० १।१।५७ २. पा०सू० १।१।५८

अध्यायान्ते च—"द्विर्वचनेऽचि"[1] इति सूत्रमादाय "औः पुयणजिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्ये"ति भाष्यांशं गृहीत्वा" द्विर्वचनेऽचीति[2] सूत्रेऽर्थबोधन-प्रसङ्गे विशिष्टा समीक्षा विहिता, तस्याः स्वरूपं ग्रन्थेऽवलोकनीयम् ।

पञ्चमोध्यायः—

"अदर्शनं[3] लोपः" इति सूत्रे भाष्यकृतोक्तम्—"प्रसक्तादर्शनं लोपसंज्ञां भवतीति वक्तव्यम्" इति । तदुद्दिश्य प्रदीपोद्योतकृतोः आशयं दर्शयित्वा विशदं समीक्षा कृता ।

पुनश्च—एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—लुक्श्लुलुपः सर्वादेशा भवन्तीति । यदयं—"लुग्वादुहदिहलिहगुहामात्मने पदे दन्त्ये" इति लोपे प्रकृते लुकं शास्तीति । अस्याऽपि भाष्यस्य प्रदीपोद्योतव्याख्यामनुसृत्य कार्य-सांकर्यपरिहारगर्भा समीक्षा कृता । तस्याः अयं भावः–यल्लुग् ग्रहणमकृत्वा लोप एव विधिवतां सामर्थ्यात् तस्यैव सर्वादेशत्वं कल्पताम् । तत्र विपर्ययस्तु न शङ्कनीयम्, अनुपसंजातविरोधित्वात्, नोपसञ्जातः विरोधः वैयर्थ्यशङ्कोत्पत्तिर्यस्य तत्वात् । अतो लुगादीनामयोः सर्वादेशत्वं भवितुमर्हति न तु लोपस्य ।

प्रत्ययलोपे[4] प्रत्ययलक्षणमिति सूत्रे "अथ द्वितीयं प्रत्ययग्रहणं किमर्थम् ? प्रत्यय-लक्षणं यथा स्यात् वर्णलक्षणं मा भूदिति । गवे हितं गोहितम् । रायः कुलं रैकुल-मितीदं भाष्यमुद्दिश्य व्याचक्षाणयोः प्रदीपोद्योतयोः स्वरूपं दर्शयित्वा विस्तृता समीक्षा सम्पादिता, तस्याः अयमाशयः यत् प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रे द्विती-यस्य प्रत्ययग्रहणस्य प्रयोजनमिदमुच्यते भगवता भाष्यकृता-प्रत्ययलक्षणं यथा स्याद्, वर्णलक्षणं माभूदिति । तत्र प्रत्ययलोपे तल्लक्षणमित्येव सूत्रं कार्यम्, प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययरूपाश्रयेण वर्णरूपाश्रयेण वा तत्सर्वं भवति । उक्तं च भगवता-प्रत्ययं गृहीत्वा यदुच्यते तदेव प्रत्ययलक्षणम्, शब्दं गृहीत्वा यदुच्यते तन्न प्रत्ययलक्षणम् । तत्फलं च–गवे हितं गोहितं, ङिविभक्तौ परतोऽवादेशो न जात इत्यादिकमुक्त्वा प्रत्ययत्वाद्व्याप्यान्यतरधर्मावच्छिन्ननिमित्तताकमेव कार्यं प्रत्ययलक्षणेन भवति, न तु वर्णत्वव्याप्यधर्मावच्छिन्ननिमित्तताकमिति ।

अग्रे च "आमन्त्रितस्वर-सर्पिरागच्छ सप्ताऽऽगच्छत 'आमन्त्रितस्य च" इत्या-द्युदात्तत्वं यथा स्यादिति भाष्यस्य व्याख्याभूतयोः प्रदीपोद्योतयोः स्वरूपं तदुपरि समीक्षायाः स्वरूपं च वैशद्येन निरूपितमस्ति ।

---

१. पा०सू० १।१।५९ २. पा०सू० १।१।५९
३. पा०सू० १।१।६० ४. पा० सू० १।१।६२

न लुमताङ्गस्येति[1] सूत्रे महाभाष्यकृतोक्तम्– यद्यपदादिविप्रावित्युच्यते उत्तरपदाधिकारो न प्रकल्पेत। तत्र को दोषः ?। "वर्णो वर्णलक्षणात्" इत्येवमादिविधिर्न सिध्यति–" इति भाष्यस्थ सम्बन्धिभूतयोः प्रदीपोद्द्योतयोः स्वरूपं निर्दिष्टं समीक्षा च विहिता। 'द्वन्द्वेऽन्त्यस्य लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वार्तिकस्य भाष्योक्तस्य, पुनश्च "अथवा–शिल्लोपः करिष्यते" इत्यादिभाष्यस्य, प्रदीपोद्द्योतश्च समीक्षा कृता।

तदनु "तस्मिन्निति[2] निर्दिष्टे पूर्वस्ये"ति सूत्रे "अन्यथाजातीयकेन शब्देन निर्देशः क्रियते, अन्यथाजातीयक उदाह्रियते" इत्यस्य, स्वं रूपं शब्दस्याशब्दसंज्ञेति सूत्र ज्ञित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थमित्यादिभाष्यस्य च तत्सम्बन्धिनोः प्रदीपोद्द्योतयोः।

पुनश्च "अणुदित्सवर्णस्य[3] चाप्रत्ययः" इति सूत्रे–एवं तर्हि सिद्धे सति यद् "अप्रत्ययः" इति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो–भवत्येषा परिभाषा–"भाव्यमानेन सवर्णानां ग्रहणं ने"ति भाष्यस्य।

पुनश्च "तत्र प्रत्याहारग्रहणे सवर्णानां ग्रहणं न प्राप्नोती"त्यादिभाष्यस्य, तद्व्याख्यानभूतयोः प्रदीपोद्द्योतयोश्च समीक्षा ग्रन्थे द्रष्टव्या।

"तपरस्तत्कालस्येति"ति[4] सूत्रे महाभाष्यं–"तपरस्तत्कालस्य" इति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नानां ग्रहणं न प्राप्नोति। केषाम् ?। उदात्तानुदात्तस्वरितानुनासिकानाम्" इति भाष्यस्य, तत्सम्बन्धिनोः प्रदीपोद्द्योतयोः स्वरूपं दर्शयित्वा विशदं समीक्षा कृता।

"अग्रे च "येन[5] विधिस्तदन्तस्ये"ति सूत्रे अपि चान्तरङ्गं बहिरङ्गे न प्रकल्पेयाताम्। तत्र को दोषः ? स्योनः, स्योना। अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः प्रसज्येत्। ऊनशब्दमाश्रित्य यणादेशो, नशब्दमाश्रित्य गुणः" इति भाष्यमुद्दिश्य व्याख्यां कृतयोः प्रदीपोद्द्योतयोः स्वरूपं निर्दिष्टं तत्सम्बन्धिनि समीक्षा च विहिता।

पुनश्च "अलैवानर्थकेन, नान्येनानर्थकेनेति वक्तव्यमि" त्यादिभाष्योद्देश्येन प्रवृत्तस्य प्रदीपस्योद्द्योतस्य च स्वरूपनिर्देशपूर्विका युक्तायुक्तत्वसमीक्षा विहिता।

---

१. पा० सू० १।१।६९
२. पा० सू० १।१।६६
३. पा० सू० १।१
४. पा० सू० १।१।७०
५. पा० सू० १।१।७२

अन्ते च "सिद्धमजाकृतिनिर्देशात्, अच आकृतिर्निदिश्यते" इति "वृद्धिर्यस्याचामादिस्तद् [1]वृद्धमि"ति सूत्रीयं भाष्यमन्यद् भाष्यं चोद्दिश्य प्रदीपोद्योतयोर्या व्याख्या कृता, तदंशे समीक्षा विधाय यथोचितं स्वरूपं स्थिरीकृतं तच्च ग्रन्थेऽवश्यमालोचनीयम् ।

ग्रन्थस्यास्य प्रकाशनार्थं वयं भारतसर्वकारस्य दिल्लीस्थमानवसंसाधनविकासमन्त्रालयस्य संस्कृतविभागस्य सहायकशिक्षापरामर्शदातृणां डॉ० रामकृष्णशर्ममहोदयानां कृतज्ञाः स्मः, ये सहृदयतया अस्मानेतत्कार्यार्थं प्रेरितवन्तः । डॉ० नर्वदेश्वरतिवारिमहाभागानामपि स्नेहो मया न विस्मर्यते, यैर्जीवनकलाप्रेरणा सदा प्राप्नोत्येव । मित्रवरा डॉ० भगवतीशरणद्विवेदिनः, आचार्यपण्डितश्रीशिवदत्तमिश्राश्च निश्चयेन समादरस्य धन्यवादस्य च सर्वथाऽर्हाः; ये मुद्रणसम्बन्धिकार्येषु स्वकीयानमूल्यान् समयान् श्रमांश्चार्पितवन्तः । अत्र सर्वविधसफलतासु भगवतः श्रीवटुकभैरवस्य कृपाकटाक्ष एव सर्वथा हेतुरिति श्रद्दधामः । ग्रन्थोऽयं वाराणसेयस्य सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य विद्यावारिधिः ( पी—एच्० डी० ) इत्युपाधिप्राप्त्यर्थं १९७९ ई० वर्षे स्वीकृतोऽस्ति । विभिन्नविश्वविद्यालयेषु शास्त्र्याचार्यादिकक्षाणां विषयोऽयं पाठ्यक्रमे निर्धारितः । अतोऽस्य ग्रन्थस्य प्रकाशनमत्यावश्यकमित्यवधार्य प्रकाशयित्वा भवत्करेषु समर्पयन्तो महामोदमनुभवामः । मुद्रणे प्राप्तानेकविधव्यावहारिकविघ्नहेतुकागतत्रुटयोऽग्रिमे संस्करणेऽवश्यं संस्करिष्यन्ते ।

आशास्महे यत् सुधिय एनं सस्नेहं स्वीकृत्यात्रागतत्रुटीर्निदिश्यास्मभ्यं सेवाया अवसरं प्रदास्यन्ति । अनेनेषदप्युपकारो भविष्यति यदि कस्यचिदपि, तर्हि श्रमः सार्थको धन्यश्च सञ्जात इति ज्ञास्यामः । ओं शान्तिः, शान्तिः, शान्तिः ।

विदुषामनुचरः
**गिरीशचन्द्र त्रिपाठी**

हरिप्रबोधिनी एकादशी
वि० सं० २०४४



---

१. पा० सू० १।१।७३

# विषयानुक्रमणिका

**विषयाः** — **पृष्ठाङ्काः**

भूमिका — १–३३
मङ्गलाचरणम्

**प्रथमाऽध्याये प्रथमपादः**

अथ शब्दानुशासनम् — १
केषां शब्दानाम् — ४
यर्त्तर्हि तद्भिन्नेष्वभिन्नम् — ५
कानि पुनः शब्दानुशासनस्य प्रयोजनानि — ७
असन्देहार्थञ्चाध्येयं व्याकरणम् — ९
दुष्टः शब्दः — १०
चतुर्भिश्च प्रकारैः विद्योपयोगिता भवति — १३

**द्वितीयः पादः**

लोके तावदभक्ष्यो ग्राम्यकुक्कुटः — १५
खेदात्स्त्रीषु प्रवृत्तिर्भवति — १६
कश्चेदानीमन्यो भवज्जातीयकः — १७
किं पुनः शब्दस्य ज्ञाने धर्मः — १८
अथवा–कूपखानकवदेतद् भविष्यति — १९
किमर्थमिदमुच्यते — २१
द्विगता अपि हेतवो भवन्ति — २३

**तृतीयः पादः**

अइउण् — २५
ऋऌक् — ३१
एओङ्, ऐऔच् — ३७

**चतुर्थः पादः**

हयवरट् — ४३
लण् — ५१
ञमङणनम्, झभञ् — ५६

| विषयाः | पृष्ठाङ्काः |
|---|---|
| **द्वितीयाऽध्याये प्रथमः पादः** | |
| वृद्धिरादैच् | ५८ |
| इको गुणवृद्धी | ६३ |
| **द्वितीयः पादः** | |
| न धातुलोप आर्धधातुके | ६९ |
| क्ङिति च | ७४ |
| **तृतीयः पादः** | |
| दीधीवेवीटाम् | ८१ |
| हलोऽनन्तराः संयोगः | ८३ |
| **चतुर्थः पादः** | |
| मुखनासिकावचनोऽनुनासिकः | ८७ |
| तुल्यास्यप्रयत्नं सवर्णम् | ८८ |
| नाज्झलौ | ९६ |
| **तृतीयाऽध्याये प्रथमः पादः** | |
| ईदूदेद्द्विवचनं प्रगृह्यम् | ९९ |
| अदसो मात् | १०७ |
| शे | ११३ |
| निपात एकाजनाङ् | ११४ |
| ओत् | ११८ |
| उञ ऊँ | १२२ |
| **द्वितीयः पादः** | |
| इदूतौ च सप्तम्यर्थे | १२४ |
| दा धाघ्वदाप् | १२५ |
| आद्यन्तवदेकस्मिन् | १३५ |
| तरप्तमपौ घः | १३६ |
| बहुगणवतुडतिसंख्या | १३७ |
| **तृतीयः पादः** | |
| ष्णान्ता षट् | १३९ |
| क्तक्तवतू निष्ठा | १४० |

**विषयाः** **पृष्ठाङ्काः**


सर्वादीनि सर्वनामानि १४२
विभाषादिक्समासे बहुव्रीहौ १४६
न बहुव्रीहौ १४८

**चतुर्थः पादः**

तृतीया समासे १५२
पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १५३
अन्तरं बहिर्योगोपसंव्यानयोः १५३
तद्धितश्चासर्वविभक्तिः १५५
कृन्मेजन्तः १५७
सुडनपुंसकस्य १६०
नवेति विभाषा १६१

**चतुर्थाऽध्याये प्रथमः पादः**

इग्यणः सम्प्रसारणम् १६६
आद्यन्तौ टकितौ १६८
मिदचोऽन्त्यात्परः १७०
एच इग्घ्रस्वादेशे १७२
षष्ठीस्थानेयोगा १७५

**द्वितीयः पादः**

स्थानेऽन्तरतमः १७७
उरण् रपरः १८१
अलोऽन्त्यस्य १८८
ङिच्च १९०
अनेकाल् शित्सर्वस्य १९२

**तृतीयः पादः**

स्थानिवदादेशोऽनल्विधौ १९५
अचः परस्मिन् पूर्वविधौ २०३

**चतुर्थः पादः**

न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु २१४
द्विर्वचनेऽचि २२५

**विषयाः** **पृष्ठाङ्काः**

**पञ्चमाऽध्याये प्रथमः पादः**

अदर्शनं लोपः २२९
प्रत्ययस्य लुक्श्लुलुपः २३०
प्रत्ययलोपे प्रत्ययलक्षणम् २३१

**द्वितीयः पादः**

न लुमताङ्गस्य २३४
अलोऽन्त्यात्पूर्व उपधा २३७
तस्मिन्निति निर्दिष्टे पूर्वस्य, तस्मादित्युत्तरस्य २३८

**तृतीयः पादः**

स्वं रूपं शब्दस्याशब्दसंज्ञा २४०
अणुदित्सवर्णस्य चाप्रत्ययः २४१
तपरस्तत्कालस्य २४४

**चतुर्थः पादः**

येन विधिस्तदन्तस्य २४६
वृद्धिर्यस्याचामादिस्तद् वृद्धम् २५०
त्यदादीनि च २५१
उपसंहारः २५४
परिशिष्टम्
(क) सङ्केत-सूची २५६
(ख) सहायकग्रन्थ-सूची २५८



## प्रस्तुतग्रन्थे नवाह्निकभागे व्याख्याताऽव्याख्यातसमुदितसूत्रसङ्ख्या

| अध्यायाः | प्रथमः | द्वितीयः | तृतीयः | चतुर्थः | पञ्चमः |
|---|---|---|---|---|---|
| शिवसूत्राणि | १४ | × | × | × | × |
| पाणिनिसूत्राणि | × | १० | ३४ | १५ | १६ |
| भाष्ये व्याख्यातसूत्राणि | ८ | ९ | ३० | १५ | १५ |
| निबन्धे समीक्षितसूत्राणि | ८ | ९ | २३ | १४ | १३ |
| भाष्येऽव्याख्यातसूत्राणि | ६ | १ | ४ | × | १ |
| निबन्धेऽसमीक्षितसूत्राणि | × | × | ७ | १ | २ |
| सर्वयोगः | शि० सू० १४ | पा० सू० ७५ | भा० व्या० सू० ७७ | ग्रन्थे स० सू० | ६७ |

भाष्ये व्याख्यातसूत्रेष्वेव ग्रन्थेऽसमीक्षितसूत्राणि ज्ञेयानि ।

## मङ्गलाचरणम्

यमाराध्य विज्ञा लभन्तेऽनवद्यां
समज्ञां बुधैः संस्तुतां साधुविद्याम् ।
नगेशात्मजा सात्मजा यत्सनीडे-
अशेषार्थदं शेषभूषं तमीडे ॥१॥

आदौ प्रणम्य जननीं विबुधैकवन्द्यां
दुर्गां दयार्द्रहृदयां प्रतिभानगम्याम् ।
भूयः सरोजवदनां सरसीरुहस्थां
वाग्देवतामखिलकामदुहं नमामि ॥२॥

शेषाशेषगिरां सारं वेत्तारं जैयटात्मजम् ।
नत्वोद्द्योतकरं विज्ञं नागेशं हृदि भावये ॥३॥

गिरीशचन्द्रो गूढार्थं महाभाष्यं यथामतिः ।
प्रदीपोद्द्योतरीत्याऽहं समीक्षे विदुषां मुदे ॥४॥



॥ श्रीः ॥

# महाभाष्य-समीक्षणम्

## ( प्रदीपोद्द्योतानुसारि-नवाह्निकं यावत् )

## प्रथमोऽध्यायः

### म० भा०[1]—अथ शब्दानुशासनम् ।

**अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते । शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् ।**

(प्र०) [2]भाष्यकारो विवरणकारत्वाद् व्याकरणस्य साक्षात्प्रयोजनमाह-अथ शब्दानुशासनमिति । प्रयोजनप्रयोजनानि तु रक्षोहादीनि पश्चाद् वक्ष्यति । स्ववाक्यं व्याख्यातुं तदवयवमथशब्दं तावद् व्याचष्टे—अथेत्ययमिति । इतिशब्दोऽथशब्दस्य स्वरूपेऽवस्थापनाय प्रयुक्तः । एवं हि पदान्तरैः सामानाधिकरण्येन संबन्धे सत्यथशब्दो व्याख्यातुं शक्यते । स्वरूपेऽवस्थितश्च सर्वनाम्ना परामृश्यते—अयमिति । शब्द इति स्वरूपकथनं विस्पष्टप्रतिपत्यर्थम् । अधिकारार्थ इति । अधिकारः प्रस्तावो द्योत्यत्वेनास्य प्रयोजनमित्यर्थः । निपातानां च द्योतकत्वं वाक्यपदीये निर्णीतम् ।

(उ०) [3]ननु निपातानां द्योतकत्वादभिधेयवाच्यथशब्दोऽनुपपन्नोऽत आह—अधिकार इति । प्रस्ताव इति । प्रारम्भ इत्यर्थः । स चार्थाद्व्याख्यायमानस्य । अथशब्दः प्रयोजनवाचीति भावः । निपातानां च द्योतकत्वमिति । निपातानां द्योतकत्वं चेत्यर्थः । उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारस्याव्ययं[4] विभक्तीति सूत्रे भाष्ये स्पष्टत्वात् । उपसर्गाणां तु द्योतकत्वमेवेति स्पष्टं गतिर्गताविति [5]सूत्रे भाष्ये इति तत्रैव निरूपयिष्यामः । अत एव साक्षात्क्रियते गुहरित्यादि संगच्छते । प्रारम्भक्रियाविषयत्वद्योतकस्यापि अथशब्दस्यान्यार्थं नीयमानादध्यादिवन्मङ्गलत्वमपीत्युभयार्थमथशब्दः प्रयुज्यत इति फलितम् । परे त्वत्र वाचकत्वमेवेच्छन्ति । अधिकृतमिति च तदर्थं वदन्ति । भाष्ये प्रयुज्यत इत्यनेन वर्तमाननिर्देशेन सर्वलोकसिद्धमस्याधिकारार्थत्वं न तु वृद्ध्यादिवत्पारिभाषिकमिति ध्वनितम् ॥

---

१. म० भा० आ० १, पृ० ३
२. प्र० पृ० ३
३. उ० पृ० ३
४. पा० सू० २।१।६
५. पा० सू० ८।१।७०

अत्र प्रदीपकारः -[१] इदं मङ्गलभाष्यमित्थं व्याचष्टे—यद्भाष्यकारः स्वयं विवरणकारोऽपि वर्तते, यतः स्ववाक्यस्य स्वयमेव व्याख्यानं करोति । अतः पूर्वं व्याकरणशास्त्रस्य प्रस्तावे प्रयोजनोपवर्णनमुखेन तल्लक्षणमप्याह—अथशब्दानुशासनमिति । यद्यपि वेदस्य रक्षोहादीनि प्रयोजनानि भाष्यकृता स्वयं वक्ष्यन्ते तथाऽपि तानि न साक्षात्प्रयोजनान्यपि तु प्रयोजनप्रयोजनानि । शब्दानुशासनमिति पदेन तु साधुशब्दानुशासनं शब्दनिष्ठसाधुत्वानुशासनं वेत्यर्थेऽग्रे वर्णयिष्यते । इदानीमथशब्दानुशासनमिति वाक्यं व्याचक्षाणो भाष्यकारस्तदवयवमथशब्दं व्याचष्टे--अथेत्ययमिति । अत्र "इति" शब्दोऽथशब्दस्य स्वरूपपरत्वं व्यवस्थापयति । अत एव सर्वनाम्ना स परामृश्यते । पुनः शब्द इत्यनेन स्वरूपकथनं स्पष्टप्रतिपत्तये, अधिकारार्थ इत्यत्र बहुव्रीहिसमासः, अधिकारो नाम प्रस्तावः, अर्थः प्रयोजनं द्योत्यतया अस्याऽस्ति, निपातानां तु द्योतकत्वमेव वाक्यपदीयकृता निर्णीतम् ।

अत्रोद्द्योतकारः--"व्याचष्टे" इति प्रतीकमादाय पदार्थज्ञानायानन्तर्याद्यर्थकत्वनिरासाय चेति शेषः, इति व्याचख्यौ । तद्व्याख्यावसरे छायाग्रन्थे—[२]"नन्वानन्तर्यमर्थः प्रसिद्ध एवात आह—आनन्तर्यादिति" । आदिना मङ्गलान्तरारम्भप्रश्नकार्त्स्न्येष्वथोऽथ इति कोशोक्तपरिग्रह इत्युक्तम् । तदनुसारेणात्र अथशब्द आनन्तयार्थः, प्रश्नार्थो वा, कार्त्स्न्यार्थो वा, मङ्गलार्थो वेत्यादि, संशयो भवितुमर्हति । तत्र न प्रथमः पक्षः प्राक्तनस्य कस्यचिद्विषयस्य निरूपणाभावात्, नाऽपि द्वितीयः तथा सति व्यवस्थाया असम्भवात्, नाऽपि च तृतीयः शास्त्रविषये जिज्ञासानन्तर्यस्य शास्त्रविषयात्कथनेनैव ध्वनितत्वात्, तथात्वे तु पौनरुक्तप्रसङ्गात्, चतुर्थे त्विष्टमेव प्रसक्तं किन्तु - अधिकारार्थत्वविरोधकभाष्येण न विरोधः, यतो हि-- अन्यार्थं नीयमानस्य दध्यादेरन्यस्य कृतेऽपि यथा मङ्गलसूचकत्वं सैव रीतिरत्रापि योजनीया । अधिकारार्थद्योतकोऽपि "अथ" शब्दः मङ्गलव्यञ्जकोऽपि भविष्यति तत्र का क्षतिः ?

[३]ननु सकृदुच्चरितन्यायविरोध इति चेन्न, अधिकाररूपार्थस्य व्यङ्गत्वं वाच्यत्वं वेति तु शब्दजन्यशाब्दबोधविषयार्थदृष्टचा मङ्गलार्थत्वं तूच्चारणप्रयोजनदृष्टचा, अथशब्दोच्चारणेन श्रवणेन च मङ्गलं फलं भवतीति तत्त्वम् । स्पष्टञ्चेदं गौरवाभिसन्धिप्रकाशे तत्त्वालोकटिप्पणे चेति विस्तरतस्तत्राऽप्ययं विषयः वर्णितोऽस्ति ।

---

१. प्र० पृ० ३ २. उ० पृ० ३

३. —ल० मं० आ० नि० —गौ० प्र० पृ० १

अत्रोद्द्योतकार उपसर्गातिरिक्तनिपातानां द्योतकत्वं वाचकत्वञ्चोभयमपि भाष्ये निर्णीतम्, उपसर्गाणां तु द्योतकत्वमेव स्पष्टीकृतं [1]गतिर्गतौ इति सूत्रे भाष्ये, इत्येवं व्याचक्षाणः प्रदीपविरुद्धं सिद्धान्तं स्थापयति ।

**निष्कर्ष :—**

वस्तुतस्तु विशेषतो विमर्शे प्रदीपसम्मत एव सिद्धान्तः साधीयान् प्रतीयते, तथा हि–कालत्रयप्रयोगसंभवे उपस्थितत्वाद् वर्तमानकालनिर्देश एवौचित्यमादधातीति तेन निर्देशेन सर्वलोकप्रसिद्धमधिकारार्थत्वं न शक्यते व्यञ्जयितुम् । किञ्च वाचकत्वांशे सर्वलोकप्रसिद्धमिति हेतुगर्भं विशेषणमपि नात्यन्तमुपकारकं प्रतीयते, त्वचाज्ञातमित्यत्र त्वक्शब्दस्य त्वगिन्द्रियरूपेऽर्थे तैलादिशब्दस्य सर्षपाद्यर्थे च प्रसिद्धिसत्वेऽपि तत्र तत्रार्थे न शक्तिसिद्धिरिति व्यतिरेकव्यभिचारो द्रष्टव्यः, हेतुसत्वेऽपि साध्याभावः । किञ्च यदि भाष्यस्य तादृशं तात्पर्यं स्यात्तर्हि "अथेत्यं शब्दोऽधिकारार्थं वक्तीत्येवं" वच्धातुमेवोच्चारयेत्, तेन सर्वथा संशयोच्छेदः स्यात् । किञ्चास्मिन् पक्षे "अथ" शब्दस्याधिक्रियतेऽधिकृतम्, अधिकार इत्येतेष्वर्थेषु ववशक्तिः स्वीकार्या इति प्रमाणविशेषो न लक्ष्यते । प्रदीपसम्मते द्योतकतापक्षे तु तत्र तत्र योग्यताबलेनाधिकृतमित्यादिपदाध्याहारेणेष्टसिद्धिर्भविष्यति, अत एवानेकक्रियाविषयस्याऽपि शब्दानुशासनस्याऽऽरभ्यमाणता परिलक्ष्यत अथशब्दस्य सन्निधानादित्यर्थकमुक्तं प्रदीपे, निपातानां वाचकत्वद्योतकत्वोभयपक्षस्तु लक्ष्यानुरोधेनैव व्यवस्थापयितुं शक्यत इति वाक्यदेशन्यायेन प्रसक्तं यत्पदान्तरनिष्ठवाचकत्वं तेनैवेष्टसिद्धोऽधिकारनिरूपितं द्योतकत्वमेवाथशब्दे कल्पयितुं युक्तमिति प्रदीपमतमेव समीचीन प्रतिभाति ।[2]

**भाष्ये शब्दानुशासनमिति—**

शब्दानुशासनमित्यत्र कर्मणि षष्ठ्या तत्पुरुषसमासः । "अत्रोभयप्राप्तौ कर्मणो" ति सूत्रेण कर्मण्येव षष्ठीतिनियमो न प्रवर्तते कर्तृवाचकस्याचार्यपदस्याप्रयोगात्, कर्तृकर्मोभयवाचकपदयोः प्रयोगे एव तत्सूत्रस्य प्रवृत्तिर्भवतीत्यस्य "आत्ममाने खश्चे"[3]ति सूत्रे भाष्ये स्पष्टत्वात् । अतः [4]"कर्मणि चे" ति समासप्रतिषेधस्य प्रसङ्गो नास्ति, शास्त्रमित्यस्य व्याख्यातव्यत्वेनेति शेष अवगन्तव्यः । इदं च शब्दानुशासनमिति पदं व्याकरणापरपर्यायभूतम् । नन्वत्र शास्त्रत्वं कुत इति न शङ्कितव्यम्—

---

१. पा० सू० ८।१।७०
२. पा० सू० २।३।६६
३. पा० सू० ३।२।८३
४. पा० सू० २।२।१४

"प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥"

इत्युक्त्या प्रवृत्त्याद्युपदेशप्रयोजकत्वादस्य शास्त्रत्वं लक्ष्यते, एतद्बोधिताः शब्दाः साधवः त एव प्रयोक्तव्या न असाधुशब्दाः इत्येवं रूपेणार्षोपदेशः, एतद्विषयेऽपि वर्तत एव। एवञ्च साधुशब्दज्ञापकमिदं व्याकरणशास्त्रं व्याख्येयमित्येवं जिज्ञासुभिर्ज्ञातव्यम् ।

### म० १०–[1]केषां शब्दानाम् ?

अत्र प्रदीपकार इत्थं व्याचष्टे—[2]शब्दशब्दस्य सामान्यशब्दत्वात् प्रकरणाद्यभावे विशेषार्थानवगमाद् वीणाशब्दः काकादिपक्षिशब्दः । एवमन्योऽपि शब्द एतस्यानुशासनस्य विषयो भवेदिति प्रश्नबोधकभाष्यस्याशयः । तत्र एषा शङ्का जागर्ति यत्सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वमिति नियमे वर्तमाने सति कथं केषामित्यनेन शब्दानां परामर्शः, तेषामनुशासनविशेषणत्वादित्यत्र समादधाति प्रदीपकारः—उत्तरपदार्थान्तिर्गतस्याऽपि पूर्वपदार्थस्य बुद्ध्या प्रविभागात्किमाप्रत्यवमर्शः । यथा—"राजपुरुषः" इत्युक्ते कस्य राज्ञ इति ।

अत्रोद्द्योतकारः—इत्थं व्याचख्यौ–लोकव्यवहारे[3] ध्वनौऽपभ्रंशे च शब्दशब्दस्य प्रयोगः क्रियतेऽतः शब्दपदं सामान्यार्थकं भवितुमर्हति, यद्यपि व्रीहीन् प्रोक्षतीत्यादौ सामान्यशब्दस्याऽप्यपूर्वविषयेषु व्रीहिविशेषेषु प्रवृत्तिरनुभूयते, तावदत्र शब्दपादमपि साधुशब्दे ( विशेषे ) एव प्रवृत्तो भवेदिति समाधानं कर्तुं शक्यते, तथाऽपि तत्र व्रीहिशब्दस्य प्रकरणबलेन विशेषेऽवस्थानमत्र तु तन्नास्तीति बोध्यम् । पुनश्चोत्तरपदार्थान्तर्गतस्येत्यादिप्रदीपग्रन्थं योजयति—ननूत्तरपदार्थसंसृष्टेत्यादिना । अयमाशयः--उत्तरपदार्थः संसृष्टो यत्र तादृशस्य पूर्वपदार्थस्य सर्वनामसंज्ञकेन किं शब्देन परामर्शो न संभवति, तस्योत्तरपदार्थत्पार्थक्येनोपस्थितविषयत्वाभावात् मन्ये

---

१. म० भा० आ० १, पृ० ५ २. प्र० पृ० ५
३. उ० पृ० ५

प्रदीपग्रन्थ इदमेवान्तर्गतत्वं पूर्वपदार्थस्योक्तमिति। तत्र पूर्वपदार्थस्य मनसा वाक्यजन्यबुद्ध्या वा विभागो विधेय इत्युक्ताशयः। यथा—"राजपुरुषः" इत्यत्र समस्तराजपुरुषपदजन्यैकोपस्थितविषयस्य विशेषणीभूतस्याऽपि राज्ञो बुद्धिकृद्विभागेन किंशब्दः परामर्शकः, किं च "दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ" इति साङ्ख्यकारिका[1] व्याचक्षाणेन दार्शनिकसार्वभौमश्रीवाचस्पतिमिश्रेणोक्तं यदुपसर्जनीभूतस्याऽपि दुःखत्रयस्य तच्छब्देन परामर्शः। एवञ्च सर्वनाम्नां प्रधानपरामर्शित्वं प्रायिकं बुद्धिस्थपरामर्शित्वमेव नैयमिकमिति प्रतिभाति, तथा प्रकृतेऽपि समाधानं सुकरम्।

**म० भा०—[2]यर्त्तहि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं, स शब्दः ?**

(प्र०)—[3]भिन्नेष्वभिन्नमिति। अनेन सामान्यस्यैकत्वं कथ्यते। छिन्नेष्वच्छिन्नमिति। अनेन तु नित्यत्वम्। सामान्यभूतमिति। सत्ताख्यमहासामान्यं गोत्वादेः सामान्यविशेषस्योपमानं निर्दिष्टम्। सामान्यमिव सामान्यभूतम्। भूतशब्द उपमार्थे, यथा पितृभूत इति।

(उ०)—[4]भूतशब्दप्रयोगानुपपत्तिं परिहरति—सत्ताख्यमिति। एवं हि वृक्षवदाम्र इत्याद्यापत्तेः। सामान्यश्रुतेः सर्वसामान्यविषयत्वेन प्रवृत्तायाः संकोचे कारणाभावाच्च। उपमाकथनस्य प्रकृतेऽनुपयोगाच्च। अध्याहारे गौरवाच्च नेदं युक्तम्। किं तु स्वरूपवाची सः। वृद्धिसंज्ञासूत्रस्थभाष्यप्रयोगस्य "प्रमाणभूत" इत्यस्य स्वयं करिष्यमाणव्याख्यानरीत्याऽस्यापि व्याख्यानसंभवात्। पितृभूत इत्यत्राप्यन्यत्रान्यशब्दप्रयोगः सादृश्यपर इति सादृश्यप्रतीतिर्न त्वस्य सादृश्यवाचकत्वे मानमस्तीति दिक्।

अत्र प्रदीपाशयः—सामान्यमिवेति सामान्यभूतं सामान्यसदृशं गोत्वादिकम्, भूतशब्दः सादृश्यार्थकः पितृभूत इत्यादौ यथा। ननु सादृश्ये यदि गोत्वघटत्वादिकमनुयोगि तर्हि किं तत्सामान्यं यत्प्रतियोगितया मन्येत इत्यत उक्तम्—सत्ताख्यमित्यादि। सत्तारूपं महासामान्यमित्यर्थः।

---

१. सां० का० १
२. म० भा० पृ० ९
३. प्र० पृ० ९
४. उ० पृ० १०

अत्रोद्योतकारः प्रदीपाशयं विवृण्वन्नित्थं ब्रवीति–[1]यदुपमार्थके भूतशब्दे नियमेन प्रतियोग्याकांक्षाया उत्थानं भवति, सा यदि न शाम्यति तदा भूतशब्दप्रयोगो नैवोपपद्यते। वस्तुतस्तु यदि सामान्यार्थस्य सादृश्यप्रतियोगित्वम्, विशेषार्थस्य तु तदनुयोगित्वं स्वीक्रियते तर्हि "वृक्षवदाम्रः" इत्यपि प्रयोगः स्यादित्यादिभिः बहुभिर्हेतुभिः प्रदीपसम्मतस्योपमार्थकत्वस्य खण्डनं विधाय स्वरूपार्थकत्वमङ्गीचकार, वृद्धिसंज्ञासूत्रीयं प्रमाणभूत इति भाष्यप्रयोगञ्च प्रमाणतया उपस्थापयाञ्चकार, पितृभूत इति दृष्टान्तमप्यनुचितं साधयामास।

अत्र समीक्षा–सामान्यभूतमित्यत्र भूतशब्दः स्वरूपार्थकः न तु प्रदीपसम्मतोपमार्थक इत्यत्रोद्योतकृता ये हेतव उपन्यस्ता क्रमेण तेऽत्र विमृश्यन्ते—

(क) तत्र गोत्वरूपस्य जातिविशेषस्य (सामान्यविशेषस्य) सत्तारूपा व्यापिका जातिः यद्युपमानं भवेत् (सादृश्यप्रतियोगिनी भवेत्) तदा (वृक्षवदाम्रः) इत्यपि प्रयोगः आपद्येदिति प्रथमो हेतुः। स च विचारे कृते आपातरमणीयः प्रतीयते, तथा हि—सामान्यविशेषयोः (व्यापकव्याप्ययोः) सत्तागोत्वयोः परस्परं भिन्नत्वेन गोत्वनिरूपितस्य भेदघटितसादृश्योपमानस्य तत्र सत्तायां संभवात्, सत्ता इव गोत्वमिति प्रयोगः साधुतरः प्रतीयते। "तद्वद्वृक्षवदाम्रः" इति तु न साधुः, अत्र सामान्यविशेषयोः परस्परमभिन्नत्वेन भेदघटितस्य सादृश्यस्यासम्भवात्।

(ख) सामान्यश्रुतेः (सामान्यशब्दस्य) सर्वसामान्यविषयत्वेन प्रवृत्तायाः (एकसामान्यार्थविषयकबोधजनकस्य) सङ्कोचे (सत्ताख्ये सामान्यविशेषे सङ्कोचे) कारणाभावादिति द्वितीयो हेतुरप्यापातत एव शोभते। अविशेषेण प्रवृत्तस्याऽपि ब्राह्मणादिशब्दस्य क्वचिद् ब्राह्मणोऽयं हरदत्त इत्यादिस्थले प्रकरणादि वशाद्यथा विशेषपरत्वं तद्वत्प्रकृतेऽपि, प्रकरणरूपहेतुवशात् सामान्यशब्दस्य सत्तारूपविशेषेऽवस्थानसम्भवात्।

(ग) उपमाकथनस्य प्रकृतेऽनुपयोगाच्चेति तृतीयमपि कारणं न सम्यक्। गोत्वादिरूपस्य जातिविशेषस्य स्वरूपपरिचयायोपमाकथनस्योपयोगसंभवात्। अतश्च गौरिति विज्ञाने प्रतिभासमाने द्रव्ये [2]यद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं धर्मविशेषरूपं वस्तुसत्ता इव प्रतीयते किं सशब्द इति प्रश्नाभिप्रायः पर्यवसीयते, यद्यपि गोत्वादि जातिविशेषः प्रत्यक्ष एव, तत्परिचयो नापेक्षते तथाऽपि अपोहवादि बौद्धानां मते जातेरनङ्गीकारेण तत्र वादिनां विप्रतिपत्तिसत्त्वे तस्याः प्रत्यक्षसिद्धत्वाभावात्।

---

१. उ० पृ० १०

२. म० भा० आ० १, पृ० ९

(घ) अध्याहारे गौरवाच्चेति चतुर्थोऽपि हेतुर्न रोचते, यतो हिगोत्वरूपजातीय-विशेष उपमेयः, तद्वाचकशब्दस्याध्याहारे गौरवं स्यादित्येवोद्द्योतकर्तुः तात्पर्यम्, तत्र मयाऽपि तद्वाचकपदस्याध्याहारः निष्प्रयोजनत्वान्न विधीयते, किन्तु पितृभूतोऽय-मित्यादौ यथा उपमेयस्येदमः परामर्शः, तथैव प्रकृतेऽपि, यर्ताह भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नमित्यननैवोपमेयस्य परामर्शः कार्यः।

(ङ) यत्तु वृद्धिसंज्ञासूत्रस्थेत्याद्युक्तं तदप्यनुभवविरुद्धमेव, तत्रोपमार्थकस्य भूतशब्दस्यानुपयोगात्, स्वरूपार्थकस्यैव युक्तत्वात्, यतो हि—तत्राचार्यांशे प्रमाणं विवक्षितं न तु प्रमाणसादृश्ये, यतो हि- प्रमाणस्योक्तिरर्थवती भवति न तु तत्सदृशस्य। प्रकृते तु गोत्वरूपधर्मस्य जातितया परिचयसम्पादने उपमार्थस्योपयो-गोऽस्त्येव।

(च) न त्वस्य सादृश्यवाचकत्वे मानमस्तीति दिगित्यन्तिमो हेतु रपि हेत्वाभास एव, शक्तिग्राहकेषु परिगणितः कोश एव तत्र प्रमाणम्, तथा हि —अमरकोशे तृतीय-काण्डे नानार्थवर्गे उक्तम्—

"युक्ते [1]क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु।
वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले॥"

तट्टीकायामपि—

[2]"भू तंक्ष्मादौ पिशाचादौ, जन्तौ क्लीबं त्रिषूच्यते।
प्राप्ते वित्ते समे सत्ये, देवयोन्यन्तरे तु ना॥"

इति मेदनी। एवमुद्द्योतग्रन्थं समर्थयन्ती छायाग्रन्थोक्तिरपि न स्वार्थसाधने समर्था, तथा हि—"अपोहस्य व्यावृत्त्यर्थं गृहीतोऽत्र भूतशब्दः परमार्थवाची, सामान्यञ्च तद्भूतञ्चेति कर्मधारयः" इति छायाभिप्राये भूतशब्दस्य विशेषणपरत्वेन कर्मधारये पूर्वनिपातः स्यात्। किं चोपमार्थकत्वेऽपि सत्तासादृश्यस्यापोहरूपेऽभावेऽसंभवेन अपोहव्यावृत्तिरूपस्य प्रयोजनस्य सम्भवोऽस्त्येव, यत्तु सत्वमप्यसद्भेदरूपमेवेति "अपोहे" तत्सादृश्यं सम्भवत्येवेत्युच्यते, तदपि न समीचीनम्, अर्थक्रियाकारित्वं हि वस्तूनां सत्वमिति बौद्धैरपि सत्वस्यापोहरूपतानभ्युपगमादिति दिक्।

**म० भा०—[3]कानि पुनः शब्दानुशासनस्य प्रयोजनानि?।**

(प्र०)—कानि[4] पुनरिति। किं सन्ध्योपासनादिवद् व्याकरणाध्ययनं नित्यं कर्माथ काम्यमिति प्रश्नः।

१. अ० को० ३।३।७८ २. मेदिनी ५७।४१।४२

३. म० भा० आ० १, पृ० १२ ४. प्र० पृ० १२

अयमाशयः व्याकरणशास्त्राध्ययनं किं प्रयोजनमुद्दिश्य करणीयम्, यतो हि–प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तत इति सिद्धान्तेनात्राऽपि प्रयोजनाभिसन्धिरवश्यं कार्य इति विचार्य भगवान् भाष्यकारो ब्रूते-कानि पुनरिति ।

अत्र प्रदीपकारः भाष्याशयमित्थं विवृणोति–यथा-सन्ध्योपासनादिकं नित्यं कर्म तदकरणे प्रत्यवायः, करणे तु फलं न भवति, तद्वदिदं व्याकरणशास्त्राध्ययनरूपं कर्म यदि नित्यं स्यात्तर्हि तदध्ययने किमपि फलं न सम्भवति, प्रत्युत अध्ययनाभावे प्रत्यवायः स्यात्. अथवा "दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत्" इत्यादि-श्रुतिविहितदर्शादियागवदिदमध्ययनं काम्यं कर्म, तत्र हि यथा तस्मिन् यागेऽनुष्ठिते स्वर्गरूपफलस्यावाप्तिरननुष्ठिते तदवाप्त्यभावः, तथैवेदमध्ययनमप्यनुष्ठितं स्यात्तदा शब्दनिष्ठसाधुत्वज्ञानरूपकफलं साधयेदन्यथा तु न ।

अत्रोद्द्योतकारोऽपीत्थमेव भाष्यप्रदीपयोराशयं व्याचक्षाणः प्रयोजनशब्दस्य करणव्युत्पत्त्या प्रयोजकपरत्वमपि व्याचष्टे—प्रयुज्यतेऽनेनासौ प्रयोजनः, एवञ्च व्याकरणाध्ययनस्य प्रयोजकमपि किञ्चिदस्ति न वेत्यपि प्रश्नाशयं ब्रूते । अत एव[1] रक्षोहागमलघ्वसन्देहाः प्रयोजनमित्युत्तरभाष्यंमागमपदोपादानं सुष्ठु सङ्गच्छते, तथा हि रक्षा, ऊहः, लघ्वसन्देहौ च प्रयोजनानि, तत्र प्रयोज्यन्ते निष्पाद्यन्ते यानि तानि प्रयोजनानीति कर्मणिल्युट्, अयञ्च प्रयोजनशब्दः फलपरः, करणेऽर्थे लुडन्ततया व्युत्पादितः प्रयोजनशब्दः प्रयोजकपरः पुलिङ्गः, अनयोर्द्वयोः [2]"नपुंसकमनुपुंसकेने"-त्येकशेषः. एवञ्च प्रयोजनश्च प्रयोजनानि चेति विग्रह एकशेषे क्रियमाणएकवद्भावो वैकल्पिक इति कृत्वा प्रश्नवाक्ये बहुवचनान्तं प्रयोजनानीत्युक्तम्, उत्तरवाक्य एकवचनान्तं प्रयोजनमित्युक्तमेतदुभयमपि साधु. अत्रागमः प्रयोजनः (प्रयोजकः) रक्षादीनि तु प्रयोजनानि. स चागमः ब्राह्मणेन[3] निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्येवं रूपः, इदं तु व्याकरणाध्ययनस्य फलं भवितुं नार्हत्यपि तु तत्र प्रवृत्तिसाधकमेवाऽस्ति ।

ननु शब्दसाधुत्वज्ञानमेतदध्ययनस्य फलमुक्तमिदानीमेव, तर्हि कथं पुनः रक्षादीनां फलत्वमुच्यते—इति जिज्ञासायामिदं वचनीयमस्ति यत् शब्दसाधुत्वज्ञानं साक्षात्फलम्, वेदरक्षादीनि तु तत्फलानि, अत एव पूर्वं प्रयोजनप्रयोजनानीत्युक्तमिति दिक् ।

---

१. म० भा० व्या० । पृ० १३

२. पा० सू० १/२/६९ ४. भा० आ० १, पृ० १५

म० भा०[1]—असन्देहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति-स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति । तस्यां सन्देहः—स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति । तां नावैयाकरणः स्वरतोऽध्यवस्यति—यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति ।

इदं भाष्यवाक्यं प्रदीपकार इत्थं विवृणोति—असन्देह[2] इत्यत्र नञ्तत्पुरुषः, तत्र नञर्थः प्रागभावः न तु प्रध्वंसाभावः, यतो हि—वैयाकरणस्य मनसि संशयो नोत्पन्नो भवति, तत्र विनाशस्य कः प्रश्नः, अन्यस्यैव व्याकरणविषयकसंशयोत्पत्तिः सम्भवति तत्रैव तस्य विनाशोऽपि सम्भवति ।

अत्रोद्द्योतकारोऽसन्देहशब्दं व्याचष्टे—नन्विति[3] । असन्देहः सन्देहाभावः, स च नात्यन्ताभावरूपः, अत्यन्ताभावस्य नित्यत्वेन फलत्वं न सम्भवति, नाऽपि प्रध्वंसाभावः, तद्विषयकव्याकरणज्ञानं यस्य पुरुषस्याऽस्ति तन्मनसि तद्विषयकसंशयो नोदेतीति नञर्थतया प्रध्वंसाभावो ग्रहीतुं न शक्यते, यस्य तु व्याकरणाध्ययने कृतेऽपि क्वचित्सन्देहः स तद्विषयकवैयाकरणत्वाभाववान् एवाऽस्ति, यतो हि—[4]"तदधीते तद्वेद" इति सूत्रेण वेदनरूपेऽर्थे (ज्ञानरूपेऽर्थे) अण्प्रत्ययः । एवञ्च प्रागभाव एव नञर्थः स्वीकृतः प्रदीपकृता । वस्तुतस्त्वनवस्थापत्त्या प्रागभावस्य प्रागभावः स्वीकर्तुं न शक्यते, अतः तस्याऽपि जन्यत्वव्याप्यफलत्वं न सम्भवतीति कृत्वा प्रागभावस्य परिपालनमेवाऽत्राध्ययनफलतया मन्तव्यम्, सन्देहप्रागभावपरिपालनं तु सन्देहरूपप्रतियोगिनो हेतुभूतकारणानां विध्वंसनम्, यतो हि—व्याकरणाध्ययनेन तत्तद्विषयकनिश्चयो विधेयः येन संशयप्रागभाव एव सदा तिष्ठेत्, प्रतियोगिन उत्पत्तौ सत्यां प्रागभावो नश्यति, अतः संशयरूपप्रतियोगिन उत्पत्तिर्यथा न स्यात्तथा प्रयत्नीयमित्येवं प्रतिपालनम् ।

१. भा० आ० १, पृ० १७
२. प्र० पृ० १७
३. उ० पृ० १७
४. पा० सू० ४।२।५९

**म० भा०—दुष्टः[1] शब्दः—**

**"दुष्टः शब्दः स्वरतो वर्णतो वा**
**मिथ्या प्रयुक्तो न तमर्थमाह ।**
**स वाग्वज्रो यजमानं हिनस्ति**
**यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥" इति ।**
**दुष्टाञ्छब्दान्मा प्रयुक्ष्महीत्यध्येयं व्याकरणम् ।**
**दुष्टः शब्दः ।**

अत्र प्रदीपकारः—इदं भाष्यमित्थं व्याचष्टे—स्वरत[2] इति । स्वरेणेत्यर्थः, तृतीयान्तात् स्वरशब्दादाद्यादित्वात् तसिः प्रत्ययः, एवं वर्णत इत्यस्य वर्णेनेत्यर्थो बोध्यः (हेतौ करणे वा तृतीया बोध्या) । मिथ्याप्रयुक्तः सन्तमर्थं नाह—अयमाशयः—यदर्थप्रतिपादनाय शब्द प्रयुक्तः (उच्चारितः) ततोऽर्थान्तरं स्वरवर्णदोषात् प्रतिपादयन् अभिमतमर्थं न वक्ति, "वाग्वज्रः" इत्यत्र वागेव वज्रो हिंसकत्वात् कर्मधारयसमासः, यथा—इन्द्रशत्रुशब्दः स्वरदोषाद् यजमानं हिंसितवान्—इति भावः । अत्र इन्द्रस्याभिचारः वृत्रेणारब्धः तत्रेन्द्रशत्रुर्वर्धस्व इति मन्त्रस्य त्वष्ट्रादिऋषिभिः ऊहः कृतः, यद्यप्यभिचारकार्यं त्वष्ट्रादिऋषिभिरारब्धं न तु वृत्रेण, तथाऽपि तत्कार्यस्योत्पद्यमानो वृत्रः फलम्, अतः फलस्याऽपि हेतुत्वेन तत्र तृतीया प्रदीपे कृता, एतच्चोद्घाते स्पष्टी भविष्यति । इन्द्रशत्रुशब्दे इन्द्रस्य शत्रुः शातयिता शमयिता भव इति क्रियाप्रवृत्तिनिमित्तक एवाऽयं शत्रुशब्दः न तु रूढ्या शत्रुत्वजातिपर, एवं सति बहुव्रीहि-तत्पुरुषयोरर्थे भेदो न भविष्यति । इन्द्रशत्रुशब्दे इन्द्रस्य शत्रुः शातयिता शमयिता भव इति क्रियाप्रवृत्तिनिमित्तक एवाऽयं शत्रुशब्दः न तु रूढ्या शत्रुत्वजातिपरः, एवं सति ब्रहुव्रीहितत्पुरुषयोरर्थे भेदो न भविष्यति । तत्रेन्द्रस्य मित्रत्वे सिद्धे सतीन्द्रस्य शत्रुर्भव इत्यस्मिन्नर्थे प्रतिपादनीये षष्ठीतत्पुरुषः करणीयः स्यात्, तत्र च [3]"अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे" इति सूत्रेण विधातव्यः स्यात् । किन्तु ऋत्विग्भिराद्युदात्तस्वरस्य प्रयोगः कृत इति कृत्वा अर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता (घातकः) संवृत्तः, इन्द्रशत्रुशब्दे सम्बोधनविभक्तिर्न कृता उद्देश्यांशे एव तस्याः प्रवृत्तिर्भवति,

---

१. म० भा० आ० १, पृ० १९　　२. प्र० पृ० १९

३ पा० सू० ६।१।१६९

इन्द्रशत्रुत्वं तु विधेयताऽऽश्रयः, यथा—'राजा भव, युध्यस्व, राजन् युध्यस्व' इत्यनयोर्व्यवस्थया एव प्रयोगः, ऊह्यमानस्य च वाक्यस्य मन्त्रत्वाभावात्, "यज्ञकर्मणी[1]"ति सूत्रेण मन्त्राणामेकश्रुतिस्वरो विधीयते स तु नेह प्रवर्तते ।

अत्रोद्द्योतकारः - ननु तसिल्प्रत्ययः सर्वनाम्न एव भवति, स्वरशब्दात्तत्प्रवृत्तिः कथमिति जिज्ञासायामुक्तम्—[2]आद्यादित्वादिति । यत्तदोर्नित्यसम्बन्धात्तमर्थमित्यत्र तमीत्यस्य यच्छब्दापेक्षायामुक्तं प्रदीपे-यदर्थेति । मिथ्याप्रयुक्तेत्यंशस्य व्याख्यानं ततोऽर्थान्तरमित्यादि, न हि केवलं तदर्थमेव नाह—इत्येतावत् । किन्तु प्रत्यवाय अपि तत उत्पद्यते येन स हिंसकोऽपि भवतीत्येव ध्वनयति—वागेव वज्र इति । वाचि वज्रत्वारोपः रूपकाऽलङ्कारः, यथा—अध्वर्युकृतेन होमेन यजमानस्य धर्मरूपफलोत्पत्तिर्भवति, एवं तथैव तत्कृतेनापशब्दप्रयोगे तस्मिन्, यजमाने प्रत्यवायोऽपि सम्भवत्येव । वृत्रेणेति[3] हेतौ तृतीया, फलमपीह हेतुः । अहितस्य वाक्यस्य मन्त्रत्वं नास्ति तथापि श्लोके मन्त्रशब्दः बोधकवाक्यपर इति न दोषः । अत एव[4] मन्त्रो हीनः स्वरत इति शिक्षाग्रन्थे प्रसिद्धं पाठं त्यक्त्वा भाष्यकृता दुष्टः शब्द इत्युक्तम्, तत्रत्यमन्त्रशब्दस्य बोधकवाक्यमात्र परत्वं ध्वनयितुम् । शत्रुशब्दः अमित्रपर्यायश्चेत्तदा बहुव्रीहितत्पुरुषयोरर्थांशे भेदो न स्यादतः यौगिकत्वं स्वीकृत्य द्वयोर्भेदो दर्शितः, सद्धातोः ण्यन्तादौणादिकः कन्प्रत्ययः प्रज्ञादिगणे पाठेन नैपातनिकं ह्रस्वमेवञ्चेन्द्रस्य शातयिता किं वा इन्द्र शातयिता यस्येति विग्रहप्रयोज्य तत्पुरुषबहुव्रीह्योरर्थभेदः स्वरभेदश्च । यदि शत्रुत्वं जातिरखण्डोपाधिरूपो धर्मो वा स्यात्तदा इन्द्रनिरूपितं शत्रुत्वं यथा वृत्रे तथैव वृत्रनिरूपित शत्रुत्वमिन्द्रेऽपि भवितुमर्हतीति रीत्या द्वयोः साम्यमेव स्यात् । शातयितृपरत्वे तु कर्तृत्वमिव तदपि भिन्न भिन्नमेवातो नार्थयोरभेदः ।

न च "यज्ञकर्मणि" "अजपन्यिङ्खसाम्सु" इति सूत्रेण एकश्रुतिस्वरः स्यात्कथमत्र पूर्वपदप्रकृतिस्वरेणाद्युदात्तकरणमिति वाच्यम्, शतपथब्राह्मणतद्भाष्यविरोधात्, तत्र ह्याद्युदात्तत्वकरणमत्र स्वरापराध इत्युक्तम् । उक्तञ्च पूर्वमीमांसायाम्—अमाम्नाते[5] स्वमन्त्रत्वमिति । यद्यप्यस्य अमन्त्रत्वे लौकिकवाक्येन क्रियमाणस्य कर्मणः कथं फलजनकत्वमिति शङ्कितुं युक्तम्,

---

१. पा० सू० १।२।३४ २. उ० पृ० ६९

३. पा० सू० २।३।२३ ४. पा० शि० ५२

५. पू० मी० २।१।३४

तथाऽपि "सूर्याय त्वां जुष्टं "निर्वपामी" त्यादेः लौकिकसूर्याय इति पदघटित-स्योहविधायकशास्त्रबलेन फलजनकत्ववदत्राऽप्युपपत्तिः कर्तुं शक्यत इति भावः।

अत्र समीक्षा - शत्रुशब्दस्य शत्रुत्वरूपो धर्मविशेषः प्रवृत्तिनिमित्तं चेत्तदा बहुव्रीहितत्पुरुषयोरर्थभेदो न सम्भवतीति सत्यम्। एकनिरूपितं शत्रुत्वं यद्यपरस्मिन् तर्ह्यं परनिरूपितं शत्रुत्वमप्येकस्मिन्निति रीत्या द्वयोस्तुल्यत्वं सम्पद्यते, यदि शातयितृरूपेऽर्थे शत्रुशब्दः प्रयुज्यते तर्हि तद्भेदात् भवत्यर्थभेदः, इन्द्रनिष्ठं शातं कर्तृत्वमन्यत्, वृत्रनिष्ठं तदन्यत्। एवञ्च बहुव्रीहिसमासे पूर्वपदप्रकृतिस्वरेणेन्द्रशब्द आद्युदात्तः सम्पन्नः, यतो हीदिधातोरौणादिके रन्प्रत्यये सति निष्पद्यत इन्द्रशब्दः। तत्र "ञ्नित्यादिर्नित्यमि" [2] ति नित्यत्वादाद्युदात्तता। एवञ्च शब्दगताद्युदात्तत्वेनार्थगतमप्याद्युदात्तत्वं भवत्येव शब्दार्थयोः तादात्म्यात्, अत एवेन्द्ररूपोऽर्थ उदात्तो भूत्वा ( बलवान् भूत्वा ) वृत्रं हतवानिति भावः। अत्र गौरवाभिसन्धिप्रकाशदृष्ट्या—

इदमालोचनीयम्[3]—इन्द्रामित्रत्वे सिद्धे सति सत्सप्तम्याः कुत्राऽन्वय इति। तत्र चाकामेनाऽपि भवता गत्यन्तरविरहाद् "इन्द्रस्य शत्रुर्भव" इत्यत्रार्थे प्रतिपाद्ये, इति प्रतिपादनक्रियायामन्वय इत्येव वक्तव्यम्। तथा चातदर्थप्रतिपादनसूचने इति पाठं समाश्रित्य "अस्य इन्द्रशत्रुर्वर्धस्वे" त्यस्य इन्द्रस्य शत्रुर्भवेत्यतो भिन्नार्थप्रतिपादनसूचने सति सप्तम्या हेतुत्वम् इति भवद्वचनमनुपपन्नमेवेति स्वार्थे नाभिनिवेष्टव्यम्। एतन्मन्त्रवाक्यव्याख्यावसरे एवोद्द्योते यथाध्वर्युकृताद् होमाद् यजमाने धर्मोत्पत्तिः। एवं तत्कृतापशब्दप्रयोगात्तस्मिन् प्रत्यवायः इत्याशय इति। तत्रोक्तं छायायाम्— अत्र चेदमेव वचनं मानमिति। तत्रोक्तं गुरुभिः एवकारोऽप्यर्थः। स्पष्टं चेदं पूर्वोत्तरमीमांसयोरिति। तत्रादोषेऽपि दोषं पश्यद्भिः कैश्चिदुक्तम्। 'वस्तुतः— अत्र च तत्कृतापशब्दप्रयोगात्तस्मिन् प्रत्यवाय इत्यत्र च इदमेव "स वाग्वज्रो यजमानं हिनस्ति, इति वचनमेव प्रमाणमिति छायाभिप्रायः। अत्र पूर्वोत्तरमीमांसाविदामभिप्रायं सुधियो विभावयन्तु" इति।"

---

१. प्र० आ० १ पृ० १४ २. पा० सू० ६।१।१९

३. गौ० प्र० पृ० ११

**म० भा०--चतुर्भिश्च[1] प्रकारैर्विद्योपयुक्ता भवति—आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति। तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात्। तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः।**

अत्र प्रदीपकारः—एकदेशोपयोगादपि लोके उपयुक्तमित्युच्यते, यथा—[2]औषधसंस्कृतघृतभात्रैकदेशोपयोग उपयुक्तं घृतमिति व्यवहारः, तथा इह नेति प्रतिपादयति चतुर्भिरिति। आगमकालो ग्रहणकालः, स्वाध्यायकालोऽभ्यासकालः, प्रवचनकालोऽध्यापनकालः, व्यवहारो याज्ञे कर्मणीति।

अत्रोद्द्योतकारः—ननु[3] यावदेवाऽध्येष्यते तावदेवाभ्युपयुक्तं स्यात्। अत आह—भाष्ये चतुर्भिरिति। उक्तमेव तदाशयमाह—एकदेशेत्यादि। विद्योपयोगाधारभूतानां कालानां विद्यां प्रत्यप्याधारत्वात् तस्य च करणत्वविवक्षया बोध्या। चतुर्षु कालेषु विद्योपयुज्यते इति फलितोऽर्थः। तत्राद्ययोर्विद्यार्थ्ययं बुद्धिमानित्यादरपूर्वकमन्नवस्त्रादिलाभरूप उपयोगः। तृतीये प्रतिष्ठासच्छिष्यलाभाद्यर्थप्राप्तिः सत्कारविशेषश्च। चतुर्थे यज्ञाद्यनुष्ठानकालेऽपशब्दप्रयोगप्रयुक्तप्रायश्चित्ताभावः कर्मसाङ्गता दक्षिणालाभः प्रतिष्ठा चेत्युपयोगः। तादृशश्चोपयोगः सर्वाध्ययन एव। भाष्ये पर्युपयुक्तमिति। समाप्तमित्यर्थः। पर्यवसन्नमिति पाठान्तरम्। न चेष्टापत्तिः। विद्योच्छेदापत्तेः। कर्मसु प्रायश्चित्तविधिवैयर्थ्यापत्तेश्च।

अत्र समीक्षा—प्रक्रियते व्यवच्छेद्यतेऽनेनेति व्युत्पत्त्या प्रपूर्वकात् कृधातोः बाहुलकात्करणे घञ्, ततः प्रकारशब्दसिद्धिः, सामान्यस्य भेदको विशेषः प्रकार इत्युच्यते। विद्यते आत्मतत्त्वं ज्ञायतेऽनया इति विद्या, विद्धातोः करणे क्यप् ततस्टाप्। एवञ्चाध्यात्मविद्या एव विद्या, एषा व्याकरणविद्याऽप्याध्यात्मविद्यैव, शब्दब्रह्मरूपमात्मानमधिकृत्य प्रवृत्तत्वात्। उपयुक्ता सफला इत्यर्थः। चतुरः प्रकारान् एव भाष्यकारः प्रतिपादयति-आगमेत्यादिना। अयं भावः - आगमनम् आगमः "ग्रहवृदृनिश्चिगमश्च"[4] त्यनेन अप्। गुरोर्मुखाद् विद्याग्रहणमागम इत्युच्यते, तस्य कालः प्रथमावस्थायां शास्त्रेण प्रतिपादितोऽस्ति, प्रायशः "शतायुर्वै पुरुषः" इत्युक्त्वा शतवर्षात्मकस्य आयुषः प्रथमो भागः पञ्चविंशतिवर्षात्मकः कालः, तदनु स्वाध्यायकाल आगच्छति, अयमभ्यासकाल इत्युच्यतेऽयमेव मननकालपदेनाऽपि व्यवह्रियते, अस्मिन् कालेऽर्थानुसन्धानेऽपि दार्ढ्यमागच्छति, अयं काल आयुषः पञ्चाशद् वर्षाणि यावत् तदनु व्यवहारकाल उदेति, अयं कालः आयुषः पञ्चसप्ततिवर्षाणि

१. भा० आ० १ पृ० ३४ २. प्र० आ० १, पृ० ३४
३. उ० आ० १, पृ० ३४ ४. पा० सू० ३।३।५८

यावद् भवति। यद्यपि प्रवचनमपि व्यवहारस्ततथाऽपि प्रवचनस्य पुरुषमात्र-प्रयोजनकत्वेन पृथक् निर्देशः कृतो भगवता।

अत्रोद्द्योतकार:—ननु कालानां विद्योपयोगाधारत्वेऽपि विद्याया आधारत्वाभावात्कथं चतुर्भिश्च प्रकारैः[1]—इत्यादि व्यवहारकालेनेत्यन्तभाष्ये तेषां विद्यां प्रति प्रकारत्वमभ्युपगतमित्यत उक्तं विद्योपयोगेत्यादिना। कालानामित्यस्य परम्परया इति शेषो बोध्यः, आधारत्वादित्यस्य तां प्रति प्रकारताश्रयणमिति शेषो बोध्यः। अयं भावः तादृशं कालानां विद्यां प्रत्याधारत्वेऽपि करणत्वविवक्षया तृतीयाविभक्तिरूपोपपद्यते, चतुर्षु कालेषु भवति विद्योपयोग इति फलितार्थः। तत्रागमस्वाध्यायकालयोरयं विद्यार्थ्यं-तीवप्रतिभासम्पन्न एतस्मै स-सम्मानमन्नवस्त्रादिकं देयमिति तल्लाभरूपो विद्योपयोगः। तृतीये (प्रवचनकाले) तु प्रतिष्ठायाः साधुशिष्याणाञ्च लाभे-नार्थलाभः सत्कारलाभश्च। चतुर्थे यागाद्यनुष्ठानकालेऽपशब्दप्रयोगजनितस्य प्रत्यवायस्याभावः साङ्गोपाङ्गो कर्मानुष्ठानं दक्षिणायाः प्रतिष्ठायाश्चाऽपि लाभ इत्येवं रूपो भवति विद्योपयोगः। एतादृशोपयोगः सामस्तेन विद्या-ऽध्ययने एव, तत्त्वद्यत्वे न संभवति ग्रहणकालेनैव सर्वस्य आयुषः समाप्ततया कर्माऽनुष्ठानासम्भवात्, कर्मसु कृतानामपराधानां निवृत्तये यद्यत्प्रायश्चित्तं प्रतिपादितमस्ति तस्य तस्य चानर्थक्यमाप्नोति। अतः सामान्यत आयुषः भागचतुष्टयं कल्पयित्वा यस्मिन् भागे यत्कर्मानुष्ठेयं भवति तत्कर्म तस्मिन्नेव भागेऽवश्यमाचरणीयम्, अन्यथा लक्ष्यपूर्तिः न स्यादिति भाष्यतात्पर्यम्। अत एव भगवती श्रुतिर्वदति—

**"आत्मा[2] वाऽरे द्रष्टव्यः, श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"**

इति।

स्मृतिरपि वदति—

**श्रोतव्यः[3] श्रुतिवाक्येभ्यः, श्रुत्वा चैवावधार्यताम्।**
**मत्वा च सततं ध्येय., एते दर्शनहेतवः॥**

अन्यत्राप्युक्तञ्च—

**"प्रथमे[4] वयसि नाधीतं द्वितीये नार्जितं धनम्।**
**तृतीये नो तपस्तप्तं चतुर्थे किं करिष्यति॥"**

एवञ्चैतैरपि वचनैः चत्वारो भागाः निर्दिष्टाः सन्ति।

इति महाभाष्य-समीक्षणे प्रथमाध्यायस्य प्रथमपादः।

---

१. म० भा० पृ० ३४
२. बृ० २।४।५
३. सा० प्र० भा० १।१
४. अभियुक्तोक्तिः

## अथ द्वितीयः पादः

म०भा०—लोके[1] तावद् "अभक्ष्यो ग्राम्यकुक्कुटः" "अभक्ष्यो ग्राम्यसूकरः" इत्युच्यते। भक्ष्यं च नाम क्षुत्प्रतिघातार्थमुपादीयते। शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्। तत्र नियमः क्रियते—इदं भक्ष्यमिदमभक्ष्यमिति। तथा—खेदात् स्त्रीषु प्रवृत्तिर्भवति। समानश्च खेदविगमो गम्यायां चागम्यायां च। तत्र नियमः क्रियते—इयं गम्येयमगम्येति।

(प्र०)—शक्यं[2] चानेनेति। शकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः। ततः पदान्तरसंबन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधते, इति शक्यं क्षुदित्युक्तम्। यदा तु पूर्वमेव विशेष्यविवक्षा तदा शक्या क्षुदिति भवत्येव। यदा तु प्रतिघातस्यैव क्षुत्कर्म शकेस्तु प्रतिघातस्तदा क्षुधं प्रतिहन्तुं शक्यमिति भवति।

(उ०)—शक्यं[3] क्षुदिति सामानाधिकरण्यं कथं भिन्नलिङ्गत्वादत आह—शकेरिति। तदा क्षुधमिति। ननु प्रधानक्रियानिरूपितशक्तेरभिधाने गुणक्रियानिरूपितशक्तेरनभिहिताया अभिहितवत्प्रकाशस्य स्वादुमिणमुलित्यत्र वक्ष्यमाणत्वेन कथमेतदिति चेन्न। प्रधानतिङन्तार्थक्रियानिरूपितशक्तेरेवायं स्वभावो यत्स्वसमानाधिकरणगुणशक्तेरभिहितवत्प्रकाश इत्यभिमानात्। वस्तुत इदमयुक्तमेवेति स्वादुमीत्यत्र निरूपयिष्यामः।

---

१. म० भा० आ० १, पृ० ४६ २. प्र० आ० १, पृ० ४६

३. उ० आ० १, पृ० ४६–४७

अत्र समीक्षा—वस्तुतस्तु प्रदीपकर्तुरयमाशयः क्षुधं प्रतिहन्तुं शक्यमित्यत्र शकेरविवक्षितकर्मत्वरूपमकर्मकत्वमादाय भावेऽर्थे [1]"शकिसहोश्चे"-ति सूत्रेण यत्प्रत्ययः करणीयः, न चैवं शकेस्तु प्रतिघात इति प्रदीपकारोक्तिरसङ्गता स्यादिति वाच्यम्, कृतपूर्वीकटमित्यत्रैव प्रतिहन्तुमित्यनेन पूर्वमसम्बन्धे सति भवार्थकप्रत्ययः कर्तव्यः, तदनु कटस्यैवात्राऽपि प्रतिहन्तुमित्यस्य सम्बन्धे न काचिदनुपपत्तिः। एवञ्च प्रधानतिङन्तार्थक्रियानिरूपितशक्तेरेवायं स्वभाव इत्यादि भवदभ्यूहितं प्रदीपकृत्तात्पर्यं नास्ति, अतः प्रदीपकाराभिप्रायः समीचीन एव प्रतीयत इति शम्।

**म० भा०-[2]तथा-खेदात् स्त्रीषु प्रवृत्तिर्भवति। समानश्च खेदविगमो गम्यायां चागम्यायां च। तत्र नियमः क्रियते-इयं गम्येयमगम्येति।**

(प्र०)—[3]खेदादिति। खेदयतीति खेदो रागः, इन्द्रियनियमसामर्थ्यं वा खेदः।

(उ०)—खेद[4] इति। एवं च ग्राम्यकुक्कुटपरदारादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलतया आरण्यकतद्भक्षणस्वदारगमनयोर्यथा दोषाभावो यथा च ग्राम्यकुक्कुटभक्षणपरदारगमनयोरधर्मस्तथा शास्त्रजनितज्ञानपूर्वके गवादिप्रयोगेऽपूर्वोत्पत्तिरूपं फलं शास्त्रेण बोध्यते तेषां साधुत्वबोधनात्। अर्थादपशब्दानामधर्मजनकत्वं बोध्यते, एकविधेस्तदितरनिषेधफलकत्वात्। यथैकनिषेधस्यापराभ्यनुज्ञाफलकत्वमिति भावः। दृष्टान्ततयात्वंशेन, वस्तुतस्तु रागवैदिकानां तु सर्वांशेनेति बोध्यम्।

अत्र समीक्षा—अत्र खेदनिवृत्तिः रूपं फलमस्ति तत्साधनतया यदि पुरुषकर्तृका स्त्रीविषयिका प्रवृत्तिः स्यात्तत्र खेदनिवृत्तिः समानरूपेण गम्यायां (पाणिगृहीतायां) तद्भिन्नायाञ्चोभयत्राऽपि भवितुमर्हति, तत्र शास्त्रेण नियम्यते इयं गम्येयमगम्येति।

---

१. पा० सू० ३।१।९९ २. म० भा० आ० १, पृ० ४६
३. प्र० आ० १, पृ० ४६ ४. उ० आ० १, पृ० ४६

अत्रोद्द्योतकर्तुः पुनरेष आशयः यदारण्यकतद्भक्षणस्वदारगमनयोरिति द्विर्वचननिर्देशेन मिलितयोरेव (सहितयोरेव) दोषाभावेऽन्वयः कर्तुं शक्यते तथा धर्मोत्पत्तिश्च। किञ्च धर्मोत्पत्तिश्चेति चकारेण दोषाभावसञ्चये उभयत्राऽपि दोषाभावो धर्मोत्पादश्चेति शाब्दमर्यादया लब्धुं शक्यौ, प्रत्युत मिलितान्वय एव द्वन्द्वस्य साधुत्वं भवितुमर्हति नान्यथा, एकधर्मावच्छिन्नस्यैकधर्मावच्छिन्ने, एकधर्मावच्छिन्नसंसर्गेणान्वयरूपसाहित्यस्य तथा सत्येवोपपत्तिः स्यात्, तथा चारयण्यकतद्भक्षणस्वदारगमनयोः प्रत्येकमन्वय इति कथनं न समीचीनम्। किञ्च "ऋतौ भार्यामुपेयादि"ति वचनस्य पुरुषार्थत्वकथनमपि न साधुतरं किन्तु ऋतौ स्वदारगमनस्यैव पुरुषार्थत्वं न तु तद्बोधकवचनस्येति दिक्।

**म० भा०—[1]कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यात्?**

(प्र०)—[2]कश्चेदानीमिति। उपहासपरम्।

(उ०)—[3]ननु मया प्रयुक्तश्चेत्किं, तत्र सोपहासमाह— कश्चेदानीमिति। स्वयमेव प्रयोगं कृत्वा सन्ति चाप्रयुक्ता इत्यादीनां शब्दानां प्रयोगे साधुर्योग्यः स्यादित्यर्थः। त्वत्प्रयोगेणैव प्रयुक्तत्वागमेऽप्रयुक्तत्वोक्तिर्विरुद्धेति भावः।

अत्र समीक्षा—प्रदीपकारोऽत्र कश्चेदानीमित्यादिभाष्यवचनमुपहासपरं मन्यते, तत्रोद्द्योतकार उपहासपरत्वमित्थं योजयति—नन्वित्यादिना। अयं भावः—स्वयमेव प्रयोगं कृत्वा यदि तस्यैव शब्दस्याप्रयुक्तत्वं ब्रूयात्तर्हि तदुक्तिर्विरुद्धा स्यादिति शब्दानामित्यादिभाष्यस्याशय उद्द्योतकृता उक्तः। तदीये प्रश्नवाक्ये—ननूस् इत्यादिशब्दः मया प्रयुक्तश्चेति किम्? अयमाशयः—यदि प्रयुक्तस्तर्हि तेन प्रयुक्तेन किम्? का क्षतिरित्यर्थः। तत्र—तर्हि तेन किमित्यत्र, एवं च भवज्जातीयकः (भवत्सदृशः) कोऽन्यः पुरुषः, लोके वर्तते यः शब्दानां प्रयोगे साधुः प्रमाणं स्यात्तेन प्रयुज्यमानः शब्दः शाब्दप्रमायां प्रमाणं भवेदिति भाष्याभिप्रायः।

---

१. म० भा० आ० १, पृ० ४९  २. प्र० आ० १, पृ० ४९

३. उ० आ० १, पृ० ४९

**म० भा०–किं[1] पुनः–शब्दस्य ज्ञाने धर्मः, अहोस्वित्प्रयोगे ।**

अत्र भाष्यानुगुणः प्रदीपाभिप्रायः—एकः[2] शब्दः सम्यग् ज्ञातः (सम्यक्त्वेन प्रकृतप्रत्ययादिविभागेनार्थविशेषपरत्वेनावगतः), शास्त्रान्वितः (प्रकृत्यादिविभागः स्वेच्छया न कर्तव्य अपि तु शास्त्रदृष्ट्या कार्यः स एव शास्त्रान्वित इत्युच्यते), एवञ्च शास्त्रेण व्याकरणशास्त्राध्ययनजन्यज्ञानविषयप्रकृत्यादिविभागादिनाऽन्वितः (अनुगतः) सम्बद्ध इति यावत्, सुप्रयुक्तः शिक्षाबोधितशब्दप्रयोगरीत्या स्थानप्रयत्नाद्यनुरोधेन वर्णमुच्चारयता अर्थमनुसन्दधानेन कृतो य एणीकृतादिदोषरहितः प्रयोगः तद्विषयतावान् । स्वर्गे लोकेऽत्र च शब्दः अध्याहर्तव्यः तेनोभयत्राऽपि कामधुक्त्वमायाति, तत्तु धर्मोत्पादद्वारा अभ्युदयप्रयोजकत्वरूपम् । एतदर्थिकायां श्रुतौ सम्यग्ज्ञातः कामधुग् भवतीति कथनं किमर्थम्, सुप्रयोगादेव सम्यग्ज्ञातत्वमनुमातुं शक्यमथवा सुप्रयुक्तः कामधुग् भवतीत्येव वक्तव्यम्, सुप्रयुक्तत्वं तु सम्यग्ज्ञानमन्तरा न भवितुमर्हति । एवञ्चोभयथाऽपि सम्यग्ज्ञातपदं किमर्थमुपात्तमिति भाष्यकारीय-प्रश्नवाक्यस्य तात्पर्यम् ।

अत्रोद्द्योतकारः- वार्तिके उक्तः[3] धर्मनियमः श्रुतिप्रमितः, तद्याञ्च श्रुतौ सम्यग्ज्ञातत्वस्य सुप्रयुक्तत्वस्योभयरूपादानात्प्रश्नः । तत्र यदा एकस्मादपूर्वं तदीतरतदर्थमिति पूर्वमीमांसान्यायेन सम्यग्ज्ञानसुप्रयोगयोः द्वयोरपि समानत्वेन फलसम्बन्धो भवितुं नार्हत्यतः विकल्पो न युज्यत इति कृत्वा एकस्य प्राधान्यमपरस्य गुणत्वमवश्यं मन्तव्यम्, तत्रैकस्य प्रधानतायाः अपरस्याङ्गतायाः च कल्पने प्रथमं वा प्रधानतया नियम्येत इत्यर्थकेन तत्र प्रथमं वा नियम्येत इति न्यायेनाश्रितेन किं फलं स्यादित्याशङ्क्याह प्रदीपकारः—तत्र किं सम्यग्ज्ञातः कामधुग् भवतीति । अथवा—

**सर्वत्रैवहि विज्ञानं संस्कारित्वेन गम्यते ।**
**पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम् ॥**

इति न्यायेन ज्ञानस्य ज्ञेयशेषतया धर्महेतुत्वाभावात्प्रयोगाङ्गतया दृष्टार्थत्वाच्च प्रयोगस्य फलं प्रति सन्निहितत्वाच्चाह—आहोस्विदिति । अयं भावः हि–यत आत्मविज्ञानादन्यत्र सर्वत्रैव विज्ञानं संस्कारजनकत्वेन प्रतीयते । अत आत्मविज्ञानादतिरिक्तं ज्ञानं पराङ्गं (परस्य ज्ञेयस्याऽङ्गं भवति)

१. म० भा० आ० १, पृ० ५३ २. प्र० आ० १, पृ० ५३
३. भा० वा० ७

इत्यवधार्यताम्, ज्ञानस्य सम्यक्त्वेन ज्ञानस्य ज्ञेयशेषतया शब्दाङ्गतया। ज्ञेयो हि शब्दः तस्य शेष अङ्गम्। नन्वेवं सति शब्दसम्यग् ज्ञानं वैयर्थ्यापत्तिमीयैव नोपादेयं स्यादत उक्तं प्रयोगाङ्गतया—इति शब्दप्रयोगद्वारा इत्यर्थः। दृष्टार्थत्वादित्यस्य श्रोतृसमवेतबोधरूपदृष्टफलार्थत्वादित्यर्थः, प्रयोगस्य सुप्रयुक्तशब्दघटकसुप्रयोगस्य, अत्र सम्यग्ज्ञानशब्दघटकसम्यग्ज्ञानापेक्षया इति शेषो बोध्यः। फलं कामधुक् पदार्थघटकं बोध्यम्। सन्निहितत्वादित्यस्मात्पूर्वसुप्रयोगेणैव फलसम्बन्धस्यौचित्यादित्यध्याहर्तव्यम्।

**म० भा०—अथवा—कूपखानकवदेतद्भविष्यति[1]। तद्यथा—कूपखानकः कूपं खनन्यद्यपि मृदा पांसुभिश्चावकीर्णो भवति। सोऽप्सु संजातासु तत एव तं गुणमासादयति। येन च स दोषो निर्हण्यते, भूयसा चाभ्युदयेन योगो भवति। एवमिहापि यद्यपशब्दज्ञानेऽधर्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन च स दोषो निर्घानिष्यते, भूयसा चाभ्युदयेन योगो भविष्यति।**

(प्र०)—[2]दोष इति। उत्कृष्टधर्मफलावाप्तौ स्वल्पमधर्मफलमुत्पन्नमप्यनुत्पन्नकल्पं भवतीत्यर्थः।

(उ०)—[3]तुष्यतु दुर्जन इति न्यायेनापशब्दज्ञानस्य विपरीतत्वमात्रेणाधर्मसाधनत्वमभ्युपगम्यापि भाष्ये समाधयन्तरमाह—अथवा कूपेति। मृत्—आर्द्रा। पांसुः—शुष्का। यत्कर्मनान्तरीयकर्मजन्यो यो विपरीतत्वमात्रेण कल्प्योऽवैधो दोषः स तत्कर्मजन्यफलनाश्यो यथा कूपखनननान्तरीयकशरीरव्यापारजन्यो मृल्लेपस्तत्फलजलनाश्य इति सामान्यतो दृष्टानुमानात्तन्नाशानुमानमिति बोध्यम्। उत्कृष्टधर्मेति। धर्मस्य विधिबोध्यत्वादुत्कृष्टत्वम्, अधर्मस्य तु वचनाबोध्यत्वेन विपरीतत्वमात्रेण कल्प्यस्यात्पत्वेन तत्फलधर्मनाश्यत्वम्। यागीयहिंसायाः न हिंस्यादिति वचनेन दुष्टताबोधनाद् दुष्टत्वमेवेत्यन्यत्र विस्तरः।

अत्र समीक्षा—कूपखानकवदिति[4] भाष्यस्याऽयमभिप्रायः—कूपं खनतीति विग्रहे "कर्मण्यण्[5]" इत्यण्प्रत्ययः प्राप्त इति, [6]वाऽस्वरूपन्यायेन

---

१. म० भा० आ० १, पृ० ५७
२. प्र० आ० १, पृ० ५७
३. उ० आ० १, पृ० ५७
४. भा० आ० १, पृ० ५७
५. पा० सू० ३।२।१
६. पा० सू० ३।१।९४

[1]"ण्वुल्तृचावि"ति ण्वुल्प्रत्ययो बोध्यः, एवञ्चात्र न नित्यः समास इति कृत्वा कूपस्य खानक इति स्वपदविग्रहो बोध्यः, यद्यपि "शिल्पीनिष्वुन्"[2] इति सूत्रेण ण्वुल्प्रत्ययो बोधयितुं शक्य स्तथाऽपि कूपेति कर्मणोऽविवक्षया खननकर्तृत्वमात्रविवक्षया ण्वुल्प्रवृत्तिः निराबाधः, अस्याञ्चावस्थायां शिल्पित्वस्य विवक्षैव कर्तुं न शक्या। पश्चात्तु कूपेन कर्मणा सम्बन्धेऽपि जातिसंस्कारस्यानिवर्तनीयत्वात् ण्वुलः स्थितिः सुदृढमेव। कूपखानकेन तुल्यमिति तृतीयान्ताद्वतिर्बोध्यम्, इदं च भविष्यति पदबोध्यक्रियाविशेषणम्, उपमेयपदं त्वेतदिति। अपशब्दज्ञानार्थमित्यर्थः। दृष्टान्तभूतं कूपखानकन्यायं विशदयति भगवान् भाष्यकारः--तद्यथेति। तत्र मृदा इत्यनेन आर्द्रायाः मृदोर्ग्रहणम्, पांशुपदेन शुष्कमृदोर्ग्रहणम्, (अवकीर्णः) लिप्तः, स कूपखानकः तत एव (अदम्य एव) तं गुणम् (अत्यन्तं स्नानादिरूपेष्टसाधनम्) येन (स्नानादिना) सह (कर्दमलेपरूपः) निर्हण्यते (निराक्रियते) योगः (तस्येत्यादौ शेषः बोध्यः), एवमिहाऽपि (शब्दज्ञानस्थलेऽपि,। तेन (शब्दज्ञानजनितधर्मेण) स (अपशब्दज्ञानजनितः दोषः) निर्घानिष्यते (निराकरिष्यते)।

अत्र प्रदीपकारः—यथा भोजनेनोत्कृष्टतृप्तेरवाप्तिर्भवति, तत्र पाकजनितं स्वल्पं दुःखमुत्पन्नमप्यनुत्पन्नप्रायं [3]मन्यते, तथा शब्दज्ञानेनेष्टफलावाप्तौ, अपशब्दज्ञानजनितमुत्पन्नमिव मन्यत इति।

अत्रोद्द्योतकारः—सन्तुष्यति दुर्जनन्यायेनापशब्दज्ञानं वैपरीत्यमात्रेणाधर्मसाधनं स्वीक्रियते, तथाऽपि भाष्येऽन्यत् समाधानमुच्यतेऽथवेत्यादिना। कूपखानकन्यायेनापशब्दज्ञानजनितमधर्मं शब्दज्ञानजनितधर्मेण व्यपोहितुमर्हति प्रयोक्तेति भावं विशदयति—[4]यत्कर्मेत्यादिना। अयं भावः यद्यत्कर्मस्वनान्तरीयककर्मवैपरीतं भवति, तत्तत्कर्म स्वनान्तरीयककर्मजनितफलविपरीतफलजनकं भवति, यथा—कूपखनननान्तरीयकशरीरव्यापाररूपं कर्म, तच्च कूपखनननान्तरीयकशरीरव्यापा- तच्च कूपखनननान्तरभिन्नमस्ति, तज्जनितमृल्लोपादिदोषः कूपखननजनितफलात्मकेन जलेन नाश्यो भवति, एवञ्च तन्नाशकतया तद्वीपरीतफलजनकं कूपखननं मन्यते, एवं रूपेण सामान्यतो दृष्टानुमानेन तन्नाशानुमानम्।

प्रकृते तु साधुशब्दज्ञानान्तरीयकापशब्दज्ञानजनितोऽधर्मस्तो दोषः साधुशब्दज्ञानजनितधर्मरूपगुणेन नाश्यो भवति, शब्दज्ञानानन्तरीयकाप-

१. पा० सू० ३।१।१३३　　२. पा० सू० ३।१।१४५

३ म० भा० पृ० ५७　　४. प्र० आ० १ पृ० ५७

शब्दज्ञानजनितत्वादित्यनुमानाकारः । विपरीतत्वमात्रेण कल्योऽवैधे दोष इत्युद्द्योतग्रन्थेऽवैधत्वं निषेधवाक्याबोधितत्वम् । यद्यपि पूर्वं भाष्यकृताऽधर्मभूयस्त्वमुक्तम्, सम्प्रति तदल्पत्वमुच्यत इति विरोधः प्रतिभाति, तथाऽपि धर्मस्य विधिवाक्यबोधितत्वेनोत्कृष्टत्वम्, अधर्मस्तु निषेधवाक्याबोधितत्वेन विपरीतत्वमात्रेण कल्पिततया अपकृष्टत्वम् ( अल्पत्वम् ) इति कृत्वा शब्दज्ञानजन्यधर्मरूपफलनाश्यत्वं सुसङ्गतमेव, नास्ति कश्चन विरोधः ।

नन्वेवं यागनान्तरीयकहिंसाजनितस्याधर्मस्याऽपि यागजनितधर्मनाश्यता स्यादिति न हिंस्यात्सर्वाभूतानीत्यादि निषेधवाक्येन प्रायश्चित्तादिकल्पना सांख्यादिदर्शनोक्ता न युज्येदिति चेदुच्यते—यागीयहिंसायाः न हिंस्यादित्यनेन वचनेन दुष्टता प्रतिपादनात् दुष्टत्वमेवेति शास्त्रदीपिकादिग्रन्थेषु निर्णीतमस्ति ।

**म० भा०—[1]किमर्थमिदमुभयमुच्यते– [2]भवे - प्रोक्तादयश्च तद्धिताः इति । न "प्रोक्तादयश्च[3] तद्धिताः" इत्येव भत्रेऽपि तद्धितश्चोदितः स्यात् ?**

पुरस्तादिदमार्येण दृष्टम्, "भवे च तद्धितः" इति तत्पठितम् । तत उत्तरकालमिदं दृष्टम्, "प्रोक्तादयश्च तद्धिताः" इति तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ।

(प्र०)- न [4]चेदानीमिति । लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्तिकानामुपपत्त्या दोषाभावः ।

(उ०)—[5]लक्षणप्रपञ्चाभ्यामिति । यथा कर्मधारयप्रकरणे अलुक्प्रकरणे च । विजगीषुकथायां हि अभिहिताभिधानमशक्तिसूचकत्वाद्दोषाय । इह तु व्युत्पादनार्थत्वान्न दोषकृदिति भावः । पूर्वं सामान्ये उक्ते पश्चाद्विशेषकथनं प्रपञ्चार्थमिति युज्यते, अत्र तु विपरीतमिति न तत्साम्यमित्यन्ये ।

अत्र भाष्यकृता आशङ्कितं पौनरुक्त्यं स्वयं भाष्यकारः परिहरति—पुरस्तादिति । पूर्वकालमित्यर्थः । अत्राचार्यपदेन वार्तिककारो गृह्यते, पुरस्तादिदमित्यत्रेदं पदेन यद्विवक्षितं तदाह-भवेच्च तद्धित इति । अग्रे तत्पठितमित्यत्र तत्पदेनाऽपि तदेव विवक्षितम्, अत्र पठितमित्यस्य पूर्व-

१. म० भा० आ० १, पृ० ६१
२. भा० वा० १४
३. भा० वा० १५
४ प्र० आ० १, पृ० ६१
५. उ० आ० १, पृ० ६१

कालमिति विशेषणमध्याहार्यम्, तदित्यस्य [1]भवेच्च तद्धित इति वार्तिक-प्रणयनकालादित्यर्थः। उत्तरकालमित्यत्रेदं पदेन यद् विवक्षितं तदाह-प्रयोक्तेत्यादि। अग्रिमेण तत्पदेनास्यैव विवक्षा। इदानीमित्यस्य द्वितीय-वार्तिकप्रणयनकाल इत्यर्थः, सूत्राणीत्यस्य लक्षणया वार्तिकानीत्यर्थः, मुख्यार्थस्य तु बाधादेषा लक्षणोपासिता।

अत्र प्रदीपकारः लक्षणप्रपञ्चाभ्यां सामान्यसूत्रत्वविशेषसूत्रत्वाभ्यामुप-पत्तौ अयं हेतुः—मूलसूत्रवदित्यस्य पाणिनीयसूत्राणामिवेत्यर्थः। सादृश्यानु-योगितया वार्तिकानि गृह्यन्ते, तदुपपत्तौ सामान्यवार्तिकत्वाविशेषवार्ति-कत्वयोः हेतुत्वं बोध्यम्, उपपत्त्या इत्यनेन पृथक्कथनरूपोपपत्त्या इत्यर्थो बोध्यः, दोषाभाव इत्यत्र दोषपदेन पौनरुक्त्यं ग्राह्यम्।

अत्रोद्द्योतकारः—प्रदीपग्रन्थे लक्षणप्रपञ्चाभ्यामित्यस्य दृष्टान्तमहिम्ना व्याख्यानं करोति—[2]यथेति।

अयं भावः कर्मधारयप्रकरणे "विशेषणं[3] विशेष्येण बहुलमि"ति सामान्यसूत्रस्याग्रिमसूत्राणि[4] "पूर्वापरप्रथम०" 'उपमानानि[5] सामान्य-वचनैः" इत्यादीनि विशेषसूत्रत्वादेव सङ्गतानि भवन्ति। अलुक्प्रकरणेऽपि "अलुगुत्तरपदे"[6] इति सूत्रस्याग्रिमसूत्राणि प्रपञ्चभूतत्वादेव सङ्गतानि भवन्ति, तथा प्रकृतेऽप्येकस्य सामान्यवार्तिकस्य "प्रोक्तादयश्च[7] तद्धिताः" इत्यस्य "भवेच्च तद्धितः[8]" इति वार्तिकं विशेषभूतत्वादेव सङ्गतं भवितु-मर्हति। जल्पकथायां तूक्तस्य कथनं दोषावहं भवति अशक्तिसूचकत्वात्। अत्र तु वादकथायां व्युत्पत्तिलाभाय तादृशोक्तिर्न दोषाहा। वस्तुतस्तु पूर्वकालं यदि सामान्यवचनस्योक्तिः स्यात्तदनु विशेषकथनं नूनं प्रपञ्चार्थं भवति, यथा दृष्टान्तद्वये, अत्र विशेषवचनमेव पूर्वमुक्तं पश्चात्सामान्यवचनमिति न दृष्टान्तसाम्यमतः दोषस्तदवस्थ एवेत्यन्येषाम् (उद्द्योतकृता) आशयः।

अत्र समीक्षा—जिज्ञासुजनव्युत्पादनायाचार्याणां व्याख्येयेऽर्थे तात्पर्यं भवतीति कृत्वा पुनरुक्तिजन्यं गौरवं न दोषाधायकम्, अतः वेदसम्मिता-महर्षयः स्वोक्तं न निवर्तयन्तीति रीत्या भाष्यग्रन्थस्य युक्तत्वेऽपि प्रदीप-

---

१. भा० वा० १४
२. भा० आ० १, पृ० ६१
३. पा० सू० २।१।५७
४. पा० सू० २।१।५८
५. पा० सू० २।१।५५
६. पा० सू० ६।३।१
७. भा० वा० १५
८. भा० वा० १४

कृदुक्ता दृष्टान्तेनोपपत्तिरनुचिता इत्याशयेनाह—उद्द्योतकारः पूर्वं सामान्येनेत्यादि। इदं तु न युक्तिसहं प्रतिभाति, तथा हि येन केनाऽपि रूपेणोक्तस्य तस्य तत्सदृशस्य वाऽर्थस्य पुनः पुनरभिधानं प्रपञ्चार्थमित्येतावन्मात्रेण प्रदीपकृदुक्तौ दृष्टान्तः, न त्वत्र सामान्यविशेषभावः। भावार्थकतद्धितस्य प्रोक्तादितद्धितानां चोभयेषामपि विशेषरूपत्वात्। किञ्च यद्यपि सामान्यविशेषभावः यथा कथञ्चित्स्वीक्रियेत तथाऽपि "पाठक्रमादार्थक्रमो[1] बलीयः" इति न्यायेन "प्रोक्तादयश्च[2] तद्धिताः" "भवेत्थ तद्धितः"[3] इत्येवं क्रमेण योजनया प्रदीपोक्तिरपि समञ्जसा भवितुमर्हतीति शम्।

**म० भा०[4]—द्विगता अपि हेतवो भवन्ति। तद्यथा—आम्राश्च सिक्ताः पितरश्च प्रीणिता इति। तथा वाक्यान्यपि द्विष्ठानि भवन्ति—श्वेतो धावति, अलम्बुसानां यातेति।**

(प्र०)—द्विगता[5] इति। द्वावर्थौ गताः प्रयोजनद्वयसंपादका इत्यर्थः। तथा वाक्यान्यपीति। शब्दस्याप्यर्थवद् द्विगतत्वमित्यर्थः।

(उ०)—नन्वपठितेषु[6] दोषनिवृत्तिर्न कृता स्यादत आह—यथा भूता इति। गर्गाद्यकारादिषु एकरूपेण पठितेषु तज्जातीया एव ते सर्वत्र साधव इत्यनुमातुं शक्यत इति भावः।

अत्र भाष्याभिप्रायः—भाष्यकृता यत्पूर्वमुक्तमेकेन यत्नेनोभयं लभ्यं पाठश्चैव विशेष्यते कलादयश्च निवर्त्यन्ते, तत्र जिज्ञासुः पृच्छति—कथमिति?[1] समाधत्ते भगवान् भाष्यकारः—द्विगतेति। अयमाशयः - यतः द्विगताऽपि हेतवो भवन्ति, यथा आम्रमूले उपविश्य यदि पितृतर्पणं क्रियते तर्हि तेन तर्पणजलेन आम्रस्य सेचनं भवति, तथा पितृतृप्तिरपि भवति, एवमेकेन जलदानकर्मणा प्रयोजनद्वयसिद्धिः, तथा वाक्यान्यपि द्विष्ठानि भवन्ति, द्वयोरर्थयोः तिष्ठन्तीति द्विष्ठानि, "सुपिस्थः"[7] इति कर्तरि कप्रत्ययः तानि च वाक्यानि श्वेतो धावतीत्यादीनि। तत्र कः कीदृशो धावतीति प्रश्ने श्वेत इत्युत्तरम्, श्वा इत इति विग्रहेण क इत्यस्योत्तरं सम्पद्यते, श्वेतवर्ण इत्यर्थः। एवञ्च श्वेतवर्णः श्वा इतः प्रदेशात् धावतीत्यर्थ एकेनैव श्वेतशब्देन

१. ल० श० शे० टि० नि०
२. भा० वा० १५
३. भा० वा० १४
४. म० भा० आ० १, पृ० ६९
५. प्र० आ० १, पृ० ६९
६. उ० आ० १, पृ० ६९
७. पा० सू० ३।२।४

प्रत्यायितः। एवं केषां जनपदानां गन्ता, को वा समर्थ इति प्रश्नद्वये इद-मुत्तरमलम्बुसानां यातेति। अलम्बुसाः देशविशेषाः, बुसानां पलालवर्णानां याता प्राप्तिमान् ( या प्रापण इत्यस्मात्तृच् ) अलं समर्थ इति चाऽर्थः।

अत्र समीक्षा—द्वावर्थौ गतेति द्विगताः प्रयोजनद्वयसम्पादकाः, यथा—लौकिकाः हेतवः भवन्ति तथा वाक्यमेकमपि क्वचिदर्थद्वयं वोधयति, एवञ्च गर्गादिषु पठिताः शब्दाः गर्गेत्यादि गणपठितशब्दसाधुत्वं वोधयन्तः कलादि-दोषाश्च निवर्तयन्तीति फलद्वयसिद्धिः।

इति महाभाष्य-समीक्षणे प्रथमाध्यायस्य द्वितीयपादः।

# अथ तृतीयः पादः

**म० भा०—[1]अकारस्य विवृतोपदेशः कर्तव्यः। किं प्रयोजनम्? आकारग्रहणार्थः। अकारः सवर्णग्रहणेनाऽऽकारमपि यथा गृह्णीयात्।**

(प्र०)—[2]अइउण्। सर्ववर्णानविशेषेण विचार्य विशेषेणात्र विचारः क्रियते—अकारस्येति। अत्राकारादीनां स्वरूपेणानुकार्येण वा सतोऽप्यर्थवत्त्वस्याविवक्षितत्वाद्विभक्त्यनुत्पत्तिः। स्वरसन्धिस्तु न प्रवर्तते, वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात्। तत्राकारस्य संवृतत्वाद् दीर्घप्लुतयोर्विवृतत्वात्प्रयत्नभेदात्सवर्णसंज्ञाया अप्रसङ्गात्प्रदेशेष्वकारेण दीर्घप्लुतयोर्ग्रहणं न प्राप्नोतीति विवृतत्वमकारस्योपदिश्यते। विवृतस्य गुणस्योपदेशो विवृतोपदेशः। तत्र गुणस्य नित्यसापेक्षत्वादकारापेक्षत्वेऽपि समासः। यथा-देवदत्तस्य गुरुकुलमिति। आकारग्रहणार्थ इति। विवृतोपदेश आकारग्रहणार्थ इति सामानाधिकरण्येन निर्देशादाकारग्रहणं विवृतोपदेशस्य प्रयोजनमिति सामर्थ्यादवगमाच्चोद्यानुरूपमुत्तरं न भवतीति न चोदनीयम्। सवर्णग्रणेनेति। येन शास्त्रेणाऽणुदित्सवर्णस्येत्यनेन सवर्णा गृह्यन्ते, तेन कारणेनेत्यर्थः।

(उ०)—ननु चतुर्दशसूत्र्यां प्रयोजनमुक्तमेव तत्किं पुनरत्र तद्ग्रहणेनेत्याशङ्क्याह—सर्वेति। विशेषेण। तत्तद्रूपेण। प्रत्येकं वर्णेभ्यो विभक्तिमाशङ्क्याह—स्वरूपेणेति। शब्दजन्यज्ञानविषयो हि शब्दस्यार्थः। एवं च स्वरूपमपि स्वजन्यबोधविषयत्वेनार्थः। अनुकार्यमर्थ इति तु स्पष्टमेव। एवं विद्यमानस्याप्यर्थवत्त्वस्याविवक्षितत्वादर्थवत्सूत्रेऽग्रहणादित्यर्थः। स्वरूपस्य श्रो गृहीतस्यैव शाब्दे भानोपपत्तौ न तत्र शक्तिः कल्प्या। अनुकार्यं च सादृश्येनोपस्थापयतीति न तत्रापि वृत्तिः। वृत्त्याऽर्थबोधकत्वं चार्थवत्त्वमर्थवत्सूत्रे निविष्टमिति भावः। अनुकरणत्व-

---

१. भा० वा० २५ २. शि० सू० १

भङ्गान्न विभक्तिरिति तत्त्वम्। सौत्रत्वाद्वा। कारप्रत्ययोऽपि बाहुलकान्न। स्वर-सन्धिस्त्विति। सौत्रत्वात्संहिताया अविवक्षणाद्वेति भावः। अजादिसंज्ञानामनिष्पादादिति तु चिन्त्यं, वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां यणादीनां सुध्युपास्य इत्यादौ तटस्थ इवोद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेर्दुर्वारत्वात्। अन्यथा [1]तुल्यास्यप्रयत्नमित्यादौ सवर्णदीर्घादि न स्यात्। अत्र सूत्रे। तत्रेति पाठेऽप्ययमेवार्थः। [2]वाक्यापरिसमाप्तिन्यायेनेह ग्रहणकशास्त्राप्रवृत्तेः सावर्ण्येऽपि नाऽत्र तद्ग्रहणमिति व्यर्थो विवृतोपदेशोऽत आह – प्रदेशेष्विति। अकः[3] सवर्ण इत्यादौ। तत्राप्यकारः संवृत एवेति भावः। ननु विवृतपदस्य गुणिपरत्वे सविशेषणत्वात्समासो न स्यादत आह—विवृतस्य गुणस्येति। भाष्ये कर्तव्य इत्यस्य प्रतिज्ञेय इत्यर्थः। एतेन तस्योच्चारयितुमशक्यत्वमित्यपास्तम्। भाष्ये किं प्रयोजनम् इत्यत्र उद्दिश्येत्यध्याहारः कर्तव्य इत्यनुषङ्गश्च। नन्वाकारग्रहणं सवर्णग्रहणमेवेति भेदाभावात्कथं तस्य करणत्वमत आह—येन शास्त्रेणेति।

अत्र [4]"अइउणिति" माहेश्वरसूत्रेऽकारः सवर्णग्रहणेन अष्टादशभेदमकारं गृह्णीयाद् एतदर्थं विवृतोपदेशः कर्तव्यः, तेन सर्वे विवृतप्रयत्नजन्याः अकाराः सवर्णसंज्ञकाः भविष्यन्ति, अतश्च तद्ग्रहणेन ग्रहीष्यन्तेऽणुदित्सूत्रेणेति[5] भाष्याभिप्रायः।

अत्र प्रदीपाशयः—प्रथमाह्निके वर्णसमाम्नायविषये सामान्यरूपेण विचारं कृत्वाऽत्र द्वितीयाह्निके विशेषरूपेण विचारः क्रियते भगवता भाष्यकृता-अकारस्येत्यादिना।

नन्वत्र (शिवसूत्रे) विभक्तेरुत्पत्तिर्न दृश्यते तर्हि "अपदं न प्रयुञ्जीत" इति निषेधप्रवृत्तिः कुतो नेति जिज्ञासायामुच्यते-अत्राकारादीनां स्वरूपेणाऽनुकार्यरूपेण वा वर्तमानस्याऽर्थवत्त्वस्याविवक्षया प्रातिपदिकसंज्ञा न जायते, अतो न विभक्तिरुत्पत्तिः, एवञ्चापदं न प्रयुञ्जीत इति निषेधोलङ्घनप्रयुक्तो न दोषः, यतो हि-निषेधवाक्येऽपदमित्यस्यापरिनिष्ठितमित्यर्थः, परिनिष्ठितत्वञ्च-अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकधर्मानाक्रान्तत्वम्, प्रकृते च यदि प्रातिपदिकसंज्ञा स्यात्तदा विभक्तिविधायकं नित्यं शास्त्रं (स्वौजसिति शास्त्रम्) यदि न प्रवर्तेत तदा तदीयोद्देश्यता-

---

१. पा० सू० १।१।९
२. प० शे० प० ११६
३. पा० सू० ६।१।१०१
४. शि० सू० १
५. पा० सू० १।१।६९

वच्छेदकप्रातिपदिकत्वरूपधर्माक्रान्ततया अपरिनिष्ठितत्त्वं स्यात्तदेव तु न प्रातिपदिकत्वाभावात्। अतः परिनिष्ठितत्वविभक्त्यनुत्पत्तावपि परिनिष्ठितत्वमेव, इति कृत्वा विभक्तिरहितस्याऽपि साधुत्वमेव, एषामकारादिवर्णानामुपदेशकालेऽजादिप्रत्याहाररूपसंज्ञानामनिष्पत्त्या यण्गुणदीर्घादिरूपं सन्धिकार्यं नाजायत।

अत्रोद्द्योतकारः—सौत्रत्वात्संहितायाः अविवक्षाद्वा न सन्धिकार्यम्। यत्तु प्रदीपकृता सन्धिकार्याभावेऽजादिसंज्ञाया अनिष्पत्तिरूपो हेतुरुक्तः स तु चिन्त्यः। वर्णोपदेशकाल एव चकारादीनामित्संज्ञायामच्प्रत्याहारे च सिद्धे सति प्रवर्तमान-यण्गुणादिकार्याणां सुध्युपास्य इत्यादावुदासीनलक्ष्ये एवोद्देश्यतावच्छेदकधर्माक्रान्ते वर्णोपदेशादावपि प्रवृत्तेरवश्यं भावात्। अन्यथा [1]तुल्यास्यप्रयत्नमित्यादावपि सवर्णदीर्घादिकं कथं स्यात्, यतो हि-ततोऽपि पूर्वमजादिसंज्ञा अनिष्पन्नैव।

अत्र समीक्षा—वस्तुतस्तु श्रीनागेशभट्टस्य प्रदीपग्रन्थे आक्षेपः चिन्त्य एव, अजादिसंज्ञानिष्पत्युत्तरं स्वरसन्धिकार्यं विधाय पुनर्वर्णोपदेशः कथं न कृत इति शङ्कायाः तन्मतेऽपि जागरूकत्वात्। भगवतः पाणिनेः व्याकरण-शास्त्रप्रणयनोत्तरं भगवता शिवेन स्वरसन्धिं विधाय पुनर्वर्णोपदेशो न कृतः, पुनरुक्तेः फलाभावात्। [2]तुल्यास्यसूत्रे तु सवर्णदीर्घो युक्त एव, यतो हि—तुल्यास्येत्यस्य संज्ञासूत्रत्वेन "अकः[3] सवर्णे" इत्यनेन सह एक-वाक्यतयैव कार्यकालपक्षे वाक्यार्थबोधाभ्युपगमात्। वर्णोपदेश 'इको[4] यणची'त्यादीनां च नैकाचार्यकर्तृकत्वमेकवाक्यतया नाऽपि बोधजनकत्वम्। तुल्यास्येत्यस्य[5] "त्वक[6] सवर्णे" इत्यादिभिः सह एकवाक्यतया शाब्दबोध-जनकत्वं द्वयोरेकाचार्यकर्तृकत्वञ्चेत्यस्त्युभयोर्विशेष इत्याकलनीयम्।

---

१. पा० सू० १।१।९
२. पा० सू० १।१।९
३. पा० सू० ६।१।१०१
४. पा० सू० ६।१।७७
५. पा० सू० १।१।९
६. पा० सू० ६।१।१०१

**म० भा०-[1]आचार्यप्रवृत्तिर्ज्ञापयति – भवत्याक्षरसमाम्नायिकेन धात्वादिस्थस्य ग्रहणमिति। यदयम् "अकः[2] सवर्णे दीर्घः" इति प्रत्याहारेऽको ग्रहणं करोति। कथं कृत्वा ज्ञापकम्? न हि द्वयोराक्षरसमाम्नायिकयोर्युगपत्समवस्थानमस्ति।**

(प्र०) - [3]यदयमिति। अत्र हि ककारेण चिह्नेन प्रत्याहारस्थो विवृतो निर्दिष्टः, तेन च संवृतस्याग्रहणे इकः सवर्णे इति वक्तव्यम्। न हि द्वयोरिति। यद्यप्येकोऽपि विवृतो नास्तितथापि द्व्यधिष्ठानत्वादेकादेशस्य द्वयोरित्युक्तम्।

(उ०) प्रत्याहारे[4] इति। संग्राहके शास्त्र इत्यर्थः। वक्तव्यमिति। एवं च प्रयत्नभेदेनासवर्णस्यापि अत्वजात्याक्रान्तस्य विवृतेनाकारेण ग्रहणं ज्ञाप्यत इत्यर्थः। यद्यप्येकोऽपीति। प्रत्युच्चारणं वर्णान्यत्वादाक्षरसमाम्नायिकस्य प्रयोगेऽभावादिति भावः। आदिरन्त्येनेत्यस्य चान्त्यसदृशेन सहोच्चार्यमाण आदिसदृश इत्याद्यर्थः। तत्र ककारादिचिह्नेनागादिशब्दस्थस्तत्सदृशत्वाद्विवृत एव। सादृश्यं च व्यक्तिभेदे सति सर्वधर्मसाम्यप्रयुक्तं ग्राह्यम्। तस्य च प्रयोगस्थेऽभावेऽप्यनेन तद्ग्रहणं ज्ञाप्यत इति तात्पर्यम्। केचित्तु देवदत्त अजस्तीत्यादौ प्रत्याहारलिङ्गेनैक आक्षरसमाम्नायिकोऽस्ति, तदर्थं भाष्ये द्वयोरित्युक्तमित्याहुः। भाष्ये युगपत्समवस्थानमिति। अस्य प्रयोगे इत्यादिः।

अत्र मूलभाष्यस्यायमाशय एकदेशमतेन समाधानमिदं विधीयते ज्ञापनरूपम्। आक्षरसमाम्नायिकेन इत्यस्य विवृताकारेणेत्यर्थः। धात्वादिस्थस्येत्यत्र संवृत्ताकारस्येति शेषो बोध्यः। अत्र ज्ञापने प्रमाणं दर्शयति-यदयमिति। यद्—यत इत्यर्थः, अयं पाणिनिः। अकः ककारात्मकचिह्नानुमितवर्णसमाम्नायस्थविवृत्ताकारस्य। करोतीत्यस्य—अत इति शेषो बोध्यः। हि—यतः द्वयोः आक्षरसमाम्नायिकयोः विवृत्ताकारयोः। अस्तीत्यस्य अत इति शेषः। अग्रे ज्ञापनस्वरूपमुपसंहरणीयम्।

अत्र प्रदीपाशयः—लक्ष्ये यद्यप्येकोऽप्याक्षरसमाम्नायिको विवृत्ताकारो नैव संभवति, तस्याक्षरसमाम्नाये एव वर्तमानत्वात्, तथाऽप्ययमेकादेशः द्वयोः स्थाने भवतीति कृत्वा द्वयोरित्युक्तम्।

---

१. म० भा० आ० २, पृ० ७५ २. पा० सू० ६।१।१०१
३. प्र० पृ० ७५ ४. उ० पृ० ७५

अत्रोद्द्योताशयः—प्रत्युच्चारणं शब्दाः भिद्यन्त इति पक्षमाश्रित्य भाष्य-प्रदीपयोः सङ्गमनम् "तत्पक्षे, ह्याक्षरसमाम्नायिकस्य एकस्याऽपि प्रयोगे सत्ता न सम्भवति। अस्मिन् पक्षे" [1]आदिरन्त्येनेत्यत्रान्त्येत्सदृशेन सहोच्चार्यमाण आदिसदृशः मध्यपातिसदृशानां संज्ञा, एवं क्रमेणार्थो बोध्यः। अकः[2] सवर्णे, इत्यत्र ककाररूपेण चिह्नेन भवत्यकार आक्षरसमाम्नायिकविवृताकारसदृशः। अत अयमपि विवृत एव, यतश्च सादृश्यं व्यक्तिभेदे सत्यपि भूयो धर्मतुल्यत्वप्रयोज्यं गृह्यते। यद्यपि प्रयोगे वर्णसमाम्नायस्थः भवितुं नार्हति तथाऽप्यनेन ज्ञापनेन तद्ग्रहणं भवत्येव।

स्वमतं दर्शयत्युद्द्योतकारः केचित्त्वित्यादिना[3]। अयं भावः—"हे देवदत्त अजस्ती"ति वाक्ये चकाररूपेण चिह्नेन एक अकार आक्षरसमाम्नायिक एवेति प्रत्यभिज्ञा भवत्येव, अतः भाष्ये द्वयोरिति उक्तमिति प्रदीपविवृतमाशयं प्रकाशयति, प्रदीपे त्वेकस्याऽपि सत्तानिषेधः कृतोऽस्ति।

अत्र समीक्षा—वस्तुतस्तु वाक्यशेषे केचित्त्वित्यादिना यदुक्तमुद्द्योतकृता तन्न रुचिरं प्रतीयते, तथा हि—पाणिनिना तत्र तत्रोपदिष्टासु "अक्, अच्, अल्" इत्यादिप्रत्याहाररूपसंज्ञासु आदिमवर्णानामाक्षरसमाम्नायिकवर्णानामनुकरणत्वम्, अन्त्यवर्णानाञ्च तत्रत्यान्तवर्णानामनुकरणत्वमिति। अकः[4] सवर्णे इत्यादाविदं वक्तुं शक्यते यदनुबन्धलिङ्गेनाकारस्य विवृतोपदेश इति। "हे देवदत्त अजस्ती"त्यादावस्मदादिवाक्ये त्वजादिपद [5]"उपदेशेऽजित्यादिशास्त्रघटकाजादिपदानुकरणत्वम्" न त्वाक्षरसमाम्नायिकतत्तद्वर्णानामनुकरणम्। एवञ्चाऽत्रेदं वक्तुं न युज्यते यदनुबन्धचिह्नेनाकारस्य विवृतोपदेश इति। न चास्मदादिवाक्येऽजादिपदे समुदायानुकरणत्वेऽप्येकैकस्याऽप्यनुकरणत्वमस्त्येव, "[6]प्राग्दीव्यतोऽण्" इत्यत्र यथैकदेशानुकरणं दीव्यदिति तदवत्, किं चास्मदादिवाक्येऽपि नानुकृतस्यानुकरणत्वं किन्तु साक्षादेवाऽऽक्षरसमाम्नायिकस्यानुकरणत्वमिति वक्तुं शक्यमिति वाच्यम्। पाणिन्युपदेशं द्वारीकृत्यैवास्मदादीनां तत्तत्प्रत्याहारबोधः, स्वातन्त्र्येण प्रत्याहारोपदेशप्रवृत्तेर्वक्तुं शक्यत्वाभावात्। अत एवास्मदादिवचनानां पाणिन्युपदेशद्वारकं प्रामाण्यमित्यनुवादकत्वं न तु विधित्वम्। तथा चास्मदादिवाक्ये समुदायोपदेशस्याजादिप्रत्याहारस्वरूपबोधन एव तात्पर्यं भवितु-

---

१. पा० सू० १।१।७१ | २. पा० सू० ६।१।१०१
३. उ० पृ० ७५ | ४. पा० सू० ६।१।१०१
५. पा० सू० १।३।२ | ६. पा० सू० ४।१।८३

मर्हति । यदि त्वस्मदादिवाक्येऽप्यजादिपदेन कुत्रचित् तत्ताद्वर्णबोधस्तदाऽपररीत्या लक्षणाविशेषरूपवृत्तिजन्य अस्मदादिवाक्यघटकाजादिपदोपस्थापितपाणिन्याद्युपदिष्टाजादिपदप्रयोज्य एव स मन्तव्यः । स्वमतरीत्या त्वप्रसिद्धा शक्तिरेव तत्र मन्तव्या, एवं चानुकार्यस्य योऽर्थः तद्बोध अनुकरणेनाऽपि कर्तुं शक्य एव. यथा—तरप्तमप्प्रत्यययोरनुकरणे द्वन्द्वे च सति तरश्च तमश्च तरप्तमौ तयोः भावः तारतम्यमित्यत्र तरतमशब्दाभ्यां न्यूनातिशयितयोरुत्कर्षयोः बोधः । अस्मदादिवाक्यघटकाजादिपदस्य पाणिन्यादिपदवत्साक्षादनुकरणत्वं न भवितुमर्हति, अजादिसंज्ञां द्वारीकृत्याऽस्मदादिभिः कस्यचित्कार्यस्याऽऽदेशनाभावः, एवञ्चास्मदादिवाक्येऽजादिपदीयाकारसंवृत्त एवेति ज्ञेयम् । अतश्च "देवदत्त अच्" इत्यादिवाक्येऽजादिपदघटिताकारः विवृतप्रयत्नजन्यः, देवदत्तादिपदेऽन्त्याकारः संवृत्तप्रयत्नजन्य इत्येवमकारस्य विवृत्तरूपेणोपलब्धिरस्त्येवेत्यादिकथनमयुक्तं प्रतिभातीति दिक् ।

**म० भा०-विषम[1] उपन्यासः । युक्तं यत्सतस्तत्र प्रक्लृप्तिर्भवति । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च । दीर्घप्लुतौ पुनर्नैव लोके नैव च वेदे संवृत्तौ स्तः । कौ तर्हि ? । विवृतौ, यौ स्तस्तौ भविष्यतः ।**

(प्र०)—सतस्तत्रेति ।[2] अशक्यत्वाद्दीर्घप्लुतयोः संवृतयोरुच्चारणस्येत्यर्थः ।

(उ०) —[3]तद्वत्संवृतौ दीर्घप्लुतावपि कुतो न सन्ताविप्यत आह-अशक्यत्वादिति । केचित्तु--शिष्टसम्मतत्वात्ते सन्तः । इमौ तु न तथेति भाव इत्याहुः । सन्ति हि यण इति भाष्ये यण इति बाहुल्याभिप्रायेण, रेफस्यानुनासिकत्वाभावादिति बोध्यम् ।

अत्र भाष्याशयः सिद्धान्ती प्रकृतस्थले दृष्टान्तद्राष्टान्तिकयोः बृहद्वैषम्यस्योपपादनात् दृष्टान्तं स्पष्टयति—विषम इति । तत्र पदेनानुनासिकयण्विषये इत्यर्थो बोध्यः ।

१. म० भा० आ० २, पृ० ७६ २. प्र० पृ० ७६
३. उ० पृ० ७७

प्रदीपाशयस्तु क्वचन् विद्यमानस्यैव पदार्थस्य लोके प्रसिद्धिर्भवति, दीर्घप्लुतौ तु संवृतौ नैव स्तः, अतस्तयोरुच्चारणस्य प्रसिद्धिर्नास्ति।

अत्रोद्योतः अस्मिन् ग्रन्थे तदवदित्यनेनानुनासिकयण्वदित्यर्थो ग्राह्यः, तच्छब्दोऽनुनासिकयण्पर इति यावत्. त अनुनासिकयणः, इमौ संवृतदीर्घप्लुतौ। तथा शिष्टसम्मतौ, यण इतीत्यस्य बहुवचनान्त इति शेषो बोध्यः, तत्र हेतुमाह—रेफस्येत्यादिना।

अत्र समीक्षा वस्तुतस्तु शिष्टप्रयुक्तत्वाभावेन तयोरविद्यमानत्वचर्चा न प्रामाणिकी, नित्यपरोक्षे दृष्टे स्वर्गनरकादौ ईश्वरादावेव शिष्टसम्मतेः प्रामाण्यम्, न तु प्रत्यक्षादि प्रमाणयोग्यवस्तुसत्वे। प्रकृते तु संवृतप्रयत्न-जन्ययोः दीर्घप्लुतयोः प्रत्यक्षप्रमाणेनैवानुपपद्यमानत्वादुच्चारणाशक्यत्व-रूपेण हेतुना तयोरसत्वानुमितिः युक्तेति प्रतीयते।

**म० भा०—लृकारोपदेशः[1] क्रियते—यदृच्छाशब्दार्थोऽशक्तिजानुकरणार्थः प्लुत्याद्यर्थश्च।**

(प्र०)—[2]यदृच्छेति। अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्त्र-भिप्रायेणैव प्रवर्तते स यदृच्छाशब्दो डित्थादिः।

(उ०)—[3]अर्थगतमिति। शब्दातिरिक्तमर्थरूपमित्यर्थः, यद्वा व्यक्तेरेव वाच्यता, तस्यां च प्रकारताविशेष्यताख्यविषयताद्वयाङ्गीकाराच्छक्तिग्रहोपपत्तिः, सविकल्प-कोपपत्तिश्च तत इति भावः।

अत्र भाष्याशयः—वर्णसमाम्नाये लृकारोपदेशस्य प्रयोजनं वक्ति-यदृच्छेत्यादिना।

अत्र प्रदीपकारः यदृच्छाशब्दं विशदयति—अर्थगतं प्रवृत्तिनिमित्त-मनपेक्षमाणो यः शब्दः वक्त्रभिप्रायेणैव स्वार्थं बोधयितुं प्रवृत्तो भवति, स एव यदृच्छाशब्द उच्यते, यथा डित्थडवित्थादि। तत्र वक्ता स्वेच्छया डित्थशब्दं हस्तिरूपेऽर्थे अश्वे वृषभे वा यत्र कुत्राऽपि प्रयुञ्ज्यात् तस्यैव बोधो भवति। किं बहुना आदैज् रूपेऽर्थे प्रयुक्तो वृद्धिशब्दः पाणिनिमुने-र्यदृच्छाशब्द एवेति।

अत्रोद्योतकारः प्रदीपमित्थं योजयति—अर्थगतमिति। शब्दाति-रिक्तमर्थरूपमित्यर्थः। यद्वा व्यक्तिरेव शब्दवाच्या, तस्याञ्च प्रकारता-

---

१. भा० वा० ४३ २. प्र० शि० सू० २

३. उ० पृ० ८५

विशेषताऽन्यतरलक्षणं विषयताद्वयमङ्गीकृत्य तत्तच्छब्दस्य शक्तिग्रह उपपादनीयम्, तत एव सविकल्पकश्चाऽप्युपपादयितुं शक्यः।

समीक्षा - अत्राऽप्युद्द्योतग्रन्थः चिन्त्य एव प्रतिभाति, तथा हि—व्यक्तिमात्रस्य वाच्यत्वपक्षेऽपि तस्याः व्यक्तिविशेषत्वेनैव वाच्यत्वं भवितुमर्हतीति कृत्वा तस्या अपि विशेषधर्मपुरस्कारेणैव भानमिति शक्तिग्रहस्य, यदृच्छाशब्दजन्यबोधे सप्रकारतया सविकल्पकत्वमुपपद्यत इत्येकस्याः एव वक्तेः प्रकारताविशेषताद्वयस्याननुभूतिचरस्यानुपपद्यमानस्य चाङ्गीकारो न युज्यते। विषयताभेदमानस्य विषयभेदभानव्याप्यत्वात्, एकस्याः एवोपाधिप्रयुक्तभेदाङ्गीकारे तु भेदकोपाधियुक्ता या व्यक्तिः तस्याः एव वाच्यत्वमुचितम्।

नन्वेवं सति तस्योपाधिरेव प्रवृत्तिनिमित्तत्वं संभवति इत्यर्थगतं प्रवृत्तिनिमित्तमनपेक्ष इति प्रदीपग्रन्थो नोचित इति चेदुच्यते--नानाव्यक्तिष्वनुगत एक एव धर्मः तत्र प्रवृत्तिनिमित्ततया युज्यते। तथा हि—प्रवृत्तिनिमित्तं द्विविधं दृष्टम्, एकं नानाव्यक्तिष्वनुगतकर्मरूपम्, यथा - घटत्व-पाचकत्वादिरूपम्, अन्यच्च —यदृच्छाशब्दस्थले प्रयोक्त्रभिप्रायरूपम्, अत एव [1]प्रदीपे तादृशस्य प्रवृत्तिनिमित्तस्य तु न वाच्यार्थगतत्वमिति सुस्पष्टमेव तत्त्वगिदामिति रीत्या प्रदीपग्रन्थः सुसङ्गत एवेति दिक्।

**म० भा०--[2]लृकारोपदेशः क्रियते, यदृच्छाशब्दार्थोऽशक्तिजानुकरणार्थः प्लुत्याद्यर्थश्च।**

(प्र०)—[3]यदृच्छेति। अर्थगतं प्रवृत्तिनिमित्तमनपेक्ष्य यः शब्दः प्रयोक्त्रभिप्रायेणैव प्रवर्तते, स यदृच्छाशब्दो डित्थादिः। ऋकारल्ृकारयोः सवर्णविधिरित्यस्य वार्तिककारवाक्यत्वात्सूत्रकारेणानाश्रितत्वादत्र लृकारोपदेशः कृतः।

(उ०)—[4]उपदेशः कृत इति। पाणिनये शिवेन इति शेषः। वस्तुतोऽत्र तस्यानुपदेशेऽप्रामाणिकत्वशङ्कया सवर्णविधिरपि तयोर्वक्तुमशक्य इति तदुपदेशः। सवर्णविधिद्वारकफलमपि स्थलत्रये एवेति तत्रैव प्रयोजनोपन्यास इति बोध्यम्।

१. प्र० पृ० ८५ २. भा० वा० ४३
३. प्र० पृ० ८५ ४. उ० पृ० ८५

भाष्याशयः पूर्वोक्त एव, प्रदीपोऽपि [1]"ऋऌवर्णयोः मिथः सावर्ण्यं वाच्यमिति वार्तिकमधिकं ब्रूते।" तदनुगुण उद्द्योतोऽपि[2]—उपदेशः कृत इति प्रतीकमादाय पाणिनये शिवेन इति शेषं पूरयति, पुन उपदेशस्य फलान्तरं प्रतिपादयत्युद्द्योतकारः वस्तुत इत्यादिना।

अत्र समीक्षा—वस्तुतः प्रदीपोक्तिरेव ज्यायसी प्रतिभाति, तथा हि यथा अकारादिसवर्णानामुपदेशाभावेऽपि न तेषामप्रामाण्यशङ्का, तथैव ऋकार-सवर्णस्य ऌकारस्योपदेशाभावेऽप्यप्रामाण्यशङ्का न स्यात्, प्रमाणान्तरबोध-कत्वात्। तथा च शुक्लयजुर्वेदेऽष्टादशाध्याये एकादशे मन्त्रे--[3]"क्लृप्तञ्च मे क्लृप्तिश्च मे" इति वाक्ये निविष्टमस्ति, अत्र ऌकारोच्चारणं तत्सत्त्वे मानमस्ति। तस्मात् जातिपक्षे जातिनिर्देशेन व्यक्तिपक्षे च सवर्णग्रहणेन सवर्णानां ग्रहणं भविष्यतीति तात्पर्येणैव पक्षद्वयसाधारणतया पाणिनये महेश्वरेण सवर्णवर्णानामुपदेशो न कृत इति युज्यते वक्तुम्। तथा च जातिपक्षे ऋकारोपदेशेन ऌकारस्य ग्रहणं न स्यादिति तत्पक्षे ऌकारोपदेश आवश्यकः, ऋकारऌकारयोः जातिभेदात्। एवं व्यक्तिपक्षेऽपि भगवता शिवेन ऋकारऌकारयोः सावर्ण्यस्यानुक्तत्वात्तदुपदेशः सार्थकः प्रतिभातीति शम्।

**म० भा०--[4]पूर्वोक्तमेव।**

(प्र०)--[5]यदृच्छेति प्रतीके एव पूर्वोक्तादवशिष्टः। अर्थवत्सूत्रारम्भा-च्चाव्युत्पन्ना यदृच्छाशब्दाः सन्तीत्यवगम्यते। गाव्यादीनां गवादिभि-र्निर्वर्तितत्वादसाधुत्वम्। ऋतकशब्दस्त्वर्थाश्रयेणैव विनियुक्त इति ऌतक-शब्दस्यानिवर्तकः।

(उ०)—[6]ननु सन्तमसन्तं वा क्रियायोगमर्थंगतमङ्गीकृत्य डित्थादीनामपि व्युत्पत्तेरर्थगतार्थरूपप्रवृत्तिनिमित्तानपेक्षशब्दसत्त्वे किं मानमत आह— अर्थवदिति। चिन्त्यमिदम्, बहुच्पूर्वे तस्य चारितार्थ्यात्। एतदर्थं तद्धितपदं तद्विशिष्टपरम्। "अप्रत्ययः" [7]इत्युक्तेश्च पचतकीत्यादौ न दोषः। प्रत्ययश्च तद्धितभिन्न एव। बहुपटवस्तिष्ठन्तीत्यादौ "यं समुदायम्" इति न्यायेन न दोष इति कैयटाशयं मन्ये।

---

1. का० वा० ३१
2. उ० पृ० ८५
3. शु० यजु० १८।११
4. शि० सू० २
5. प्र० पृ० ८५
6. उ० पृ० ८५
7. उ० पृ० ८५

अत्र प्रदीपकार:—यदृच्छाशब्देष्वव्युत्पन्नत्वमर्थ[१]वत्सूत्राऽऽरम्भात् साधितम्, गाव्यादीनामसाधुत्वं द्योतितं गवादिभिर्निवृत्तत्वात्। ऋतक-शब्दस्य प्रयोगस्तु क्रियाप्रवृत्तिनिमित्ततया कृत इति, स तु न लृतकशब्दस्य निवर्तकः।

अत्रोद्द्योतकारः—[२]डित्थादीनामपि काथञ्चित्कं क्रियायोगं स्वीकृत्य व्युत्पन्नत्वं संभवतीति यदृच्छाशब्दानामव्युत्पन्नत्वे प्रमाणं दर्शयति प्रदीपकार अर्थवदित्यादिना—इत्येवं प्रदीपग्रन्थं योजयित्वा तस्य चिन्त्यत्वमपि ब्रूते बहुच्पूर्वे तस्य चारितार्थ्यात् (तस्यार्थवत्सूत्रस्य[३] चारितार्थ्यात्) इत्यादिना।

अत्र समीक्षा मूलकेनोप[४]दंशमित्यादौ कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणं भवतीति परिभाषया प्रातिपदिकसंज्ञा कृत्तद्धितेति सूत्रेण प्राप्नोति, तस्याः वारणाय समासग्रहणस्य नियमार्थत्वमावश्यकमिति तस्य नियामकत्व-सम्पत्तौ अर्थवत्सूत्रं सप्रयोजनमित्यर्थवत्सूत्रसामर्थ्याद् अव्युत्पन्नयदृच्छा-शब्दानां सत्ता ज्ञापयितुं न शक्यत इत्युद्द्योतकृतामाशयः, स च नातिसमी-चीनं प्रतिभाति, यतो हि—मूलकेनोपदंशमित्यादौ समासग्रहणं कृन्नियमस्य प्रातिपदिकसंज्ञानिवृत्तिः न फलम्। [५]कृद्ग्रहणपरिभाषायां गतिसाहचर्यात् कारकस्याऽपि समासघटकपूर्वपदरूपस्यैव ग्रहणेन मूलकेनोपदेशमित्यादौ कृदन्तत्वप्रयुक्तप्रातिपदिकत्वमप्राप्तमेव, तस्मादव्युत्पन्नयदृच्छाशब्दसत्तायां प्रमाणभूतभाष्यस्यानुवादक एव प्रदीपग्रन्थः युक्तः प्रतीयत इति दिक्।

**म० भा०—[६] "अशक्तिजानुकरणार्थः। अशक्त्या कयाचिद् ब्राह्मण्या ऋतक इति प्रयोक्तव्ये लृतक इति प्रयुक्तम्। तस्या-नुकरणं ब्राह्मण्य लृतक इत्याह, कुमार्य्लृतक इत्याह।**

(प्र०)-[७]अशक्तिजेति। अशक्तिजानुकरणस्य जातिशब्दत्वमिच्छन्ति। यस्मादनुक्रियमाणे शब्दे या जातिः समवेता, तत्सम्बद्धमनुकार्यमनुकरणे प्रत्याययति।

---

१. पा० सू० १।२।४५ — २. उ० पृ० ८५
३. पा० सू० १।२।४५ — ४. प० शे० प० २८
५. पा० सू० १।२।४६ — ६. म० भा० आ० २, पृ० ८६
७. म० भा० प्र० पृ० ८६

(उ०)—[1]यस्मादिति । अनुक्रियमाणशब्दव्यक्तयो बह्वयः । प्रत्यभिज्ञा तु जातिनिबन्धनारूपसादृश्यनिबन्धना चेति भावः । एतेऽपि यदृच्छाशब्दाः, स्वेच्छयैव वक्त्रा शब्दपरतया प्रयोगादित्यन्ये ।

भाष्यादेरयमाशयः—काचन्ब्राह्मणी सामर्थ्याभावाद् ऋतकशब्दं प्रयोक्तुमिच्छन्ती लृतक इति प्रयुक्तवती, तस्या अनुकरणं कृत्वा कश्चनोक्तवान् यद् ब्राह्मणम् लृतक इति ।

अत्र प्रदीपकारः—अशक्तिजा अनुकरणशब्दस्य जातिशब्दत्वं दर्शितवान्, यतश्चानुक्रियमाणे शब्दे समवेताया जातिः तया सम्बद्धमनुकार्यमनुकरणञ्च ।

उद्द्योतकारश्चानुक्रियमाणशब्दव्यक्तीनां बहुत्वात् जातिपक्षः समाश्रितः, प्रत्यभिज्ञाजातिमूलिका रूपसादृश्यमूलिका वा, इत्येवमुक्तवान्, पुनश्च एतेषां यदृच्छाशब्दत्वं प्रतिपादितवान् ।

अत्र समीक्षा—उद्द्योतकृता अशक्तिजा अनुकरणशब्दस्याऽपि डित्थादिशब्दवद् यदृच्छाशब्दत्वमुक्तम्, तत्र च स्वेच्छया एव वक्त्रा शब्दपरतया प्रयोगादिति हेतुरपि दर्शितः । स चाऽयं हेतुः न साध्यसाधकः, व्याकरणदर्शने [2]"स्वं रूपमिति" शास्त्रेण शब्दशास्त्रीयसंज्ञाभिन्नानां शब्दानां शब्दपरत्वेऽपि तेषु यदृच्छाशब्दत्वरूपसाध्यस्याभावेन व्यभिचारात् । न च तत्रापि यदृच्छाशब्दत्वमिष्यत एवेति वाच्यम्, स्वं [3]रूपमिति शास्त्रबलेन शब्दस्य स्वरूपमर्थश्चेत्युभयं शब्दस्य स्वरूपमर्थश्चेत्युभयं शब्दस्य वाच्यतया स्वीक्रियते, तत्र लोकेऽर्थो विशेष्यः शब्दस्तु विशेषणं भवति । व्याकरणशास्त्रे तु शब्दो विशेष्य अर्थो विशेषणमिति सिद्धान्तम् । तत्र यदृच्छाशब्दत्वरूपसाध्याभावस्य सुस्थिरत्वात् । परिभाषेन्दुशेखरेऽर्थवद्ग्रहणे [4]नानर्थकस्य ग्रहणमिति परिभाषा व्याचक्षाणेन भवतीत्यपि तथैवाभ्युपेतत्वाच्च । किञ्च एकेन प्रयोक्त्रेकस्मिन्नर्थे स्वेच्छया संकेतित अव्युत्पन्नः शब्दः, यदृच्छाशब्दत्वेन लोकैर्व्यवह्रियते, अनुकरणशब्दस्त्वदृशो न भवति, तस्य शब्दपरत्वेन व्यवहारस्यानादिपरम्परा सिद्धत्वात् । अशक्तिजानामनुक्रियमाणानामप्यनादिव्यवहारसिद्धत्वाच्चेति शम् ।

---

१. म० भा० उ० पृ० ८६
२. पा सू० १।१।६८
३. पा० सू० १।१।६८
४. प० शे० प० १४

**म० भा०—"एषोऽपि[1] ऋफिडः, ऋफिड्डश्च" कथम् ? अतिप्रवृत्तिश्चैव लोके लक्ष्यते फिडफिड्डौ औणादिकौ प्रत्ययौ ।**

(प्र०)—[2]एषोऽपीति । उणादयो बहुलमित्येतावन्वाख्याताविति भावः ।

(उ०)—[3]फिडफिड्डयोरुणादिष्वदर्शनादाह—उणादय इति । बाहुलकसिद्धावेतावित्यर्थः ।

अत्र भाष्यादेरयमाशयो यद् ऋधातोरौणादिकौ फिडफिड्डौ प्रत्ययौ विधाय "ऋफिडः, ऋफिड्डः" इति शब्दौ साधनीयौ, तत्र प्रदीपोद्द्योतयोरिदं वैमत्यमस्ति यदौणादिक्त्वात्साधनीयावेताविति प्रदीपः, बाहुलकात्साधनीयावित्युद्द्योतः ।

अत्र समीक्षा – वस्तुत उणादय इत्यत्रादिशब्दः प्रकारार्थो न तु प्रभृत्यर्थकः, प्रकारश्च सादृश्यः तच्च शिष्टप्रयुक्तानुग्राहकत्वेन रूपेण ग्राह्यम्, यतो हि –सादृश्यप्रतियोगितावच्छेदकव्यापकेन धर्मेण सादृश्यं गृहीतुमुचितं भवति, स च धर्मः प्रकृते शिष्टप्रयुक्तानुग्राहकत्वरूपः, तथा च तत्तद्धातुभ्य उणादयः (उण्सदृशाः) प्रत्ययाः बहुलं भवन्तीत्युणादयो[4] बहुलमित्यस्यार्थः । अयमाशयः यथा—कारुदारुवायवादिशब्देषु शिष्टप्रयुक्तेषु कृ दृ इत्यादि धातुभ्य उण्प्रत्ययो भवति । तथैवान्येष्वपि शिष्टप्रयोक्तेषु शब्देष्वुण्सदृशाः प्रत्ययाः तत्तद्धातुभ्यः भवन्ति, बहुलमिति तु प्रकृतिप्रत्ययनियमार्थम् । आदिशब्दस्य प्रकारार्थत्वादेव गणपाठे उणादयो न सूत्रकृता पठिताः, इति प्रकारार्थत्वेनैव ( सदृश्यार्थत्वेनैव ) प्रदीपग्रन्थो योजनीयः, न तु बाहुलकमार्यादयेति शम् ।

**म० भा०—स[5] एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन्प्रत्याख्यायते, सैषा महतो वंशस्तम्बाल्लट्वानुकृष्यते ।**

(प्र०)—[6]वार्त्तिककारस्य लृकारप्रत्याख्यानं निष्प्रयोजनमित्याह–सैषेति ।

(उ०)- [7]भाष्ये स एष इति प्लुत्याद्यर्थ-विद्यमान-लृकारोपदेशो रवतो

१. म० भा० आ० २, पृ० ८७
२. म० भा० प्र० पृ० ८७
३. म० भा० उ० पृ० ८७
४. पा० सू० ३।३।१
५. म० भा० आ० २, पृ० ९२
६. म० भा० प्र० पृ० ९२
७. म० भा० उ० पृ० ९२

ह्रस्वस्येति गुरुन्यासरूपसूत्रभेदेन प्रत्याख्यायत इति यत्तदयुक्तमित्यर्थः। कुत इत्यत आह—सैषेति। यतः सैषा प्रत्याख्यानात्मिका उक्तिर्महतो वंशस्तम्बाल्लट्वानुकर्षाभिन्नेत्युक्ते यथा महतो वंशस्तम्बाल्लट्वानुकर्षणमयुक्तमेवम् लृकारप्रत्याख्यानमिति गम्यते।

अयमाशयः - "[1]गुरोरनृत" इत्यादिसूत्रस्थाने "गुरोररवतो ह्रस्वस्येति गुरुभूतन्न्यासं कृत्वा सूत्रं प्रत्याख्यातम्। एतत्कार्यं नोचितं प्रतिभातीति स्वयं भगवता प्रत्याख्यानस्यायुक्तत्वमुक्तम्-सैषेति। यत एषा सूत्रप्रत्याख्यानरूपा उक्तिः तादृशी प्रतीयते यादृशी स्थितिः महान्तं वंशरूपमादाय लट्वायाः अनुकर्षणस्य भवति।

अत्र समीक्षा—भूयसा आयासेन साध्यमल्पं फलं यथा औचित्यं नावहति तथैतावता बहुपरिश्रमेण साध्यम् लृकारोपदेशप्रत्याख्यानरूपं फलं न युज्यते। अत्र लट्वापदार्थ उद्द्योतकृता उक्तः पक्षिविशेषः फलविशेषो वेति। तत्र विश्वकोशः प्रमाणमस्ति, स चाऽयम् "खट्वाकरञ्जभेदे स्यात्फले मद्ये खगान्तरे" इति। अल्पस्य फलस्य हेतोः भूयान् परिश्रमो नोचित इति तात्पर्यम्।

**म० भा०—[2]नेत्याह, तादपि परस्पर इति।**

(प्र०)—[3]तादपीति। तन्त्रन्यायाश्रयणादेकस्यैव द्विशक्तित्वादेकशेषाश्रयणाद्वाऽनेकार्थाभिधानमिति भावः।

(उ०) - [4]नेत्याहे'त। स एव तपर इति नेत्याहेत्यर्थः। अर्थभेदेन शब्दभेदे—तन्त्रन्यायेनेति। तद्भेदेऽपि शब्दैक्यपक्षे आह—एकस्यैव द्विशक्तित्वादिति। एकशेषेति। समाहारद्वन्द्वविषये एकशेषाभावेनैकवचनानुपपत्त्येदं चिन्त्यम्।

अयमाशयः – "[5]तपरस्तत्कालस्ये" ति सूत्रे तपरपदे तन्त्रैकशेषाऽन्यतरेण व्यर्थकता स्वीकार्या, अतः "[6]वृद्धिरादैच्" "[7]अदेङ् गुणः" इत्यादिषु तः परो यस्मादित्यर्थेनाऽऽकारस्य अकारस्य च सङ्ग्रहः, तात्परः तपर इति द्वितीयार्थेन ऐचः एङश्च सङ्ग्रहः, इममेवाशयं भगवान् भाष्यकारः स्पष्टयति-नेत्यादिना। तदपीत्यत्रापि शब्देन तः परे यस्मादिति बहुव्रीहिः सङ्ग्रहः।

---

१. पा० सू० ८।२।८६
२. शि० सू० ३-४
३. म० भा० प्र० पृ० ९६
४ म० भा० उ० पृ० ९६
५. पा० सू० १।१।७०
६. पा० सू० १।१।१
७. पा० सू० १।१।२

अत्र समीक्षा—[1]सकृदुच्चरितत्वे सति बह्वर्थबोधजनकत्वं तन्त्रत्वम्, यथा—अक्षो भज्यन्तां भुज्यन्तां दीव्यन्तामित्यत्र अक्षपदे तन्त्रन्यायेन विधितकाक्ष, देवनाक्ष, शकटाक्षरूपस्यार्थत्रयस्य बोधः। किं वा ब्राह्मणाभ्यां कृतं देहीत्यत्र ब्राह्मणाभ्यामिति पदे तृतीयान्तचतुर्थ्यन्तार्थयोः तन्त्रेण बोध्यः, ब्राह्मणाभ्यां कृतं ब्राह्मणाभ्यां देहीत्यर्थः, एवञ्च सह विवक्षायामसहविवक्षायामुभयत्राऽपि तन्त्रन्यायः प्रवर्तितुमर्हति। प्रकृते तु तपरशब्दे सहविवक्षायामेव तन्त्रन्यायः प्रवृत्तः, यतो हि द्वयोरपि तपरपदार्थयोरुभयत्वेन रूपेण समकालसवर्णपदार्थे बोधकतारूपशक्तिसम्बन्धेनान्वयः कृतो वर्तते।

अत्र प्रदीपकारः—एकशेषाश्रयणमपि वैकल्पिकोपायमर्थद्वयबोधने उक्तवान्, तदंशे उद्द्योतकारः चिन्त्यत्वं ब्रूते—तत्र हेतुं ब्रवीति—समाहारद्वन्द्वविषये एकशेषाभावेन एकवचनानुपपत्त्येति। वस्तुतस्तु तपरश्च तपरश्चेति विग्रहे उद्भूतावयवभेदघटितसमुदायविवक्षायामितरेतरयोगद्वन्द्वः केन वारयितुं शक्यः, सुविभक्तिस्तु "सुपा[2] सुलुगि"त्यनेन कर्तुं सुशका, [3]अर्थवत्सूत्रे प्रत्यय इति पदे यथा। एवञ्च एकशेषाश्रयणमपि सूत्रकृन्मते समादर्तुं शक्यमेव। एकशेषविधायकसूत्राणां प्रत्याख्यानेऽपि शास्त्रीयप्रयोगसिद्ध्यर्थं तत्सत्ता आवश्यिका, बौद्धृणां कृते बोधस्त्वावृत्या एव भवतीति पक्षे न कोऽपि दोषः, नाऽपि सकृदुच्चरितन्यायविरोध इति दिक्।

**म० भा०—[4]परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च।**

(प्र०)—असिद्धत्वाच्चेति[5]। असिद्धवदत्राभादित्यनेन।

(उ०)—[6]असिद्धवदिति। चिणो लुङ्न्यायेनेति भावः।

अयमाशयः- वर्णैकदेशस्य[7] वर्णग्रहणेन ग्रहणपक्षे याता, वाता, इत्यादौ "अतो लोपः[7]" इत्यकारलोपः प्राप्नोतीति शङ्कयित्वा अत इति तपरकरणसामर्थ्यादत्र लोपो न भविष्यतीति समाहितं भाष्यकृता। तत्र पुनः सर्वलोपवारणाय तपरकरणस्य चारितार्थ्यमुक्त्वा क्रियमाणेऽपि तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवतीति शङ्कितम्, तत्र परलोपस्य स्थानिवद्भावाद् असिद्धत्वाच्च पूर्वस्य लोपो न भविष्यतीति समाहितम्।

१. पा० सू० ७।१।३९
२. पा० सू० १ २।४५
३. म० भा० पृ० ९९
४. म० भा० प्र० पृ० १९
५. म० भा० उ० पृ० ९९
६. म० भा० शि० सू० ४
७. पा० सू० ६।४।४८

अत्र समीक्षा—याता, वाता इत्यत्र यावाधात्वोराकारे वर्णैकदेशस्य[1] वर्णग्रहणेन ग्रहणपक्षे द्वावकारो प्राप्तौ भवेताम्, तत्राकारघटितस्य परस्याकारस्य लोपे कृतेऽवशिष्टः पूर्वोऽकारः तेनैव लोपशास्त्रेण कस्मान्न लुप्येत इति प्रश्ने परस्याकारस्य लोपः स्थानिवद्भावेन स्थानिभूताकारबुद्धिं प्राप्नोति, स्थानी न निवृत्त आदेशो न जातः, किं वा स्थानिनि सति यद् भवति तद् भवतु, यन्न भवति तन्न भवत्विति रीत्या "अचः [2]परस्मिन्नि"-ति सूत्रोपस्थानिवद्भावेन पूर्वाकारलोपो न भविष्यति। अथवा "असिद्धवत्राभादि[3]"त्यनेन समानाश्रये कर्तव्ये पूर्वाकारलोपरूपे आभीये पराकारस्य लोपरूपमाभीयकार्यं कृतमप्यसिद्धमभवत्, अतश्च मध्ये तद्व्यवधानेन न पूर्वाकारलोपः, इममाशयं विशदयत्युद्द्योतकारः "चिणो लुङ्" न्यायेनेति[4]। अयं भावः यथा - अपाचिततरामित्यत्र "चिणो लुक्[5]" इति सूत्रेण तप्रत्ययस्य लुकि कृते तरप्रत्ययस्य, पुनः तेनैव लुकि प्राप्नोति, तत्र वार्तिककृतोक्तम्—"चिणो लुगि[6]"ति सूत्रे तग्रहणं कर्तव्यमिति। तस्य वार्तिकस्य प्रत्याख्यानं कुर्वता भगवता भाष्यकृतोक्तम्—तग्रहणं न कर्तव्यम् [7]असिद्धवदत्राभादित्यनेन कर्तव्ये "चिणो लुक्[8]" इति शास्त्रे कृतं चिणो लुगिति शास्त्रमसिद्धं भविष्यति, अतः तलोपस्यासिद्धत्वात् तरलोपो न भविष्यतीति। अस्य न्यायस्येदं तात्पर्यं यदेकमपि शास्त्रं लक्ष्यभेदेन भिन्नं भिन्नं भवति, प्रतिलक्ष्यं लक्षणोपप्लवस्याऽपि एतदेव तात्पर्यम्, एवञ्च तविषयकं चिणो लुगिति लक्षणमन्यत्, तरविषयकं तु तदन्यत्। अत आपाचितरामित्यत्र तप्रत्यये विषयके लुकि जाते तरविषयको लुक् न भविष्यतीति भावः, चिणो [9]लुङ्न्यायस्येति दिक्।

**म० भा०—एवं [1] तर्हि योगविभागः करिष्यते, "रषाभ्यां[11] नो णः समानपदे" ततः—"व्यवाये" व्यवाये च रषाभ्यां नो णो**

---

1. म० भा० सि० सू० ४
2. पा० सू० १।१।५७
3. पा० सू० ६।४।२२
4. पा० सू० ६।४।१०४
5. पा० सू० ६।४।१०४
6. पा० सू० ६।४।१०४
7. पा० सू० ६।४।२२
8. पा० सू० ६।४।१०४
9. पा० सू० ६।४।१०४
10. म० भा० आ० २, पृ० १०३
11. पा० सू० ८।४।१

**भवतीति । ततः—"अट्कुप्वाङ्नुम्भिः[१]" इति । इदमिदानीं किमर्थम् ? नियमार्थम्-एतैरेवाक्षरसमाम्नायिकैर्व्यवाये, नान्ये" इति।**

( प्र० ) एतैरेवेति । [२]आकारादयोऽप्यकारादिभिः प्रत्यायितत्वादाक्षरसमाम्नायिकाः। भक्तिस्तु न प्रत्याय्या न च प्रत्यायिकेति नियमेन न निवर्त्यते।

( उ० ) [३]नन्वाकारादिभिर्व्यवायेऽपि न स्यादाक्षरसमाम्नायिकत्वाभावादत आह--आकारादयोऽपीति। भक्तिस्त्विति। असवर्णत्वादनुपदेशाच्चेति भावः।

अत्र समीक्षा—वर्णैकदेशस्य वर्णग्रहणपक्षे व्यपवृत्यवर्णस्यैव ग्रहणं प्रतिपात्र ऋकारे रेफात्परस्य अजभागस्य क्वचिदपि व्यपवृत्त्या दर्शनाभावादजग्रहणेन ग्रहणं न भविष्यति, एवं च धातॄणामित्यादौ अड्व्यवाये इत्यनेन णत्वं न सिध्यतीत्याक्षिप्य—एवं तर्हि योगविभागः करिष्यत इति समाहितम्। अयं भावः –' रषाभ्यां नो णः [४]समानपदे'' इत्यस्मादुत्तरं सूत्रमस्ति " [५]अट्कुप्वाङ्नुम्व्यवायेऽपि" तत्र "व्यवाय" इति प्रथमयोगः "अट्कुप्वाङ्नुम्भि" रिति द्वितीयो योग, इत्येवं विभागः कृतः भाष्यकृता। तत्र सति व्यवाये रषाभ्यां परस्य नस्य णत्वं भवतीति प्रथमस्यार्थः, द्वितीयस्तु नियमार्थ, आक्षरसमाम्नायिकवर्णकर्तृकव्यवाये चेद् रषाभ्यां परस्य नस्य णत्वं तर्ह्यडादिभिरेव व्यवाये।

नन्वयं नियमाकारः कथं ज्ञात इति जिज्ञासायामिदमुच्यते यत्तद् नियमशास्त्रं भवति, यत्केनाऽपि शास्त्रेण गतार्थं भवति। अत एवोच्यते "सिद्धे सत्यारभ्यमाणो विधिः नियमाय कल्पते" प्रकृते च पूर्वयोगेण "व्यवाये" इत्यनेन व्यवायमात्रे णत्वस्य सिद्धौ सत्यमिदमट्कुप्वाङ्नुम्भिरिति सूत्रं नियामकं भविष्यति, "व्यवाये" इति प्रथमयोगस्तु नियम्यः। तत्र च यदि नियामकशास्त्र स्वीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचं कुर्यात्तर्हि [६]स्नुषाश्वश्रुन्यायप्रसङ्गः स्यात्। तस्य न्यायस्येदं तात्पर्यं यद् भिक्षामटते ब्रह्मचारिणे

१. पा० सू० ८।४।२
२. म० भा० प्र० पृ १०३
३. म० भा० उ० पृ० १०३
४. पा० सू० ८।४।१
५ पा० सू० ८।४।२
६. १ ल० श० शे० टि० नि० १।२।४६

स्नुषया भिक्षानिषेधः कृतः, पुनश्च तया प्रत्याख्यातो ब्रह्मचारी मार्गे गच्छन्नपि श्वश्वा प्रत्यावर्तिता,गृहमागत्य श्वश्रुरपि तथैव निषेधं कृतवती, तयाऽपि प्रत्याख्यातो ब्रह्मचारी गतः। अस्मिन् व्यापारे वैयर्थ्यमतिरिच्य किमपि फलं नास्ति. तथैव यदि नियमसूत्रं स्वीयोद्देश्यतातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्ये सङ्कोचं विदध्यात्, पुनश्च स्वांशे प्रवृत्तं भवेत्, हन्त ! तर्ह्येतदीयं लक्ष्यमपि नियम्यशास्त्रेणैव सिद्धं भवेदलमेतद्व्यापारेण। एवञ्च नियामकशास्त्रं स्वीयोद्देश्यसजातीयातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्ये सङ्कोचं विदधाति. साजात्यञ्च स्वीयोद्देश्यतावच्छेदकव्यापकं यद्रूपं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यञ्च यद्रूपं तद्रूपेणैव ग्राह्यम्, यथा—[1]"कृत्तद्धितसमासाश्चे"त्यत्र समासशास्त्रीयोद्देश्यतावच्छेदकं समासत्वं तद्व्यापकं रूपं पूर्वभागपदघटितसमुदायत्वं नियम्यशास्त्रीयोद्देश्यतावच्छेदकमर्थवत्वं तद्व्याप्यं चापीदमेव पूर्वभागपदघटितसमुदायत्वम्, अतः तद्-रूपावच्छिन्नातिरिक्तत्वेनार्थवत्वावच्छिन्ने सङ्कोचः क्रियते। तथैव प्रकृते नियामकशास्त्रं[2]"मट्कुप्वाङ्नुम्भिरिति", तदीयोद्देश्यतावच्छेदकमडादिकर्तृकव्यवायत्वमिति, तद्व्यापकं रूपमाक्षरसमाम्नायिकवर्णकर्तृकव्यवायत्वम्. नियम्यशास्त्रं व्यवाये इति, तदीयोद्देश्यतावच्छेदकं यत् किञ्चित्कर्तृकव्यवायत्वमिति, तद्व्याप्यञ्च रूपमाक्षरसमाम्नायिकवर्णकर्तृकव्यवायत्वमिति, तद्रूपावच्छिन्नातिरिक्तत्वेन यत्किञ्चित्कर्तृकव्यवायत्वावच्छिन्ने सङ्कोचः। अत आक्षरसमाम्नायिकवर्णकर्तृकव्यवाये रषाभ्यां परस्य नस्य णत्वञ्चेत्तर्हि अडादिकर्तृकव्यवाय एवेति नियामकसूत्रस्यार्थः फलति. एवञ्च धातृणामित्यत्र पूर्वयोगेन "व्यवाये" इत्यनेन णत्वं सुतरां सिध्यति रेफात्परस्याज्भागस्य आक्षरसमाम्नायिकत्वाभावेन नियमानाक्रान्तत्वात्।

अत्र दीर्घाकारादयोऽपि यद्यप्याक्षरसमाम्नाये न पठिताः तथाऽप्याकारादिभिः ते गृह्यन्ते, ग्राहकशास्त्रादिबलेन ते गृह्यन्ते। अज्भागस्तु न केनाऽपि गृहीतुं शक्यः। नियमशास्त्रस्य फलमितरव्यावृत्तरूपं भवति, यथा—समासशास्त्रस्य नियामकत्वेन पूर्वभागपदघटितसमासस्य प्रातिपदिकसंज्ञायाः व्यावृत्तिः सिध्यति, तथा प्रकृते नियमशास्त्रस्येतरव्यावृत्तिरूपं "आदर्शने"त्यादौ णत्वव्यावृत्तिरूपम्। किन्तु निषेधमुखेन यदा नियमशास्त्रस्य प्रवृत्तिर्भवति तदैवेदं फलं साधयितुं शक्यम्, तत्पक्षे हि

---

१. पा० सू० १।२।४६ २. पा० सू० ८।४।२

समासातिरिक्तस्य पूर्वभागपदघटितसमुदायस्य प्रातिपदिकसंज्ञा न भवति इति समासशास्त्रस्यार्थः कर्तव्यो भवति। तत्र समासपदस्य समासातिरिक्ते, भवतीत्यस्य च न भवतीत्यत्र लक्षणा अप्रसिद्धाशक्तिर्वा स्वीकर्तव्या भविष्यति, तथैव प्रकृतेऽडादिव्यतिरिक्ताक्षरसमाम्नायिकवर्णकर्तृकव्यवाये रषाभ्यां नस्य णत्वं न भवतीत्यर्थः कर्त्तव्यः स्यात्, तत्र च प्राप्तावाद्यः स्वार्थहानिः परार्थकल्पना चेति दोषत्रयं सोढव्यं भविष्यतीति गौरवमतः विधिमुखेन प्रवृत्तिपक्ष एव श्रेयान्। किन्तु तत्र पक्षेऽड्व्यवायसत्वाद् आदर्शेनेत्यत्र दोषः तदवस्थ एव, अतः तद्वारणोपाय इत्थं वाच्यः यद्विधिपक्ष उद्देश्यतावच्छेदकपर्याप्तिः धर्मे न विवक्षणीया, अतः नियामक-शास्त्रीयोद्देश्यतावच्छेदकमडादिकर्तृकत्वमेव ग्राह्यम्, तद्व्यापकञ्च रूपमा-क्षरसमाम्नायिकवर्णकर्तृकत्वम्. नियम्यशास्त्रीयोद्देश्यतावच्छेदकमपि यत्कि-ञ्चित् कर्तृकत्वमेव ग्राह्यम्, तद्व्याप्यं चाक्षरसमाम्नायिकवर्णकर्तृकत्वम्. एवञ्चाक्षरसमाम्नायिकवर्णकर्तृकत्वावच्छिन्नातिरिक्तत्वेन यत्किञ्चित्-कर्तृकत्वावच्छिन्ने सङ्कोचो विधेयः, एवञ्चाक्षरसमाम्नायिकवर्णकर्तृक-त्वावच्छिन्नव्यवाये चेण्णत्वं तर्ह्यडादिकर्तृकत्वावच्छिन्न एव व्यवाये। इदमेवोक्तं भगवता भाष्यकृता—एतैरे[1]वाक्षरसमाम्नायिकेत्यादिनेति दिक्।

इति महाभाष्य-समीक्षणे प्रथमाध्यायस्य तृतीयपादः।

---

१. म० भा० आ० २, पृ० १०३

# अथ चतुर्थः पादः

**म० भा०–[1]द्विर्वचनेऽपि। नेमौ रहौ कार्यिणौ द्विर्वचनस्य। किं तर्हि? निमित्तमिमौ रहौ द्विर्वचनस्य। तद्यथा--ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्, इति। नेदानीं तौ भुञ्जाते।**

अयमाशयः—"अचो [2]रहाभ्यां द्वे" इति सूत्रे रेफस्य यर्प्रत्याहारान्तर्गततया द्विर्वचनस्य स्थानिता प्राप्ता, रहाभ्यामिति पञ्चम्यन्तपदेन निमित्तताऽपि प्राप्ता, तत्र निमित्तता साक्षाद्रेफमुच्चार्य विहितेति प्रत्यक्षप्रमाणप्राप्तो विशेषविधिः, स्थानिता त्वनुमानप्रमाणेन प्राप्तेति सामान्यविधिः, अनुमानाकारस्तु रेफः स्थानितावान् यर्प्रत्याहारबोध्यत्वात्, यन्नैवं तन्नैवमिति। अनेन व्यतिरेकव्याप्तिगर्भानुमानेन रेफस्य स्थानित्वम् (कार्यित्वम्) अनुमीयते, एवञ्च विशेषविधिप्राप्तेन निमित्तत्वेन सामान्यविधिप्राप्तं स्थानित्वं बाध्यते, यतश्च सामान्यविशेषविध्योरेकवाक्यतायां लोकव्यवहारादेव शब्दार्थसम्बन्धपरिज्ञानवद् विशेषविधिः सामान्यविधेर्बाधको भवति।

नन्वेवं "सुध्युपास्यः" इत्यादावपि "इकः" इति विशेषविहितेन स्थानिवत्वेन अचीति सामान्यविहितं निमत्तत्वं बाध्येदिति चेत्तन्न साधुतरम्, [3]तस्मादित्युत्तरस्येति निर्देशाज्ज्ञापकात्। अन्यथाऽत्र यणादेशः कथं स्यात्? एवञ्च रेफस्य विषये इयं विचारणा समीचीना किन्तु हकारो न यर्प्रत्याहारान्तर्गतः, अपितु निमित्तमात्रमेव, तर्हि कथं रेफस्य साहित्यमभिहितं भगवता भाष्यकृतेति जिज्ञासायामुक्तं प्रदीपकृता–हकारवद्रेफोऽपि न कार्यीत्यर्थः, एवं च हकारस्य कार्यत्वाभावः दृष्टान्तकोटौ प्रविष्टो मन्तव्यः। क्वचिल्लक्ष्यानुरोधादयं बाध्यबाधकभावो न विवक्ष्यते, यथा—चिचिषतीत्यत्र दीर्घत्वद्विर्वचनयोः न बाध्यबाधकभावः, अत्रैव भाष्यकृता दृष्टान्त उच्यते[4]–ब्राह्मणा भोज्यन्ताम्, माठरकौण्डिन्यौ परिवेविषाताम्, अत्र ब्राह्मणान्

---

१. म० भा० शि० सू० ५
२. पा० सू० ८।४।४६
३. पा० सू० १।१।६७
४. म० भा० पृ०आ० १०८

उद्दिश्य विहितं भोजनं सामान्यविधिविषयः, माठरकौण्डिन्यौ उद्दिश्य विहितं परिवेषणं विशेषविधिविषयः, तत्र विशेषविधिविषयेण परिवेषणेन सामान्यविधिविषयः भोजनं बाध्यत इति सूचयति भगवान् भाष्यकारः—नेदानीं तौ भुञ्जात इति।

अत्र समीक्षा—एतद्विषये उद्द्योतकारः—केचित्त्वित्यादिना मतान्तरं दर्शयति - तथा हि केचित्तु [१]तक्रकौण्डिन्यन्यायोऽपि सामान्यविषयानाक्रान्तविषयाभावरूपानवकाशत्वमूलक एव। अस्ति च प्रकृते तत्। नह्येतद्बोध्यनिमित्तत्वं सामान्यपर्त्वप्रयुक्तकार्यित्वानाक्रान्ते क्वचिदप्यस्ति सर्वत्राचः परत्वादनचीत्यस्य प्राप्तेरतोऽर्युको लक्ष्यानुरोधात्सामान्येन कार्यित्वबाधः। न चैवमिको [२]यणित्यादौ, मत्वर्थ इत्यादौ सामान्यप्राप्तनिमित्तत्वाभावेन कार्यित्वस्य चारितार्थ्यादिति भाष्याभिप्रायमाहुः।

अयमभिप्रायः—अत्रत्य भाष्योक्त[३]माठरपरिवेषणन्यायवत् तक्रकौण्डिन्य[४]-न्यायोऽपि सामान्यविषयानाक्रान्तविषयाभावरूपं यदनवकाशत्वं तन्मूलक एव, प्रकृते त्वस्त्येव तादृशमनवकाशत्वम्, यतो हि रहाभ्यामिति पदबोध्यं रेफनिष्ठं निमित्तत्वं सामान्यपर्त्वप्रयोज्यस्थानित्वाऽनाक्रान्तं क्वचिदपि नास्ति, सर्वत्रैवाचः परत्वादनचीत्यस्य प्राप्तिर्दुर्वारत्वात्, अर्हेण गर्हेणेत्यादि लक्ष्येषु रेफे "[५]अचोरहाभ्यामि"ति शास्त्रीयं निमित्तत्वम्, तत्र सर्वत्र [६]"अनचि चे"ति शास्त्रीयं स्थानित्वम्। अतः सामान्यविधिविषये स्थानित्वानाक्रान्तम्, विशेषविधिविषये निमित्तत्वं क्वचिदपि स्थातुं नार्हति, अतःलक्ष्यानुरोधादेव सामान्यरूपेण कार्यत्वबाधः स्वीकार्यः। 'इको यणची"[७]-त्यादौ तु नाऽयं बाध्यबाधकभावः, मत्वर्थ इत्यादौ सामान्यप्राप्तं निमित्तत्वमिमं बोध्यवर्णे नास्तीति कृत्वा कार्यित्वं तत्र चारितार्थ्यमिति। अनेनोद्द्योतग्रन्थेनेदमायाति यत् [८]तक्रकौण्डिन्यन्यायः माठरपरिवेषणन्यायश्च[९] समानविषयक एव द्वावपि विधेयविषयकोऽनवकाशविषयकौ च। यथा- "सर्वेभ्यो ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय" इत्यत्र दधिदानं ब्राह्मणानुद्दिश्य विहितं दधिदानं सामान्यविधिविषयः (व्यापकविधिविषयः)

१. म० भा० पृ० १०८
२. पा० सू० ६।१।७७
३. म० भा० पृ० १०८
४. म० भा० पृ० १०८
५. पा० सू० ८।४।४६
६. पा० सू० ८।४।४७
७. पा० सू० ६।१।७७
८. म० भा० पृ० १०८
९ म० भा० पृ० १०८

कौण्डिन्यमुद्दिश्य तक्रदानं तु विशेषविधिविषयः (व्याप्यविधिविषयः), तत्र तक्रदाने न दधिदानं बाध्यते, तक्रदानं तु विधेयभूतं सर्वथा दधिदानाक्रान्तत्वादनवकाशभूतञ्च । तथैव प्रकृते रेफीयनिमित्तत्वं सर्वथा द्वित्वस्थानित्वाक्रान्ततया अनवकाशभूतम्, अपूर्वबोध्यत्वेन विधेयभूतञ्च, यद्यपि रेफः प्रत्यक्षप्रमाणेन श्रवणेन्द्रियेण साक्षात्क्रियते, किन्तु तन्निष्ठो निमित्तत्वरूपो धर्मः "अचो[1] रहाभ्यामि"ति शास्त्रीयेण रहाभ्यामिति पञ्चम्यन्तपदेनैव बोधित इति कृत्वा अपूर्वबोधविषयतया विधेयकोटौ प्रविष्टः, इतः शास्त्रात्पूर्वं तु तदीयं निमित्तत्वं **न** केनाऽपि ज्ञातम् । इदमेव लिखितं शब्दरत्नग्रन्थे – [2]न हि निमित्तत्वमपि मानान्तरसिद्धमिति । तत्र सत्यपि सम्भवे तक्रन्यायः प्रवर्तते, माठरपरिवेषणन्यायस्त्वसम्भवे एव प्रवर्तत इति विशेषसत्त्वे उद्द्योतग्रन्थः चिन्त्य एव प्रतिभाति, अथ च तक्रन्यायेन तक्रदानेन दधिदानं बाध्यत इति विध्यांशे सङ्कोचः क्रियते, माठरपरिवेषणन्यायेन तु माठरकौण्डिन्यातिरिक्तत्वेन भोजनोद्देश्यभूतब्राह्मणपदार्थे सङ्कोचो विधीयते । अत उद्देश्यांशे सङ्कोचः, विधेयांशे तु यौगपद्येन द्वयोरेव भोजनपरिवेषणयोः सम्भव एव नास्ति । यद्यपि बाध्यबाधकवाक्ययोः स्वजन्यबोधे बाधकवाक्यीयोद्देश्यतावच्छेदकव्यापकत्वं बाध्यवाक्यीयोद्देश्यतावच्छेदके समानमेवाऽस्ति द्वयोर्न्याययोः, तथाऽपि पूर्वोक्तविशेषणद्वयोः महान् भेदः अस्त्येवान्यथा भगवान् भाष्यकारः भिन्नाभ्यां स्वरूपाभ्यां द्वयोर्निर्देशः कथं कृतः लाघवादेकेनैव स्वरूपेण तत्र तत्र वक्तव्यं स्यादिति दिक् ।

**म० भा०––यदि[3] तर्हीमे वर्णा अर्थवन्तः । अर्थवत्कृतानि प्राप्नुवन्ति । कानि ? "अर्थवत्प्रातिपदिकम्" इति प्रातिपदिकसंज्ञा, "प्रातिपदिकाद्" इति स्वाद्युत्पत्तिः, "सुबन्तं पदम्" इति पदसंज्ञा । तत्र को दोषः ? "पदस्य" इति नलोपादीनि प्राप्नुवन्ति––धनं वनमिति ।**

(प्र०)—[4]नलोपादीनीति । श्रवणं तु विभक्तेर्न भवति, यतो यदैवावयवानां प्रातिपदिकसंज्ञा प्रवर्तते तदैव समुदायस्यापि । तत्र तदन्तर्गतत्वा-

---

१. पा० सू० ८।४।४६ २. श० र० ८।४।४६
३. म० भा० आ० २ पृ० १।१४ ४. भा० पृ० पृ० १।१४

द्विभवतेर्लुका भवितव्यम् । समासग्रहणेन च तुल्यजातीयस्य सुबन्तावयवसमुदायस्य प्रातिपदिकसंज्ञा निवार्यते, न त्वर्थवत्समुदायमात्रस्य । येनैव चार्थेन समुदायस्यार्थवत्वं तेनैव तदवयवानामपीति विभक्त्युत्पत्तिश्चोद्यते ।

(उ०) [1]तदन्तर्गतत्वादिति । इदं चिन्त्यम् । इत्थं[2] भूतलक्षण इति सूत्रस्थस्वरग्रन्थिविरोधात् । तत्र हि—संज्ञाप्रवृत्त्युत्तरकालजातविभक्तेस्तन्मध्यपतितत्वेऽपि तदवयवत्वं नेत्युक्तम् । तस्मादन्तरङ्गत्वादवयवप्रातिपदिकत्वे तन्निमित्तसुपि तदनन्तरं कृदन्तत्वनिमित्तकप्रातिपदिकत्वे सुब्लोप इति वक्तुं युक्तम् । ध्वनतीत्यादौ तु न तदापत्तिः । धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तदप्राप्तेः । धात्वादेस्तदवयवत्वं तु [3]व्यपिदेशिवद्भावेन बोध्यम् । वस्तुत इत्थं[4]भूतेति सूत्रस्थकैयटोक्तिरयुक्तेति तत्रैव निरूपयिष्याम इति न दोषः । धकारे जश्त्वमादिपदार्थः । सुबन्तावयवसमुदायस्येति । सुबन्तावयवेति बहुव्रीहिस्ततः कर्मधारयः । इदमुपलक्षणम्—भेदे सति यदर्थयोः संसर्गस्तद्द्वारकार्थवत्समुदायस्य, तेन तिङन्तसमुदायस्य व्यावृत्तिः । प्रकृते न भेद इत्याह—येनैव चेति ।

अत्रायमाशयः वर्णानामर्थवत्वे प्रातिपदिकसंज्ञायां सत्यां ततः स्वादिविभक्त्युत्पत्तौ [5]सुप्तिङन्तपदमिति पदसंज्ञायां धनं वनमित्यादौ नलोपादीनि प्राप्येरन् ।

अत्र प्रदीपकारः—ननु विभक्तीनां श्रवणमपि स्यादिति चेन्न, यस्मिन् काले नकारादीनामवयवानां प्रातिपदिकसंज्ञा प्राप्नोति तस्मिन्नेव काले समुदायस्याऽपि[6] सा प्राप्नोति । तत्र समुदायरूपप्रातिपदिकान्तर्गतत्वात् "सुपो धातुप्रातिपदिकयो"रिति लुग् भविष्यति । ननु "कृत्तद्धिते[7]" ति सूत्रे समासग्रहणकाद् नियमेन सुबन्ताऽवयवकसमुदायस्य प्रातिपदिकत्वमिति चेदुच्यते—अत्र प्रातिपदिकसंज्ञातः पूर्वं सुबन्ता अवयवाः न सन्तीति नाऽपि तदवयवकः समुदायः, अतः नियमेन तस्याः वारणं न संभवति । अयं तु यद्यप्यर्थवत्समुदायः येनैवार्थेन समुदायस्यार्थवत्वं तेनैवार्थेन तदवयवानामपीति हेतोरवयवेभ्यः विभक्त्युत्पत्तिराक्षिप्ताः । यद्यपि [8]"एकाज्द्विर्वचन"न्यायेन ( वृक्षप्रचलनन्यायेन[9] ) समुदायस्यैव प्रातिपदिकसंज्ञा भवितव्यं न

---

१. भा उ० पु १।१४
२. पा० सू० २।३।२
३. भा० प्र० पृ० ११४
४. पा० सू० २।३।२
५. पा० सू० १।४।१४
६. पा० सू० २।४।७१
७. पा० सू० १।२।४६
८. म० भा० आ० स० ३।१।१।१
९. म० भा० आ० सू० ६।१।१।१

त्ववयवानामिति जिज्ञासा उदेति प्रदीपमते। तथाऽपि यत्र समुदायकार्येणावयवानामप्युपकारः तत्रैव तस्य न्यायस्य प्रवृत्तिरभ्युपेयते। प्रकृते तु समुदायस्य प्रातिपदिकसंज्ञया अवयवेषु विभक्त्यादिरूपोपकाराभावेन तन्न्यायः प्रवर्तितुं नार्हति। नन्वेवमपि संख्याकर्मादेरभावाद् अवयवेभ्यो विभक्त्युत्पत्तिर्न सम्भवतीति चेत् तन्न, अर्थवत्त्वे सति तत्र संख्यादेरपि संभवात्।

अत्रोद्द्योतकारः—तदन्तर्गतत्वादिति हेतुना विभक्तेर्लुकं प्रतिपादयन्तं प्रदीपग्रन्थः चिन्त्यत्वेनाभ्युपैति, तत्र च "इत्थं भूत[1]लक्षणे" इति सूत्रस्थेन प्रदीपग्रन्थेन विरोधः स्यादिति हेतुं प्रतिपादयति, तथा हि प्रातिपदिकसंज्ञायाः प्रवृत्तौ सत्यां जायमानायाः स्वादिविभक्तेः तन्मध्यपतितत्त्वेऽपि तदवयवत्वं न स्यादिति तत्र प्रदीपग्रन्थः। तस्माद् अन्तरङ्गत्वादवयवानां प्रातिपदिकत्वे तन्निमित्तकविभक्त्युत्पत्तिः तदनु कृदन्तत्वलक्षणायां प्रातिपदिकसंज्ञायां सुब्लुगिति वक्तव्यं स्यात्, ध्वनतीत्यादौ तु न नलोपापत्तिः, अर्थवत्सूत्रे[2] धातुप्रत्ययान्तपदयोः स्वस्वावयवो स्वस्वावयवपरत्वस्य व्याख्यातत्वेन तत्र प्रातिपदिकस्याप्राप्तेः।

ननु धातोः स्वावयवत्वाभावात्कथं तद्व्यावृत्तिरिति चेदुच्यते-व्यपदेशिवद्भावेन स्वस्याऽपि स्वावयवत्वं भवत्येवेति, अत एव ध्रुक्-ध्रुगित्यादौ "एकाचो[3] वशो भष्" इति भष्भावसिद्धिः। वस्तुत [4]इत्थम्भूतेति सूत्रस्थप्रदीपोक्तिः नोचितेति तद्विरोधरूपो दोषो नास्ति। नलोपादिशब्दे आदिपदेन जश्त्वादिकार्यं ग्राह्यम्, प्रदीपग्रन्थे सुबन्ताऽवयवसमुदायस्येत्यत्र सुबन्ताऽवयवेत्यंशे बहुव्रीहिः ततः कर्मधारयः। वस्तुतस्तु भेदे सति यदर्थयोः संसर्गः तद्द्वारकार्थवत्समुदायस्योपलक्षणतया इदं योजनीयम्, अतः तिङन्तसमुदायस्यापि व्यावृत्तिः। प्रकृते तु न भेद इति दर्शयति प्रदीपकारः—येनैवेति।

अत्र समीक्षा—वस्तुतस्त्वत्र 'इत्थं[5] भूते"ति सूत्रस्थप्रदीपग्रन्थो न विरोधः, तत्र तु समासे सति तन्निमित्तकप्रातिपदिकसंज्ञायां कृतायां सत्यां पश्चादुत्पन्नायाः सुब्विभक्तेः समासरूपप्रातिपदिकानवयवत्वमुक्तम्, [6]तन्मध्यपतितन्यायस्तु तत्समुदायनिष्ठोद्देश्यतानिरूपितविधेयताऽऽश्रयस्यैव तद्ग्रहणेन ग्रहणं बोधयति, अत एव जराशब्दे न जरसादेशः, नाऽपि ग्रामं प्रापित इत्यादौ

---

१. पा० सू० २।३।२१ २. पा० सू० १।२।४५
३. पा० सू० ८।२।३७ ४. पा० सू० २।३।२१
५. पा० सू० २।३।२१ ६. प० शे० प० ९०

प्राप्तापन्ने समासशङ्का। तद्घटकस्योद्देश्यत्वेऽपि समुदायस्यानुद्देश्यत्वात्। अत्र त्वेकस्मिन्नेव कालेऽवयवानां समुदायस्य च प्रातिपदिकसंज्ञा प्रवृत्ता, अर्थवत्त्वमप्यवयवेषु समुदाये चैकमेव न तु भिन्नं भिन्नम्, अतः तादृशार्थवत्त्व-निबन्धनमुद्देश्यत्वमवयवे इव समुदायेऽपीति कृत्वा भविष्यतितन्मध्यन्याय-प्रवृत्तिः, अतः प्रदीपग्रन्थः नोत्तरग्रन्थविरुद्धः—इति चिन्त्यत्वकथनमेव चिन्त्यं प्रतिभातीति दिक्।

**म० भा०—[1]वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनान्मन्यामहे—अनर्थका वर्णा इति। वर्णव्यत्यये—कृतेस्तर्कः, कसेः सिकताः, हिंसेः सिंहः। वर्णव्यत्ययो नार्थव्यत्ययः। अपायो लोपः—हतः, घ्नन्ति, घ्नन्तु, अघ्नन्। वर्णापायो नार्थापायः। उपजन आगमः—लविता, लवितुम्। वर्णोपजनो नार्थोपजनः। विकार आदेशः—घातयति घातकः। वर्णविकारो नार्थविकारः। तथैव वर्णव्यत्ययापायोपजनविकारा भवन्ति तद्वदर्थव्यत्ययापायोपजनविकारैर्भवितव्यम्। न चेह तद्वद्। अतो मन्यामहे—अनर्थका वर्णा इति।**

(प्र०)—[2]वर्णव्यत्ययेति। यदुक्तम्—"वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः" इति, तस्यानैकान्तिकत्वमुद्भाव्यते।

(उ०)—[3] ननु वर्णव्यत्ययादिष्वर्थदर्शनं नार्थवत्त्वाभावसाधकमत आह—यदुक्तमिति। एवं चार्थवत्त्वसाधकहेतौ व्यभिचारप्रदर्शनद्वारानर्थकतासाधकत्वमस्य। भाष्ये अर्थदर्शनादित्यस्य वर्णव्यत्ययाद्यभावे योऽर्थस्तस्यैव दर्शनादित्यर्थः। नार्थव्यत्यय इत्यस्य नार्थान्तरावगतिः, किं तु तस्यैवावगतिरित्यर्थः।

अयमाशयः—भगवान् भाष्यकारः धात्वादिव्यतिरिक्तानां वर्णानामनर्थक्यं साधयति—वर्णव्यत्ययेत्यादिना। वर्णव्यत्यये सत्यपि तदभावे योऽर्थः तस्यैवार्थस्येदानीमपि दर्शनम्, एवमेव वर्णस्यापाये (लोपे सति) योऽर्थ इदानीं प्रतीयते स एव लोपाभावेऽपि प्रतीयमान आसीत्। तथा वर्णोपजने वर्णविकारे च योऽर्थः प्रतीयमानोऽस्ति स एवार्थः वर्णोपजनविकारयोरभावेऽपि प्रतीयमान आसीत्। आद्युदाहरणं कृतेस्तर्कः, द्वितीयो-

---

१. भा० वा० ७७   २. भा० प्र० पृ० ११५

३. भा० उ० पृ० ११५

दाहरणं हतः, घ्नन्ति, तृतीयोदाहरणं लविता, लवितुम्, चतुर्थोदाहरणं घातयति, घातकः, एतेषूदाहरणेषु वर्णव्यत्ययापायोपजनविकाराः सन्ति किन्त्वर्थव्यत्ययापायोपजनविकारः नैव सन्ति, अतो ज्ञायते यद् धात्वाद्यतिरिक्ता वर्णा अनर्थका इति। अत्र वर्णव्यत्ययाद्यवस्थायां यदर्थदर्शनं तत्तु वर्णानां नार्थवत्त्वाभावसाधकम्, किन्त्वर्थवत्त्वसाधकहेतौ (वर्णव्यत्यये चार्थान्तरगमनरूपे) अनैकान्तिकत्वं (सव्यभिचारत्वम्) प्रदर्शितम्, तद्द्वारा वर्णानामनर्थकत्वसाधकत्वमस्य हेतोः दर्शितं भगवता। अयं भावः यदि वर्णा अर्थवन्तो न स्युः तर्हि वर्णव्यत्ययेऽर्थान्तरस्य प्रतीतिर्न स्यात्। यतश्च भवत्यतो वर्णा अर्थवन्तः। एवमेव वर्णस्य अनुपलब्धावतदर्थगतिरूपो हेतुः वर्णानामर्थवत्तायामुक्तः, इदानीमनेन वर्णव्यत्यादिष्वर्थदर्शनेन हेतुना पूर्वोक्तहेतुद्वये व्यभिचारः प्रदर्शितः प्रदीपकृता। केवलः संघातार्थरूप एको हेतुरवशिष्टः, तत्राग्रे भाष्यकृद् वक्ष्यते—[1]समानमीहमानानां चाधीयानानां केचिदर्थे युज्यन्तेऽपरे न, एवमेव कश्चिद्वर्ण अर्थवानिति कृत्वा न हि सर्वेऽर्थवन्तः, किं वा सर्वे, कश्चिद्वा अनर्थक इति कृत्वा न सर्वे वा अनर्थकाः, तत्र धातुप्रातिपदिकप्रत्ययनिपाताः एकवर्णरूपाः अर्थवन्तः अतोऽन्येऽनर्थकाः, तत्रान्तिमो हेतुरपहृतः तस्य परिहार [2]अर्थवत्सूत्रे स्वयं भाष्यकृता उक्तः—

दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः, सुराङ्गवद् रथाङ्गवच्च, यथा—रथाङ्गानां प्रत्येकं गमनासमर्थत्वेऽपि समुदायस्य रथस्य गमनसाधकता, यथा च सुरायाः अवयवानां प्रत्येकमुन्मादाजनकत्वेऽपि समुदायभूतायाः सुरायाः उन्मादजनकता, तथैव समुदितशब्देष्ववयवभूतवर्णानामनर्थकत्वेऽपि समुदितशब्दस्यार्थवत्ता, एवञ्च सङ्घातार्थवत्त्वस्य व्यभिचारित्वादिष्टसाधनत्वं नास्तीति भावः।

**म० भा०--[3] एषा ह्याचार्यस्य शैली लक्ष्यते--यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति--अचोऽक्षु हलो हल्षु।**

(प्र०) – [4]शैलीति। शीले भवा शैली समवधानपूर्विका प्रवृत्तिः। यथा लोके ब्राह्मणैः सह ब्राह्मणा भोज्यते क्षत्रियैः सह क्षत्रिया इति एवमिहाप्याचार्येण वर्णा निर्दिष्टा इत्यर्थः।

---

१. म भा० पृ० ११५ २. पा० सू० १।२।४५

३. म० भा० आ० २, पृ० ११७ ४. भा० प्र० पृ० ११७

(उ०)— [1]अप्रधानत्वमप्याचार्याचारेण साधयति—( भाष्ये ) आचार्यस्येति। आचार्यशब्देनानादिः शब्दपुरुषः। एवं चान्यत्र संज्ञिविशेषसमर्पणायोपात्तत्वादिता-मसञ्ज्ञित्वमेवेति भावः।

अत्र समीक्षा— भाष्येऽऽचार्यशब्देनादिः शब्दपुरुषः भगवान् महेश्वरो ग्राह्यः, तदीया ह्येषा शैल्यत्रानुभूयते, शीले स्वभावे भवा शैली, समवधान-पूर्विकाप्रवृत्तिः, शीलशब्दादण् प्रत्ययः स्त्रीत्वविवक्षायां ङीपि। यथा लोके— ब्राह्मणेन सह ब्राह्मणाः भोज्यन्ते तथा शास्त्रेऽपि भगवता शिवेनाज्भि सहाचा-मेवोपदेशः कृतः न तु हलाम्, एवञ्च हल्षु सञ्ज्ञिविशेषसमर्पणाय ( सञ्ज्ञि-विशेषत्वेन बोधनाय ) अगृहीता अपि णकारादयो वर्णाः अच्प्रत्याहारे न सञ्ज्ञित्वेन गृह्यन्तेऽपि त्वित्सञ्ज्ञकाः सन्तोऽनुभूयन्ते। एतद्विषये भाष्यकृता हेतुत्रयं निर्दिष्टम् —[2]आचारादिति प्रथमो हेतुः, अप्रधानत्वादिति द्वितीयो हेतुः लोपश्च बलवत्तर इति तृतीयो हेतुः। अत्र पक्षसाध्ययोरपि निर्देश आवश्यकः प्रतिभातीति जिज्ञासायां भगवता एव पूर्वमुक्तमनुबन्धानामज्ग्रहणेन ग्रहणं कस्मान्न भवतीत्यनेन। एवं चानुबन्धाः प्रत्याहारजन्यबोध्यविषयत्वा-भावन्त आचार्याणां तादृशव्यवहारात्, हेतुतानियामकसम्बन्धः विषयतारूपः, साध्यतावच्छेदकश्च सह स्वरूपसम्बन्धविशेषरूपः, स चाचार्यव्यवहारः "इको यणची[3]"त्यादौ ककारे परे यण्करणाभावरूपः, यद्यनुबन्धाः प्रत्याहारे गृह्येरन् तर्हि ककारस्याच्त्वेन ततः पूर्वस्येकारस्य यण् स्यात्।

न च कुत आचार्यणातो ज्ञायते न गृह्येरन् इति, एवमनुमानानुग्राहक-तर्केण साध्यहेत्वोर्व्याप्यनिश्चयो विधेयः, अत्राचार्यपदेन भगवान् पाणिनिः गृह्यते, आचार्याणामिति बहुवचनान्तनिर्देश आदरार्थः। द्वितीयो हेतु-रप्रधानत्वरूपः, तत्र प्रधानत्वं प्रत्याहारे गृहणार्थत्वरूपम्, तच्च सजातीया-नामेव, अक्ष्वचामेव हल्षु हलामेव, तदभावरूपो हेतुः अनुबन्धरूपे पक्षे स्वरूपसम्बन्धेन बोध्यः। तृतीयो हेतुः लोकश्च बलवत्तर इति, अत्र च शब्दो हेतुता द्योतकः, यतः लोको बलवत्तर अतोऽनुबन्धाः न प्रत्याहारग्राह्याः, तत्रानुमानाकारश्च अनुबन्धाः प्रत्याहारजन्यबोधविषयत्वाभावन्त, लोप-शास्त्रस्य ( तस्य[4] लोप इति शास्त्रस्य ) बलवत्तरत्वात्, अन्तरङ्गतया "आदिरन्त्येन[5] सहेता" इत्येतच्छास्त्रापेक्षया बलीयस्त्वात् ( तदीयोद्देश्यता-

१. भा० उ० पृ० ११७
२. भा० वा० ७९
३. पा० सू० ६।१।७७
४. पा० सू० १।३।९
५. पा० सू० १।१।७१

वच्छेदकधर्माक्रान्तत्वात् ) यन्नेवं तन्नेवं यथा – अच्प्रत्याहारबोध्यो-ऽकारादिः ।

अत्रोद्योतकारः— इत्थं व्याचष्टे— एवं सति रप्रत्याहारस्वीकारे [1]'लण्-सूत्रेऽकारः हल्प्रत्याहारे गृहीतः स्यात्ततश्च मामांस्त्रायस्वेत्यादावनुस्वारः स्यात्, सोऽस्तीत्यादौ "[2]एतत्तदो" रिति सुलोपश्च स्यात्, अतः रप्रत्याहारो नैवाभ्युपेयः, "[3]उरण् रपरः" इत्यत्र "उरण् लपरः" इत्येव पठनीयम्, अत एव "[4]अतोलरान्तस्य" इति पठितं भगवता सूत्रकृता । यदि तत्रत्य-लकारोच्चरणेन "लण्[5]" सूत्रस्थस्याकारस्यानुनासिकत्वाभावो ज्ञाप्यते, एवञ्च तस्यानुबन्धत्वमेव न, किन्तुच्चरणार्थत्वमेव, अत एव "[6]अइउण्" इत्यादि सूत्रचतुष्टयव्याख्यानन्तरमेव भाष्यकृता अयं विचारः प्रस्तावितः, श्लोकवार्तिके चाज्ग्रहणेष्वित्येवोक्तम् ।

**अत्र समीक्षा** – वस्तुतस्तु लण्सूत्रेऽकार अनुनासिकत्वेन प्रतिज्ञेय एव, "[7]अतोलरान्तस्ये"ति सूत्रे लकारोच्चारणमदृष्टमात्रफलकमेव, रप्रत्याहा-रेणैव "[8]उरण् रपरः" इत्यत्र निर्वाहो विधेयः लाघवात् । रषाभ्यां रदा-भ्यामित्यादौ षकारदकारयोः वर्णयोः साहचर्येण रेफो वर्णरूप एव ग्राह्यः न तु प्रत्याहाररूपः, एवं च प्रकल्प्यमानं पश्य इत्यत्र न णत्वापत्तिः, नाऽपि प्रफुल्लत इत्यत्र निष्ठातकारस्य न नत्वम्, एवं च प्रदीपकृन्मतमेव एतद्विषये समीचीनं प्रतिभाति, "मामांस्त्रायस्व" इत्यत्र तु "[9]मोऽनुस्वारः" इत्यनेना-नुस्वारापत्तिः न दातव्यः, [10]हलङ्याादिसूत्रेऽऽग्रहणसामर्थ्यात् हल्पद-बोध्यत्वमात्वावच्छिन्नेषु नास्त्येवेति ज्ञापनात्, अनेनैव सोऽस्तीत्यादौ सुलो-पापत्तिरूपो दोषोऽपि परिहृतो भवतीति दिक् ।

**म० भा०— [11]तदेतदत्यन्तं संदिग्धं वर्तते—आचार्याणां विभाषानुवर्त्तते नवेति ।**

अयमाशयः "संय्यन्ता" इत्यत्र "द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यमि"ति

१. शि० सू० ६
२. पा० सू० ६।१।१३२
३. पा० सू० १।१।५१
४. पा० सू० ६।२।२
५. शि० सू० ६
६. शि० सू० १
७. पा० सू० ६।२।२
८. पा० सू० १।१।५१
९. पा० सू० ८।३।२३
१०. पा० सू० ६।१।६८
११. म० भा० पृ० १२०

वार्तिकेन परसवर्णे कृते तस्य यर्ग्रहणेन ग्रहणात् द्विर्वचनं भवति, न च मा भवतु द्विर्वचनं का हानिरिति शङ्कायामुक्तं भगवता रूपभेदो भविष्यति सति द्विर्वचने त्रियकारकम्, असति द्विर्वचने तु द्वियकारकम्, तत्र पुनः शङ्कितम् - सत्यपि द्विर्वचने द्वियकारकमेव "हलो[1] यमां यमी"ति एकस्य यकारस्य लोपविधानात्, तदनु पुनः समाहितम्, एवमपि भेदः सम्भाव्यते, सति द्विर्वचने कदाचिद् द्वियकारकं कदाचिच्च त्रियकारकम्। असति द्वित्वे तु द्वियकारकमेव। यदि तु नित्यो लोपः स्यात्तदा एष भेदो न स्यात्, किन्तु सलोपस्तु विभाषा। "[2]शरोऽचि" इति सूत्रेण अचि परतः सर द्विर्वचन-प्रतिषेधात्, यदि नित्यो लोपः स्यात्तर्हि प्रतिषेधवचनं व्यर्थं स्यात्, द्विर्वचने सत्यपि "झरो [3]झरी"ति लोपकरणात्। पुनश्च ज्ञापकं प्रत्याख्यातं नित्येऽपि तस्य लोपे सरप्रतिषेध अवश्यं वक्तव्यः, "अचो [4]रहाभ्यामि"ति द्विर्वचनस्य लोपापवादत्वविज्ञानात्, एवमुक्त्वा अन्ते उपसंहृतं तदेतदत्यन्तमित्यादिना।

अत्र प्रदीपकारः—लोपविधायकसूत्रे विभाषानुवृत्तिज्ञापकत्वं विघटयति भाष्यकारः—संदिग्धमित्यनेन[5]। वस्तुतस्तु आचार्योपदेशपरम्परया विभाषानुवृत्तिरवश्यं ज्ञाता भवति, तस्मात् त्रियकारसंयोगश्रवणाय "[6]अणुदि"-त्सूत्रे परणकारेण प्रत्याहारः कृतः न तु चकारेण।

अत्रोद्योतकारः—'[7]शरोऽची"ति सूत्रस्य ज्ञापकत्वं सर्वथा न सम्भवतीत्युपसंहरति भाष्यकारः - तदेतदित्यादिना। ज्ञापकेन विभाषानुवृत्ति-साधयतः ज्ञापकखण्डनेऽनुवृत्तिः सन्दिग्धैव जाता, लण्सूत्रे विभाषा स लोप इत्युक्तमस्ति, अत आह—आचार्याणामिति। अणुदित्सूत्रेऽण्ग्रहणस्य ज्ञापकत्वं स्वीकरोति कश्चन आचार्यः; तत्तु नोचितं प्रतिभाति, वार्तिककृता अण्-ग्रहणस्य प्रत्याख्यातत्वात्। वस्तुतस्त्वाचार्योपदेशपरम्परया विभाषानुवृत्तिः ज्ञायत एव, अणुदित्सूत्रेऽण्ग्रहणमपि हलः परस्य यरोलोपः, वैकल्पिक इत्यत्र सामान्यापेक्षं ज्ञापकमस्ति लोपः सनित्यत्वे तु "संय्यन्ता" इत्यादा-वनुनासिकयकारादेः यर्ग्रहणेन ग्रहणात् द्वित्वार्थं कृतस्य परणकारेणाण्प्रत्या-हारस्य वैयर्थ्यं स्यादज्ग्रहणेनैव सिद्धेरिति शम्।

---

१. पा० सू० ८।४।६४
२. पा० सू० ८।४।४९
३. पा० सू० ८।४।६५
४. पा० सू० ८।४।४६
५. भा० प्र० पृ० १२०
६. पा० सू० १।१।६९
७. पा० सू० ८।४।४९

**भ० भा०--[1]असंदिग्धं पूर्वेण, न परेण। कुत एतत्? पराभावात्। न हि पदान्ताः परे अणः सन्ति।**

प्र०—[2]न हि पदान्ता इति। ननु च [3]भोभगो—इत्यत्राश्ग्रहणस्य प्रयोजनं करोतीत्यत्र "हलि[4] सर्वेषामि"ति लोपो मा भूद् इति। (तत्र वृश्चतीति क्विपि कृते वृश्चमाचष्टे इति णिचि टिलोपे च कृते वृक्षयतेर्वचिकृते वृक्षव् इति भवति। क्विपि तु क्वो लुप्तं क्वौ विधिं प्रति च न स्थानिवदिति निषेधात्संप्रसारणप्रसङ्गो लोपो [5]व्योर्वलीति वलोपप्रसङ्गश्च। विचि तु स्थानिवद्भावाद्वलनिमित्तो लोपो न भवति। [6]हलि सर्वेषामित्यनेन तु लोपे क्रियमाणे [7]पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवत्त्वनिषेधाद्वलोपः प्राप्तोऽश्ग्रहणानुवृत्त्या निवर्त्यते। तत्कथमुच्यते—न हि पदान्ता इति। उच्यते—अप्रगृह्यस्येति पर्युदासेनाच एवानुनासिकेन भाव्यं न तु हल इत्युक्तं न हि पदान्ता इति। कार्यभाज इत्यर्थः।

उ०—[8]न हि पदान्ता इति। पदानामेवानुनासिकोऽवसाने जायत इत्याश्रित्येदमुक्तम्। न तु तत्र पदान्ताधिकारोऽस्ति। लोप इति। अशा हलो विशेषणादिति भावः। (निषेधात्संप्रसारणप्रसङ्ग इति। चिन्त्यमिदम्। णौ परतस्तत्प्रकृतिभूतप्रातिपदिकस्य टिलोपविधानेन वृश्चतेः स्थानित्वे मानाभावेन वकारे एकदेशविकृतन्यायेन वृश्चतित्वस्य दुर्लभत्वात्।)

अयं भावः [9]"अणोऽप्रगृह्यस्यानुनासिकः" इति सूत्रेऽप्रत्याहारः पूर्वणकारेण ग्रहीतव्यः परणकारेण वेति शङ्कायां भगवता उक्तम्-असन्दिग्धं पूर्वेण, न परेणेति। तत्र हेतुरप्युक्तः—पराभावादिति। न हि पदान्ताः परेऽणः सन्ति, परणकारेण अण्प्रत्याहारबोध्याः ऋकारादयो वर्णाः पदान्ताः न सन्तीति भावः।

अत्र प्रदीपकारः ननु [10]"भोभगोऽघोऽपूर्वस्य योऽशि" इति सूत्रेऽश्ग्रहणस्य

---

१. म० भा० आ० पृ० २, १२१
२. भा० प्र० पृ० १२१
३. पा० सू० ८।३।१७
४. पा० सू० ८।३।२२
५. पा० सू० ६।१।६६
६. पा० सू० ८।३।२२
७. का० वा० ३३७
८. भा० उ० पृ० १२१-२२
९. पा० सू० ८।४।५७
१०. पा० सू० ८।३।१७

प्रयोजनमुक्तं भगवता भाष्यकृता वृक्षौ करोतीति प्रयोगे [१]''हलि सर्वेषामि''ति सूत्रेण वकारलोपाभावरूपम्. तत्र हि वृक्षं वृश्चतीति विग्रहे वृक्षमिति कर्मवाचके पदे उपपदे व्रश्चधातोः कर्तरि क्विपि वृक्षवृड इति भवति तं वृक्षवृश्चमाचष्टे इति विग्रहे पुनः [४]''तत्करोति तदाचष्टे'' इति णिचि टिलोपे च कृते वृक्षवयतीति रूपं भवति, ततः णिजन्ताद् वृक्षविधातोः कर्तरि विचिकृते [२]''णेरनिटी''ति णिलोपे च कृते विचः सर्वापहारिलोपे च वृक्षव् इति रूपं भवति, यदि णिजन्तात् क्विप् स्यात्तदा क्वो लुप्तं क्वौ विधिं प्रति च न स्थानिवदिति निषेधवचनेन णेर्लोपस्य प्राप्त [३]''अचः परस्मिन्नि''त्येतत् स्थानिवद्भावः निषिध्येत । ततश्च [४]''ग्रहिज्यावयिव्यधिव्यष्टि०'' इत्यादिना वकारस्य संप्रसारणं प्राप्नोति ''लोपो [५]व्योर्वली'' त्यनेन तस्य लोपोऽपि प्राप्नोति, यदि ण्यन्ताद् विचप्रत्ययः क्रियते तदा णेर्लोपस्य स्थानिवद्भावाद् वलनिमित्तको लोपो न भवति, [६]''हलि सर्वेषामि''त्यनेन तु यदि लोप. क्रियते तदा ''[७]पूर्वत्रासिद्धे न स्थानिवदि''-ति स्थानिवत्वनिषेधाद्वलोपः प्राप्नोति स च [८]''भोभगो०''इत्यतः अश्ग्रहणानुवृत्या अशः हलोविशेषणात् निवृत्तो भवति, अस्या स्थितौ वृक्षव्शब्दघटको वकारः पदान्ते मिलितः तत्कथमुक्तं भगवता न हि पदान्ताः परेऽणः सन्तीति । अत्रेदं समाधानं यद् अप्रगृह्यस्येति पर्युदासमहिम्ना अच एवानुनासिकादेशाः भविष्यन्ति न तु हलः, यतः प्रगृह्यसंज्ञकाः अच एव सन्ति, अतस्तद्भिन्नाः तत्सदृशाः त एव गृहीष्यन्ते. इममेवाभिप्रायमादायोक्तं भगवता न हि पदान्तेति । अत्र कार्यभाज इति विशेष्यस्य शेषो बोध्यः, एवं च पदान्ताः परेऽणः कार्यभाजो न भवन्तीति तात्पर्यम् ।

अत्रोद्द्योतकारः—अवसाने पदानामेवानुनासिको भवतीत्यभिप्रायेण एतद्भाष्यं प्रवृत्तम्, यतो हि—[९]''अणोऽप्रगृह्यस्यानुनासिकः'' इति सूत्रे पदान्ताधिकारो नास्ति । यत्तु प्रदीपकृता उक्तमचः [१०]''परस्मिन्नि''ति प्राप्तस्य स्थानिवत्वस्य क्वौ लुप्तमित्यनेन निषेधात्संप्रसारणं प्राप्नोति, तत्तु चिन्त्यम्, णौ परतः तत्प्रकृतिभूतप्रातिपदिकस्येष्ठवद्भावेन टिलोप-

१. पा० सू० ८।३।२२
२. पा० सू० ६।४।५१
३. पा० सू० १।१।५७
४. पा० सू० ६।१।१६
५. पा० सू० ६।१।६६
६. पा० सू० ८।३।२२
७. का० वा० ३३७
८. पा० सू० ८।३।१७
९. पा० सू० ८।४।५७
१०. पा० सू० १।१।५७

विधानाद् वृश्चतेः स्थानित्वे प्रमाणाभावेन वकारे [1]एकदेशविकृतन्यायेन व्रश्चधातुत्वस्यातिदेशासंभवात्, अत एव राज्ञ इदं राजकीयमित्यादौ [2]"अल्लोपोऽनः" इत्यकारलोपो न भवति, अन्यथा नकारस्य स्थाने [3]"राज्ञः क चे"त्यनेन कादेशे कृतेऽप्येकदेशविकृतन्यायेनानन्तत्वेऽलोपापत्तिर्दुर्वारा स्यात्। यदि व्रश्चधातोरेव टिलोपस्य स्थानिवद्भावः क्रियते तदा प्रकृतिभाव आपद्येत। यदि तु व्रश्चधातोरेव टिलोपस्य स्थानित्वं णिचि परतः विधीयते तदा [4]"प्रकृत्यैकाचि"ति सूत्रेण प्रकृतभावस्य प्राप्तौ सत्यां वकारस्य संप्रसारणं लोपो वा नैव स्यात्, अतश्च विचिप्रत्यये [5]सत्येकदेशविकृतन्यायेन वकारे व्रश्चधातुत्वातिदेशे [6]"व्रश्चभ्रस्ज०" इत्यनेन षत्वं स्यात्, णिलोपस्य स्थानित्वेन षत्वं वारयितुं न शक्यम्, [7]"पूर्वत्रासिद्धे न स्थानिवदि"ति वचनेन षत्वविषये स्थानिवत्वनिषेधादिति कस्यचिदुक्तिः परास्ताः। यदपि तु [8]"व्रश्चभ्रस्जे"ति सूत्रे "पदस्य" इत्यधिकाराद् व्रश्चधात्वन्तपदस्यान्त्यलः षत्वविधानाद् व्रश्चधात्वन्तत्वमेकदेशविकृतन्यायेन सुलभं भविष्यतीत्युच्यते, तदपि न रमणीयं [9]"स्कोः संयोगाद्योरन्ते चे"ति सूत्रादन्ते-- इति पदमनुवर्त्य वैयधिकरण्येनैवान्वयमाश्रित्य दोषाभावः सम्पादनीयम्, अत एव चान्ते ग्रहणं चारितार्थ्यं भवति, अर्द्धाधिकविकारसत्वेन [10]एकदेशविकृतन्यायस्य प्रवृत्तिरपि न संभवति, एवं च वृक्षोपपदाद् भ्रस्जधातोः ण्यन्तात् क्विपि वृक्षम् इत्यादौ [11]"व्रश्चे" ति सूत्रेण षत्वं नैव भवति। प्रदीपकृता कार्यभाजः इति विधेयपदमध्याहृतं तदनुसारेणाननुनासिकप्राप्तयोग्याः तेऽणः पदाताः न भवन्तीत्यर्थो बोध्यः।

वस्तुतः प्रदीपकारीयं भाष्यव्याख्यानमनुचितमेव प्रतीयते, यतो ह्यग्रे सिद्धान्तीभाष्योक्तेः सत्वेन तदज्ञानेनैव पूर्वपक्षिणा अस्य ग्रन्थस्योत्थानं कृतम्, एवञ्च पूर्वपक्षस्य सन्देहस्य चोत्थानमवश्यं कर्तव्यं स्यात् तत्तु न कृतं तस्मादष्टमाध्यायस्थं भाष्यमेकदेश्युक्तिपरमेव, व्याख्यातं च प्रदीपकृतापि तत्र तेनैव रूपेण।

---

१. भा० वा० ४००
२. पा० सू० ६।४।१३४
३. पा० सू० ४।२।१४०
४. पा० सू० ६।४।१६३
५ भा० वा० ४००
६. पा० सू० ८।२।३६
७. का० वा० ३३७
८. पा० सू० ८।२।३६
९. पा० सू० ८।२।२९
१०. भा० वा० ४००
११. पा० सू० ८।२।३६

अत्र समीक्षा--प्रदीपकृता यदुक्तं स्थानिवत्वनिषेधाद्वकारस्य सम्प्रसारणप्रसङ्ग इति। तद्विषये उद्द्योतकारः व्याचष्टे-चिन्त्यमित्यादिना। तत्र वयं ब्रूमः व्युत्पत्तिपक्षे वृक्षवृश्चशब्दात् णिचि प्रातिपदिकावयवस्य टिभागस्य लोपविधानेऽपि वृश्चतेः स्थानित्वं न व्यपगतं "सर्वे सर्वपदादेशाः०" इति वचनेन तत्सत्वात्। न च तेन वचनेन वृक्षवृश्चेत्यस्य सम्पूर्णस्यैव स्थानित्वमभ्युपेयमिति वाच्यम्, अर्थवत्येव स्थान्यादेशभावपर्यवसानेन वृश्चधाताावेवार्थवत्वेन तत्स्थानित्वस्य सुवचत्वात्, व्युत्पत्तिपक्षे प्रकृतप्रत्ययादिविभागस्य सौलभ्याच्च। [1]एकदेशविकृतन्यायेनाऽपि व्रश्चधातुत्वं वकारे सुलभमेव, यतो ह्यविकृतरूपस्य व्यञ्जकाः भूयांशोऽवयवाः यदि वर्तमानाः स्युः तदा तन्न्यायस्य प्रवृत्तिर्निराबाधैव; यथा शूनः सर्वं शरीरं यदि विनष्टं स्यात्, मुखात्मको भागो दृश्यते चेत्तदा श्वत्वजातेर्व्यञ्जकेन तेनावयवेन तत्र श्वेति व्यवहारो भवत्येव, तदवदत्रापि बोध्यमिति दिक्।

**म० भा--[2]अश्नोतेर्वा पुनरयमौणादिकः सरन् प्रत्ययः। अश्नुते इत्यक्षरम्।**

प्र०--[3]अश्नोतेर्वेति सरन्प्रत्ययस्यानुबन्धलोपे कृतेऽनुकरणं सर इति। तत्रार्थमश्नुते व्याप्नोतीत्यक्षरं पदं वाक्यं वा।

उ०—भाष्ये[4] अश्नोतेर्वेति तद्व्याचष्टे—अर्थमश्नुते इति। वर्णानामर्थकत्वेन चिन्त्यमिदम्। नानादेशेषु युगपदेकस्यैव शब्दस्याभिव्यक्तिदर्शनेन स्फोटस्यापि व्यापकत्वमिति भाष्यार्थ इत्यन्ये।

भगवता भाष्यकृता अक्षरशब्दस्य व्युत्पत्तिं प्रदर्शयिता इदमुक्तं [5]यदश्नोतेर्वा पुनरयमौणादिकः सरन्प्रत्ययः, अश्नोतेरित्यक्षरमिति। अत्राशुव्याप्तावित्यस्मात्कर्तरि सरन्प्रत्ययः, अत अक्षरशब्दस्य व्यापकोऽर्थः।

अत्र प्रदीपकारः सरन्प्रत्ययस्यानुबन्धलोपे कृतेऽनुकरणभूतः सरशब्दः, अत एव मूलवार्तिके "सरो क्षरमित्युच्चारितम्" तत्रार्थमश्नुते व्याप्नोतीत्यक्षरं पदं वाक्यं वा, यतो हि—पदेन वाक्येन वा अर्थः व्याप्तो भवति, अतश्च तेनैव बोधयितुं शक्यते, येन यः व्याप्तो भवति स तदधीनो भवति।

---

१. भा० वा० ४००
२. भा० वा० ८९
३. भा० प्र० पृ० १२६
४. भा० उ० पृ० १२६
५. म० भा० पृ० १२६

अत्रोद्द्योतकारः—प्रदीपोक्तिं खण्डयति—वर्णानामानर्थक्याद् अर्थमश्नुतेरिति व्युत्पत्तिर्न शोभना। अथ च विभिन्नप्रदेशेषु युगपदेकस्यैव शब्दस्याभिव्यक्तिरनुभूयते, यथा एकैवेन्द्रशब्दः क्रतुशते प्रादुर्भूतः सर्वस्याङ्गं भवतीत्युक्तं स्वयं भगवता भाष्यकृतैव। अतश्च स्फोटरूपशब्दस्यापि व्यापकत्वाऽभिप्रायेण व्याप्त्यर्थकादश्नोतेः सरन्प्रत्ययोऽभिहित इत्यपि द्रष्टव्यम्।

अत्र समीक्षा—वर्णानामनर्थक्यमुक्त्वा प्रदीपोक्तश्चिन्त्यत्वकथनमुद्द्योतकृतः नोचितं प्रतिभाति, यतो हि— अक्षरशब्देन पदं वाक्यं वा अत्राभिप्रेतं तद्दृष्ट्या अश्नुते अर्थं व्याप्नोतीति व्युत्पत्तिर्दर्शिता प्रदीपकृता, तत्र तु नियमेनार्थव्याप्तिर्भवत्येव। अत्राक्षरपदेन वर्णरूपोऽर्थो नाभिप्रेतः, वर्णबाहुः [१]पूर्वसूत्रे इत्युत्तरभाष्येण विरोधात्, यतोहि—अक्षरशब्स्य वर्णरूपोऽर्थविकल्पकोटौ दर्शितः स्वयं भगवता भाष्यकृता, अतः प्रकृते वर्णानर्थक्यहेतुना प्रदीपकारीयव्युत्पत्तिखण्डनमयुक्तमेव प्रतिभातीति सुधियो विभावयन्तु।

इति महाभाष्य-समीक्षणे प्रथमाध्यायस्य चतुर्थपादः।

●

१. भा० वा० ९०

# अथ द्वितीयोऽध्यायः

**म० भा०—[1]किं पुनरिदं तद्भावितग्रहणम्—वृद्धिरित्येवं ये आकारौकारा भाव्यन्ते, तेषां ग्रहणम्, आहोस्विदादैज्मात्रस्य ?**

प्र०—किं[2] पुनरिति । उभथा शास्त्र दर्शनात्पक्षद्वयेऽपि दोषसंभवात्प्रश्नः ।

उ०—नन्तु[3] सूत्रादादैज्मात्रग्रहणपक्ष एव प्रतीयत इति प्रश्नानुपपत्तिरत आह—उभयथेति । लुगादिसंज्ञासु तद्भावितपक्षस्य, लोपसंज्ञायामदर्शनमात्रस्येति भावः ।

अत्रेदं विशेषत आलोचनीयमस्ति यत् "सिद्धे शब्दार्थसम्बन्धे"[4] इति वार्तिकमाश्रित्य प्रवृत्तमिदं व्याकरणशास्त्रं कथं तद्भावितपक्षे शङ्कास्पदं स्यात्, यतो हि—तस्मिन् पक्षे शब्दानामनित्यत्वं स्फुटमायातीति चेदुच्यते, यद्यपि शाब्दिकसिद्धान्तरीत्या शब्दानामस्ति नित्यत्वं तथापि प्रक्रियापक्षे काल्पनिकमनित्यत्वमपि स्वीक्रियत एव, अत एव [5]"अचः परस्मिन् पूर्वविधौ" इति शास्त्रं संगच्छते. अन्यथा अक्षपर्याप्तस्थानितानिरूपतादेशता कुत्राऽपि न लभ्येत । एतदुभयविधं शब्दनित्यत्वानित्यत्वपक्षं महर्षिव्याडिविरचितलक्षश्लोकात्मकसंग्रहग्रन्थेऽपि निरूपितमस्ति । [6]तपरस्तत्कालस्येति सूत्रभाष्ये स्फोटःशब्दः ध्वनिशब्दगुण इति रीत्या उक्तोभयपक्षः समर्थितोऽस्ति । अस्यां स्थितौ "अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्" एतत्तात्पर्यक-प्रत्यासत्तिन्यायाद् वृद्धिशब्दमुच्चार्य भावितानामादैचामेव वृद्धिसंज्ञा स्यादिति भ्रममपाकर्तुमाह भगवान् भाष्यकारः पतञ्जलिः—किं पुनरिदं तद्भावितग्रहणमित्यादिना ।

पुनश्च व्याप्तिन्यायमाश्रित्योक्तं भाष्ये—[7]आहोस्विदादेज्मात्रस्येति ।

---

१. म० भा० आ० सू० १।१।३।१
२. म० भा० प्र० पृ० १२९
३. भा० उ० पृ० १२९
४. का० वा० १
५. पा० सू० १।१।५७
६. म० भा० आ० सू० १।१।९।१०
७. म० भा० आ० १।१।१, पृ० १२९

इममेवाभिप्रायं महामहोपाध्यायः प्रदीपकारः श्रीकैयटोऽब्रवीति उभयथेत्यादि ।

शास्त्रे तद्भावितातद्भावितयोरुभयोरपि संज्ञा दर्शनाद् एकतरपक्षे दोषसंभवात्प्रश्नः ।

पक्षद्वयेऽपि दोषसंभवात्प्रश्न इति प्रदीपकृदुक्तिः कथं सङ्गच्छेत, यतो हि तद्भावितातद्भावितोभयपक्षसंग्रह इष्ट एवाऽस्ति इति चेत्सत्यम्, पक्षद्वयस्यैकैकपक्षे दोषसंभावनया प्रश्न इति प्रदीपाशयः। अत एवापिशब्दः प्रयुक्तः अन्यथा पक्षद्वये दोषसंभवादित्येव वदेत् ।

अनेनैवाशयेन उद्द्योतविधाता श्रीनागोजिभट्टः प्रदीपग्रन्थं व्याचष्टे । ननु 'सूत्रादादैज्मात्रग्रहणपक्ष एव प्रतीयत इति प्रश्नानुपपत्तिरत आह—उभयथेत्यादिना। उभयप्रकारं स्पष्टयति -लुगादि संज्ञासु इति। तथा च "प्रत्ययस्य लुक्श्लुलुपः"[2] इति सूत्रे लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं लुक्श्लुलुप्संज्ञानां कार्यसंकरः प्रसज्येत, लुकि श्लुविधिः प्राप्नोति, श्लौ च लुक्विधिः प्राप्नोतीत्यादि। स्पष्टीकृतञ्चेतद् न वा पृथक् संज्ञाकरणाद् इत्युक्तवता भगवता भाष्यकृता ।

अतद्भावितरूपद्वितीयपक्षस्याऽपि लोपसंज्ञायां ग्रहणमस्ति, तत्र ह्यदर्शनसामान्यस्य लोपसंज्ञा विधीयते, तच्चादर्शनं लोपशब्देन भावितं स्याद् न वा स्यादित्याग्रहो न क्रियते ।

नन्वनुनासिकादिसंज्ञासु अस्त्युभयेषां ग्रहणं तद्रीत्या अत्राप्युभयग्रहणप्रकारः स्वीकृतः, किन्तु तावताऽपि शङ्कादले एका न्यूनता अवश्यं मनः तापयति यत् टिघुभादिसंज्ञासु अतद्भावितानामेव यथा ग्रहणं तथैवात्रापि तादृश एकतरपक्ष एवं शङ्कनीयः स्यादिति चेत्सत्यम् ।

तत्र हि तद्भावितपक्षासंभवादतद्भावितानामेव ग्रहणं क्रियते, अत्र न तादृशी स्थितिः किन्तु तद्भावितान मपि संभवः, अतो न सा न्यूनतापादः प्रसारयितुमर्हः। इदमप्यवश्यं विचारपथमायाति स्पष्टीकृतश्चापि श्रीनागोजिभट्टेन यत्सूत्रे सकृदुच्चरितः वृद्धिशब्द संज्ञादल उपयुक्तः तद्भावितपक्षः तच्छब्देन तस्यैव परामर्शेनोद्देश्यदलेऽपि कथं गृहीतो भविष्यति "[3]सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती" ति न्यायविरोधात्। तत्रोच्यत उद्द्योत-

१. उ० आ० पृ० १।१।१।१२९ २. पा० सू० १।१।६१

३. म० भा० आ० सू० १।१।१।१

कृता वृद्धिशब्दे तन्त्राद्यङ्गीकारे तद्भावितग्रहणमिति। यदा तु न तदङ्गीकारः तदा अतद्भावितपक्ष इति दिक्।

"[१]वृद्धिरादैच्" इति सूत्रेऽस्ति महाभाष्यं [२]संज्ञाधिकारः संज्ञासंप्रत्ययार्थः। "अथ संज्ञा" इत्येवं प्रकृत्य वृद्धयादयः शब्दाः पठितव्याः। किं प्रयोजनम्? संज्ञासंप्रत्ययार्थः। वृद्धयादीनां शब्दानां "संज्ञा" इत्येव संप्रत्ययो यथा स्यात्। इतरथा ह्यसंप्रत्ययो यथा लोके।

अत्र समीक्षा–प्रदीपकृता उच्यते—[३]संज्ञाधिकार इति वार्तिकमिति। वार्तिकन्तु तद्भवति यत्सूत्रेऽनुक्तदुरुक्तचिन्ता सम्पादयति। इदमपि वार्तिक [४]"वृद्धिरादैच्" इति सूत्रेऽनुक्तं संज्ञासूत्रत्वं चिन्तयत आत्मनि वार्तिकत्वं लक्षयति। अतश्च सूत्रं व्याख्यातुं प्रवृत्तः कात्यायनः कथमिदृशीं चिन्ता कृतवानिति कश्चिदाक्षेपः पराकृतः। वार्तिके अधिकारशब्दोऽथशब्दं समानार्थतया आदत्ते। अत एव चोक्तं भगवता भाष्यकृता अथ संज्ञेत्यादि। अथशब्दः संज्ञायाः प्रस्तावं द्योतयतीत्येवं व्याचक्षाणेन प्रदीपकृता प्रस्तावाधिकारयोः पर्यायिता ध्वनयति।

अथ [५]शब्दानुशासनमिति प्रथमवाक्येऽपि अथशब्दस्य अधिकारद्योतकता श्रीकैयटेन समर्थिताऽस्ति, निपातानां द्योतकत्वरूपसिद्धान्तपक्षमादाय। तत्रैवोपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयपक्षः, उपसर्गाणां तु द्योतकत्वपक्ष एवं श्रीनागोजिभट्टेन समर्थित इत्यन्यत्।

ननु [६]वृद्धयादीनां संज्ञात्वाद् वृद्धयादीनां "संज्ञा" इत्येष सम्प्रत्यय इति भाष्यं कथं सङ्गच्छेत? अभेदे षष्ठ्या अनुपपन्नत्वादिति शङ्कायामुच्यते प्रदीपकृता–[७]सम्प्रत्यय इत्येतदपेक्षया कर्मणि षष्ठीति[८]। वृद्धयादयः शब्दाः संज्ञात्वेन यथा प्रत्येरन् इत्यर्थः। अयं भावः "वृद्धिरादैच्" इति सूत्रेण वृद्धिसंज्ञा क्रियते, तत्र वृद्धिशब्दस्य संज्ञाशब्देन सह सामानाधिकरण्यमेवोचितं न तु व्यधिकरण्यम्, तर्हि वृद्धिशब्दस्य संज्ञा इत्येव व्यधिकरण्यनिबन्धनात् षष्ठी कथं प्रयुक्ता भाष्यकृता।

---

१. पा० सू० १।१।१
२. का० वा० ९३
३. प्र० पृ० १३१
४. पा० सू० १।१।१
५. म० भा० आ० १ पृ० ३
६. म० भा० आ० सू० १।१।१।१
७. भा० प्र० पृ० १३१
८. पा० सू० १।१।१

तत्रोक्तं प्रदीपकृता--सम्प्रत्यय इत्येतेन कृदन्तेन योगे "कर्तृकर्मणोः[1] कृति" इति सूत्रेणानुक्ते कर्मणि द्वितीयां विभक्तिं वाधित्वा षष्ठीविहिता भाष्यकारेण। संज्ञा इत्यस्य तु ज्ञानार्थकसम्प्रत्ययशब्देनाभेदान्वयः, शब्दार्थज्ञानानाम् इतरेतरतादात्म्याद्भावात्, दृश्यते च लोके कः शब्दः श्रुतो भवता, तस्य च कोऽर्थो ज्ञातः, किं च ज्ञानं ते जातमिति प्रश्ने उत्तरति-लोकः "घट इत्ययं शब्दो मया श्रुतः तस्य घट इत्यर्थो ज्ञातः घट इत्याकारकं ज्ञानं जातम्। अत्र शब्दार्थज्ञानानां घट इत्येकाकारेण निरूपणं तेषां परस्परं तादात्म्यमवभासयति। यदि संज्ञाधिकारो न स्यात्तदा वृद्ध्यादिशब्दानां संज्ञात्वेन बोधो न स्यात्। यथा लोके यस्य मानवस्य अन्यस्य वा देवदत्तादिरूपा कापि संज्ञा न क्रियते तस्य तत्वेन व्यवहारो न भवति, अस्या परिस्थितावीदृशानि अनेकानि सूत्राण्यनर्थकानि भविष्यन्ति, तच्च सिद्धान्तविरुद्धं स्यात्। उक्तं हि भगवता भाष्यकृता--

[2]**"वर्णेनाप्यनर्थकेन न भवितव्यं किं पुनरियता सूत्रेण"।**

अथ च क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोः सन्देहो न निवर्तेत कुतः खलु एतद् ज्ञायते वृद्धिशब्दः संज्ञा आदैचः संज्ञिन इति। विपरीतं कुतो न भवति ? एवं च यथा [3]"प्रत्ययः" [4]"परश्च" इत्यधिकारशास्त्रेण प्रत्ययसंज्ञा विधीयते तथैव अथ संज्ञत्यधिकारसूत्रेण एतदधिकारपठितानां शास्त्राणां संज्ञाशास्त्रत्वं भविष्यतीति भाष्याभिप्रायः. उपसंहारभाष्ये तु द्वयो हि सामानाधिकरण्यं लोके दृश्यते, विशेषणविशेष्ययोः संज्ञासंज्ञिनो वा, तद्यथा "नीलो घटः" इति, अयं देवदत्त इति च। प्रकृते तु विशेषणविशेष्यभावो न संभवति, यतो हि लोके प्रसिद्धपदार्थकयोरेव विशेषणविशेष्यभावो भवति, आदैच्छब्दस्तु वैयाकरणनिकाये प्रसिद्धार्थकोऽपि लोके न तादृश इति कृत्वा संज्ञासंज्ञिभाव एवानयोः पर्यवस्यति। तत्र लघ्वर्थं हि संज्ञाकरणमनाकृतिः[5] संज्ञा इत्यादिनियमेन भगवता भाष्यकृता वृद्धिशब्दस्य संज्ञात्वमादैच् पदार्थस्य च संज्ञित्वमिति। यद्यपि संज्ञासंज्ञिनोरपि अस्ति विशेषणविशेष्यभावः यथा आदैज् वृद्धिशब्दभाजः तत्र वृद्धिशब्दस्य विशेषणत्वम्, आदैच्पदार्थस्य विशेष्यत्वम्, तथापि तल्लोके न प्रसिद्धं किन्तु शास्त्रीयप्रक्रियाविदां नय एव प्रसिद्धम्। अत एवं त्रिशेषणत्रिशेष्यमात्रात्

१. पा० सू० २।३।६५
२. म० भा० आ० सू० १।१।१।१
३. पा० सू० ३।१।१
४. पा० सू० ३।१।२
५. म० भा० आ० सू० १।१।३।१

संज्ञासंज्ञिभावस्य भाष्ये पृथग्वचनम्, अयमाशयः ययोर्द्वयोः सामानाधिकरण्य-मापामरविद्वद्जनप्रसिद्धं तयोरेव विशेषणविशेष्यभाव अत्र सङ्केतितः।

[1]"वृद्धिरादैजि"त्यादिषु तु शास्त्रीयसङ्केतनमनुरुद्ध्यैव सामानाधि-करण्यं ज्ञातुं शक्यं नान्यथेति।

यद्यपि संज्ञीपूर्वोच्चारितो भवति संज्ञा च परोच्चारिता भवति, कार्यिणः सत्वे एव तस्य किञ्चित् कार्यं भवति। लोकेऽपि सत एव मांस-पिण्डस्य "देवदत्तः" इति संज्ञा क्रियते तर्ह्यादैज वृद्धिरिति सूत्रं भवितु-मर्हति न तु [2]"वृद्धिरादैजि"ति इत्यस्मिन् संशये उक्तं भगवता—[3]एतदेकमा-चार्यस्य मङ्गलार्थं मृष्यताम्। माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति। सर्वत्रैव हि व्याकरणे पूर्वोच्चारितः, संज्ञी, परोच्चारिता संज्ञा [4]"अदेङ्गुणः" इति यथा। अस्य भाष्यग्रन्थस्याशयः प्रदीपोद्द्योतग्रन्थाभ्या-मित्थं व्याख्यातः यदुद्देश्यवचनं पूर्वविधेयस्य ततः परमित्युपसर्गेण सञ्जिन उद्देश्यतया सर्वत्र पूर्वप्रयोग उचितः। प्रकृते तु मङ्गलप्रयोजन आचार्यः शास्त्राध्ययने मङ्गलं भवेद्विघ्नो मामूदित्येतदर्थं वृद्धिशब्दस्य संज्ञाशब्दत्वेऽपि पूर्वप्रयोगं कृतवान् येन एतच्छास्त्राध्येतारः वृद्धियुक्ता भवेयुः, एवञ्च [5]"वृद्धि-रादैजि"ति पाठक्रमो मङ्गलार्थः। अर्थक्रमस्त्वादैज्वृद्धिरित्येव बोध्यः। ननु "अपृक्त [6]एकाल्प्रत्ययः" इत्यादौ संज्ञासूत्रे कथं व्यभिचार इत्येषापि शङ्का समाहिता प्रदीपग्रन्थे "अपृक्त एकाल्प्रत्ययः"[7] इति परिभाषा, न संज्ञेति नास्ति व्यभिचारः। इत्येवं रूपेण उद्द्योतकृता च तत्रेदमुक्तं "[8]यत्रापृक्तपदं तत्र एकालित्याद्युपतिष्ठत इति, अर्थात् प्राथम्यं युक्तमेव एषा रीतिः वृद्धिसूत्रेऽपि वक्तुं शक्या किन्तु मङ्गलार्थत्वसम्प्रत्यये तत्र तादृशं न व्याख्यातम्। अपृक्तसूत्रीयमपीदं व्याख्यानम् "अपृक्तसंज्ञायामि-त्यादिभाष्यव्याख्यानाद्विरुद्धमेव, अतः अस्यापि संज्ञासूत्रत्वमेवाभ्यापेय-मुद्देश्यस्य पूर्वं प्रयोग इति कथनं तु प्रायिकमेव न नियमानुबद्धम्। उद्द्योत-ग्रन्थेन केषांचिद् विदुषामेतन्मतं वर्णितमस्ति यदेकाल्प्रत्यय इत्यपृक्तपदो-

१. पा० सू० १।१।१
२. पा० सू० १।१।१
३. म० भा० पृ० १३८
४. पा० सू० १।१।२
५. पा० सू० १।१।१
६. पा० सू० १।२।४१
७. पा० सू० १।२।४१
८. प्र० पृ० १३८

द्देश्यस्थं भवतु. तत्र सामानाधिकरण्यान्वयार्थमपृक्तपदस्य अपृक्तपदोद्देश्यस्थे लक्षणा कर्तव्या भविष्यति, कतिपयपदस्याध्याहारोऽपि गौरवग्रस्तः स्याद्, एवं च परिभाषापक्षेऽप्युद्देश्यत्वेनापृक्तपदस्यैव पूर्वपाठो युक्तः, आनुपूर्वीव्यत्यासेन बोधस्तूभयोस्तुल्य इति दिक्।

"इको गुणवृद्धी"[१] ति सूत्रीयं भाष्यमधिकृत्य समीक्षा विधीयते।

**म० भा०--इग्ग्रहणं किमर्थम् ?**

प्र०—[२]इको गुणवृद्धी। इग्ग्रहणमिति। वक्ष्यमाणज्ञापकवशादाकारादिनिरासादिक एव गुणवृद्धी भविष्यत इति प्रश्नः।

उ०—[३]इको गुण-। गुणवृद्धिग्रहणस्योत्तरत्रनिषेधसमर्पणायावश्यकत्वेऽपि इक्पदस्येकः स्थान इत्यर्थार्थमावश्यकत्वेऽपि योगविभागविषयकोऽयं प्रश्नो भाष्ये इग्ग्रहणमिति।

अत्र समीक्षा--इग्ग्रहणं किमर्थमिति भाष्यस्यावयवद्वारा समुदाये प्रश्न इति रीत्या सम्पूर्णसूत्रं किमर्थमिति तात्पर्यमवधेयम्, तदेव प्रदीपकृता व्याख्यायते [४]वक्ष्यमाणः ज्ञापकादाकारस्य व्यञ्जनस्य सन्ध्यक्षरस्य च गुणवृद्धयोः निरासस्य सिद्धे सति पारिशिष्यादिक एव स्थाने गुणवृद्धी भविष्यत इनि कृत्वा सूत्रमिदं व्यर्थमित्याशयः। तत्र चोद्द्योतकृता गुणवृद्धिग्रहणस्य न [५]धातुलोप आर्धधातुक इत्यत्रानुवृत्त्यर्थमावश्यकता दर्शिता, इक्पदस्य च इकः स्थाने इति स्थानि निर्देशार्थं प्रयोजनं दर्शितं चेन्नेक एव स्थाने प्राप्तयोर्गुणवृद्धयोर्निषेधः न [६]धातुलोप आर्धधातुक इत्यनेन क्रियेत तथापि तादृशप्रयोजनसत्वे "इको [७]गुणवृद्धी" "न धातुलोप [८]आर्धधातुक" इत्येकमेव सूत्रं विदध्याद भगवान् सूत्रकारः, पृथग्योगं कथं कृतवानिति प्रश्नाशयः।

अत्र वक्ष्यमाणज्ञापकस्वरूपमित्थम्—आकारनिवृत्त्यर्थं तावदिग्ग्रहणं न कर्तव्यम्, [९]"आतोऽनुपसर्गे कः" इत्यनेन कप्रत्यये, क्विप्करणस्य तत्प्रयोजनं यदिक्परत आकारलोपो यथा स्यात्, यदि इग्ग्रहणं न क्रियते

१. म० भा० आ० सू० १।१।३।२
२. भा० प्र० पृ० १३५
३. भा० उ० पृ० १४५
४. भा० प्र० पृ० १४५
५. पा० सू० १।१।६
६. पा० सू० १।१।४
७. म० भा० आ० सू० १।१।३।२
८. पा० सू० १।१।४
९. पा० सू० ३।२।३

तर्ह्याकारस्य गुणे कृते द्वयोरकारयोः पररूपे कृत इष्टं सित्स्यत्येव, तस्मा-ज्ज्ञायते आकारस्य गुणो न भवतीति। एवमेव "ग्लायति" इत्यादौ सन्ध्य-क्षरस्य गुणनिवृत्तिरपि न प्रयोजनम् उपदेशसामर्थ्यादेव सन्ध्यक्षरस्य गुणो न भविष्यति। व्यञ्जनस्य गुणनिवृत्तिरपि न फलम्, "जनेर्डः" इत्यनेन डित्वविशिष्टा प्रत्ययग्रहणात्।

यदि तु गुणः स्यात्तदा डित्करणं व्यर्थं स्यात्, द्वयोराकारयोः पररूपे-णेष्टसिद्धेः। एवं रूपेण सुविशदं चर्चितं महाभाष्ये।

[1]इको गुणवृद्धीत्यस्य परिभाषात्वसाधनम्।

**म० भा०--[2]किं पुनरयमलोऽन्त्यशेषः, आहोस्विदलोऽन्त्या-पवादः?**

प्र०—किं पुनरिति। उभयथा संभवाद्दोषदर्शनाच्च प्रश्नः। तत्राङ्गस्य गुण इति षष्ठीनिर्देशाल्लिङ्गादलोऽन्त्यस्येत्युपतिष्ठते, गुणश्रुत्या त्विक इति। तत्र यदि पूर्वमिका अङ्गं विशेष्यते—इगन्ताङ्गस्य गुणो भवतीति, स च भवन्नलोऽन्त्यस्येत्यन्तयस्य भवति, तदा सोऽस्य शेषो भवति। यदा त्वङ्गस्येति पूर्वमेवान्त्यमलं षष्ठी नीयतेऽङ्गान्त्यस्य गुण इति, पश्चादिक अन्त्योऽल्विशेष्यते, तदा तस्यायं विशेषणत्वात्तच्छेषो भवति।

उ०—षष्ठीति। स्थानषष्ठीत्यर्थः। षष्ठीस्थान इति परिभाषाया तत्त्वनिर्णयः। अस्य च सूत्रस्य वृद्धिगुणशब्दाभ्यां विधीयमानौ वृद्धिगुणादिकः स्थान इत्यर्थे वान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोरपि समकालप्रवृत्तिकता बोध्या। गुणश्रुत्येत्यस्य गुणशब्देन विधेयत्वबोधिकायेत्यर्थः।

अत्र समीक्षा—तच्छेषपक्षमादाय अलोऽन्त्यशेष इत्युक्तं भगवता भाष्य-कृता, तत्रानयोर्द्वयोरपि परस्परं शेषशेषीभावो द्रष्टव्यः। तत्र प्रदीपकृता स्फुटमुच्यते यदिका अङ्गस्य विशेषणत्वे येन विधिरिति तदन्तविधिना इगन्ताङ्गस्य गुणो भवति स चाऽन्त्यस्यालः स्थाने भवतीत्यस्मिन् पक्षे इक्परिभाषायाः शेषत्वम्, अलोऽन्त्यपरिभाषायाः शेषित्वम्, इगन्ताङ्गस्य गुण इत्यादि द्वितीयपक्षे त्वलोऽन्त्यपरिभाषायः शेषत्वम्, इक्परिभाषा-याश्च शेषित्वम्, अनया रीत्या द्वयोः तच्छेषत्वव्यवहारः सूपपद्यते। यदा तु

१. पा० सू० १।१।३ २. म० भा० पृ० १५१

गुणवृद्धिविधायकेषु शास्त्रेष्वङ्गस्येति न स्थानषष्ठी किन्त्विगपेक्षया अवयवषष्ठी, अङ्गावयवस्येकः स्थाने गुणः स्यात्, इति चार्थः, तदा स्थानषष्ठ्या अभावादलोऽन्त्यस्येत्यस्य नोपस्थितिरिति कृत्वा अप्राप्त्यनुमानलक्षणमयवादत्वमिक्परिभाषायाः बोध्यम् । यतो ह्यलोऽन्त्यपरिभाषायाः अप्राप्तेरनुमानमभूदिदमेव तद्बाधा बाधकता चेक्परिभाषायाः, ततश्चाङ्गावयवस्य यत्र तत्र स्थितस्येकः स्थाने गुणवृद्धी भवेतामित्यर्थः सम्पद्यते, नह्येकस्मिन्नेव काले द्वौ षष्ठ्यर्थौ संभवत, स्थाने योगोऽवयवयोगश्चेति कृत्वा विकल्पोऽपि न संभवति, तस्मात् तच्छेषतदपवादपक्षावेवाशङ्काविषयौ कृतौ । अग्रे च यद्यपि तच्छेषपक्ष आगतानां दोषाणामुद्धारः कृतो भगवता भाष्यकृता, तथापि महता प्रयासेनोद्धारकरणे गौरवमालोच्य स पक्षः परित्यक्तः । तदपवादत्वपक्षोऽपि [1]पुगन्तलघूपधस्य चेत्यत्रोभयविधिनियमेन कथञ्चित्साधितः, तथापि [2]जुसि चेत्यनेन प्राप्तो गुणः नियमाक्रान्तो न स्यादिति कृत्वा स अनन्त्यस्यापि प्राप्नोति, "अनेनिजुः" "पर्यवेविषुः" इति । अतश्चायमपि पक्षः पराकृतः [3]पुगन्तेति सूत्रे द्विविधनियमस्वरूपमित्थम् - [4]सार्वधातुकार्धधातुकयोः परत अङ्गस्य गुणः स्यात्तर्हि पुगन्तलघूपधस्यैव । पुगन्तलघूपधस्य गुणः स्यात्प्रत्ययपरतः तर्हि सार्वधातुकार्धधातुकयोरेव । यद्यप्येकस्मिन् वाक्ये नियमद्वयं न कर्तुं शक्यते [5]"सकृदुच्चरितन्यायविरोधः, तथाप्यावृत्याश्रयणेन सम्पादयितुं शक्यते । अन्ततश्चोपसंस्कृतं भगवता भाष्यकृता समीक्षा–एवं तर्हि नायं तच्छेषः नापि तदपवादः, अन्यदेवेदं परिभाषान्तरमसम्बद्धमनया परिभाषया ।

अयमाशय अलोऽन्त्यपरिभाषया सह शेषशेषिभाव उत्सर्गापवादभावो वा इक्परिभाषायाः भवितुं नार्हति, तत्तद्दोषवशाद् गौरवग्रस्तत्वाच्च । [6]क्वचित्सार्वधातुकार्धधातुकयोरित्यादाविक्परिभाषया सह अलोऽन्त्यपरिभाषाया अप्युपस्थित्या इगन्तस्याङ्गस्यान्त्यस्यालः स्थाने गुणो भवतीत्येवं रूपेण शेषशेषिभावोऽवश्यं भवति, किन्तु स [7]सार्वधातुकार्धधातुकयोरित्यस्य महावाक्यार्थबोधप्रसङ्गे महावाक्यार्थबोधकाले प्रासङ्गिकः न तु नैयमिकः । अतश्च यत्र गुणवृद्धिशब्दाभ्यां गुणवृद्धी विधीयेते तत्रेक इति

---

१. पा० सू० ७।३।८६
२. पा० सू० ७।३।८३
३. पा० सू० ७।३।८६
४. पा० सू० ७।३।८४
५. पा० सू० ७।३।८४
६. पा० सू० ७।३।८४
७. पा० सू० ६।४।१

षष्ठ्यन्तं पदमुपतिष्ठत इत्येवं रूपेण पदोपस्थितिपक्ष एव सिद्धान्तितो भगवता भाष्यकृता प्रदीपोद्द्योतग्रन्थयोश्चायमेव पदोपस्थितिपक्षः पल्लवितः युक्त्या पोषितश्च। अस्मिन् पक्षेऽनया परिभाषया उपस्थाप्यमानमिक्पदं [1]क्वचिदङ्गस्येत्यनेन सह सामानाधिकरण्येनान्वेति तथा [2]सार्वधातुकार्धधातुकयोरिति सूत्रे इगन्तस्याङ्गस्य गुण इत्यादिरीत्या वृद्धिविधायके [3]सिचिवृद्धिरित्यत्रापीगन्तस्याङ्गस्य वृद्धीत्यादिरीत्या च। क्वच्चि सामानाधिकरण्यासम्भवे [4]मृजेर्गुणः, मृजेर्वृद्धिरित्यादौ चेगन्तस्य मृजेरित्येवमन्वयासम्भवे मृजेरिको गुण एव मृजेरिको वृद्धिरित्यन्वययोजना विधीयते।

**म० भा०—[5]यद्यचोवृद्धिरुच्यते, "न्यमार्ट" अटोऽपि वृद्धिः प्राप्नोति।**

(प्र०)—[6]अटोऽपीति। नन्वडागमात्पूर्वमेव परत्वात्वृद्धिर्भविष्यतीति लक्षणस्य प्रवृत्तत्वादटि कृते पुनर्लक्षणं न प्रवर्तिष्यते। एवं तर्हि विप्रतिषेधानपेक्षयैवात्र चोद्यपरिहारावुक्तौ।

(उ०)—[7]अडागमात्पूर्वमिति। लादेशेषु कृतेष्वडिति पक्षे इदम्। अटि कृते इति। विकारान्यानुपूर्व्याभेदेन लक्ष्यभेदाच्चिन्त्यमिदम्। परत्वादित्यपि चिन्त्यम्, द्वयोर्यौगपद्यासम्भवात्। एवं तर्हीति। लावस्थायामडिति पक्ष इति भावः।

समीक्षा—"न्यमार्ट" इति लक्ष्ये निपूर्वकमृज्धातोर्लङि तिपि शब्लुकि लावस्थायामटि मृजेर्वृद्धिरि"त्यनेन मृजेस्वोवृद्धिरित्यर्थपक्ष आकारस्यापि [8]यदागमन्यायेन मृजेरङ्गतया वृद्धिः प्राप्नोति। तत्रोच्यते प्रदीपकृता अडागमं बाधित्वा परत्वात्पूर्वमेव वृद्धिर्भविष्यतीति लक्षणस्य प्रवृत्तत्वादटो वृद्धिर्न भविष्यतीति। तत्रोच्यते श्रीनागोजिभट्टेन परत्वादिति हेतुश्चिन्त्यः, अड्वृद्धयोः यौगपद्यासंभवात्। [9]अथ चाटि कृते पुनर्लक्षणं प्रवर्तिष्यत इति कैयटोक्तिमाक्षिपन् उद्द्योतकारः ब्रवीतिविकारान्यानुपूर्व्याः भेदेन लक्ष्यभेद इति चिन्त्यमिदमिति।

१. पा० सू० ७।३।८४
२. पा० सू० ७।२।१
३. पा० सू० ७।२।११४
४. म० भा० पृ० १५९
५ प्र० पृ० १५९
६. उ० पृ० १५९
७. पा० सू० ७।२।११४
८. परि०शे०प० ११
९. प्र० पृ० १५९

अत्रोच्यते प्रदीपकृता भाष्यस्य योऽभिप्राय—उक्तः स एव समीचीनः प्रतिभाति, यतो हि लादेशे कृते शपि च कृते सत्यडागम इति पक्षमादाय प्रदीपग्रन्थः प्रवृत्तः। तत्राडागमात्पूर्वं वृद्धेः प्रवृत्तौ न किञ्चिद् बाधकम्, यद्यप्यन्तरङ्गत्वाल्लादेशः तिबादिरवश्यं भविष्यति, तदनु वृद्धया सहैव शपोऽपि प्राप्तिरागमिष्यति तथापि शपं बाधित्वा परत्वाद् वृद्धिर्भविष्यति, प्रदीपग्रन्थे परत्वादित्यस्यायमेवाशयः न त्वटं बाधित्वेति। यतो हि लादेशे कृते सत्यडिति पक्षे बालोऽपि विजानाति अटा साकं वृद्धेर्यौगपद्यं नास्तीति, एवं च परत्वादित्यपि चिन्त्यमित्युद्द्योतकृदुक्तिरेव चिन्त्या। अथ च लक्षणस्य प्रवृत्तत्वादटि कृते सति [1]पुनर्लक्षणं न प्रवर्तिष्यत इति प्रदीपग्रन्थोऽप्य तीव समीचीनः, यतो हि लक्ष्ये लक्षणन्यायः, तत्र न [2]मृजेर्वृद्धिरिति सूत्रस्याप्रवृत्तिबीजम्, किन्तु लादेशे कृते शपि च कृतेऽडागमः शबन्त्यस्याङ्गतां भजते न तु मृजेः, अतो मृज्ग्रहणेन ग्रहणाभावे तत्र [3]मृजेर्वृद्धिरिति शास्त्रस्योद्देश्यतावच्छेदकधर्माक्रान्तिरेव नास्तीत्येतदेवाप्रवृत्तिबीजं बोध्यम्। लक्ष्ये लक्षणन्यायं तद् बीजं बुद्ध्वा प्रवृत्तोद्द्योतग्रन्थः चिन्त्य एव प्रतिभाति, अतः लावस्थायामडागम इति पक्षे एव भाष्यं सुयोज्यं भविष्यति, अत एव [4]चानन्त्यविकारेऽन्त्यसदेशस्येति न्यायेनाग्रिमं समाधानमपि सुष्ठु सङ्गच्छत इति शम्।

**म० भा०—[5]अथवा--षष्ठ्याधिकारे इमौ योगावपेक्षिष्यामहे।**

(प्र०)—[6]अथवेति। षष्ठीस्थाने योगेत्यत्र योगविभागः करिष्यते—"षष्ठी" यदेतदनुक्रान्तं तद् यत्र षष्ठी तत्रोपतिष्ठत इत्यर्थः। तत्र योग्यत्वादनयोरेवापेक्षा नान्येषाम्। ततः—"स्थाने योगा" इति षष्ठीत्येतदुपतिष्ठते।

(उ०) [7]षष्ठीति। योगविभागे च षष्ठीति सूत्रं साकाङ्क्षमिति लौकिकोऽपेक्षा लक्षणोऽधिकार इति भावः। योग्यत्वादिति। व्याख्यानाच्चेत्यपि बोध्यम्। उपतिष्ठत इति। अनुवर्तत इत्यर्थः।

---

१. प्र० पृ० १४९
२. पा० सू० ७।२।११४
३. पा० सू० ७।२।११४
४. म० भा० पृ० १६०
५. म० भा० पृ० १६६
६. प्र० पृ० १६६
७. उ० पृ० १६६

समीक्षा—पूर्वं शास्त्रीयोऽधिकारः प्रदर्शितः भगवता भाष्यकृता सिद्धं तु षष्ठ्यधिकारे वचनादित्युक्त्या। अर्थात् "षष्ठीस्थाने [1]योगा" इति सूत्रस्याधिकारे "इको [2]गुणवृद्धी" [3]"इग्यणः सम्प्रसारणम्" इति द्वयोः सूत्रयोः पाठः कर्तव्यः। मध्यवर्तिभिः सूत्रैः सह अयोग्यत्वात्सम्बन्धो न कार्य इत्येवं रूपेण शास्त्रीयमधिकारं व्याख्यायेदानीमथवेत्यादिना लौकिकोऽधिकारः प्रदर्श्यते। स चायमाकाङ्क्षालक्षणः, स एव प्रदीपकृता विशदीकृतः योगविभागद्वारा।

अयमाशयः [4]षष्ठीस्थाने योगेति सूत्रे योगविभागे सति षष्ठीति सूत्रं साकाङ्क्षमिति कृत्वा अपेक्षात्मकः लौकिक अधिकारः प्रदर्शितोऽस्ति। तेन इको [5]गुणवृद्धी [6]इग्यणः सम्प्रसारणमित्येतत्सूत्रद्वयेन यदुपाक्रान्तं तत्, यत्र षष्ठी तत्रानुवर्तते, तत्र योग्यत्वाद् व्याख्यानाच्च षष्ठी इति विभक्तयोग अनयोरेव द्वयोः सूत्रयोरपेक्षा नान्येषाम्। पूर्वस्मिन् शास्त्रीयाधिकारपक्षे तु षष्ठ्यधिकारस्थत्वेन [7]"इको गुणवृद्धी" इत्यस्य यत्र स्थानषष्ठीनिर्दिष्टस्य गुणवृद्धिशब्दाभ्यां गुणवृद्धी विधीयेते तत्रेक इति षष्ठ्यन्तं पदमुपतिष्ठते। एवमिग्यण इत्यस्य यत्र स्थानषष्ठी निर्दिष्टस्य सम्प्रसारणं विधीयते तत्रेग्यण इत्युपतिष्ठत इत्यर्थः। एव चानयोर्न स्वातन्त्रेण विधायकता किन्तु विधिप्रदेश-तत्तदुपस्थापकता एव, संज्ञात्वर्थापत्तिमूलकवाक्यकल्पनया साधनीयेत्येवं रूपेण स पक्षः गौरवान्वितः, अतः लाघवमूलक अयं लौकिकोऽधिकारपक्ष अभ्युपेतो भगवता भाष्यकृतेति दिक्।

**इति महाभाष्य-समीक्षणे द्वितीयाध्यायस्य प्रथमपादः।**



---

१. पा० सू० १।१।४९ २. पा० सू० १।१।३
३. पा० सू० १।१।४५ ४. पा० सू० १।१।४९
५. पा० सू० १।१।३ ६. पा० सू० १।१।४५
७. पा० सू० १।१।३

# अथ द्वितीयः पादः

## म० भा०—न [1]धातुलोप आर्धधातुके ।

(प्र०) न [2]धातुलोप आर्धधातुके । गुणवृद्ध्योः प्राधान्यादयं निषेधो न तु तद्गुणभावादिक्परिभाषायाः । [3]"देधीवेवीटामिति" चासम्बद्ध-परिभाषायाः निषेधे स्यात् ।

(उ०)—[4]न धातु० । प्राधान्यादिति । प्राधान्यं च संस्कार्यत्वरूपम् । असम्बद्ध-मिति । [5]अलोऽन्त्यस्येत्यनेनापीक एव प्रसक्त्या परिभाषा निषेधे वैयर्थ्यम् ।

समीक्षा—धात्वंशलोपनिमित्तभूत आर्धधातुके परे यत्र गुणवृद्धी विधातव्ये स्तः तत्रेक इति पदं नोपतिष्ठत इति सूत्राशयं मत्वा प्रवृत्तमिदं प्रकरणम् । [6]देधीवेवीटामित्यत्र [7]तन्निषेधेऽप्यलोऽन्त्यपरिभाषया अन्त्यस्येक एव गुणवृद्ध्योर्निषेधः स्यादिति कृत्वा तत्रोक्तरूपेण परिभाषानिषेधे किमपि फलं न दृश्यते । अत एव प्राधान्याद्गुणवृद्ध्योरेव निषेधः न [8]त्विको गुणवृद्धीति परिभाषायाः । यतो हि परिभाषा गुणवृद्ध्योः संस्कारिका, गुणवृद्ध्योस्तु संस्कार्यत्वम्, संस्कारकापेक्षया संस्कार्यस्य प्राधान्यं लोकेऽप्यनुभूयत एव । यतो हि-संस्कृतेनैव पदार्थेनेष्टं साधयितुं शक्यं नत्वसंस्कृतेन, संस्कारकं तु संस्कारसाधनभूतम् । संस्कारे जाते सति तस्योपेक्षा भवति न तु संस्कृतस्य, यथा—नद्याः पारगमने नौकासाधनम्, पारगमनरूपकार्ये निष्पन्ने सति नौकायास्त्यागो विधीयते न तु पादे गले वा बद्ध्वा तस्या आकर्षणं क्रियते । एवञ्च संस्कार्यत्वेनोपादेयत्वलक्षणं प्राधान्याद् [9]देधीवेवीटामित्यत्र पारिभाषानिषेधवैयर्थ्याच्च विधेयभूतयोर्गुणवृद्ध्योरेव निषेधः न धातुलोप [10]आर्धधातुक इति सूत्रेण सिद्धान्तितो भगवता भाष्यकृता ।

---

१. म० भा० आ० सू० १।१।४।१ — २. प्र० आ० पृ० ४।१६७
३. पा० सू० १।१।६ — ४. उ० आ० पृ० ४।१६७
५. पा० सू० १।१।५२ — ६. पा० सू० १।१।६
७. पा० सू० १।१।५२ — ८ पा० सू० १।१।३
९. पा० सू० १।१।६ — १०. पा० सू० १।१।४

**म० भा०—[1]किं पुनरिदमार्धधातुकग्रहणं लोपविशेषणमार्ध-धातुकनिमित्ते लोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवत इति। आहोस्विद्-गुणवृद्धिविशेषणार्धधातुकग्रहणम्। धातुलोपे सत्यार्ध-धातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति ?।**

अत्र प्रदीपकृता उच्यते किं [2]पुनरिति। आर्धधातुकग्रहणं लोपविशेषणं वा, गुणवृद्धिविशेषणं वा, बहुव्रीहिपक्षे तूभयविशेषणं वेति पक्षसंभवादिति प्रश्नः।

अत्रोद्योतकारः—[3]लोपविशेषणम्। श्रुतत्वात्। गुणादिविशेषणम्। प्राधान्यात्। बहुव्रीहीत्युभयानुग्रहायेति भावः। यद्यपि धातुलोप इति समस्तमार्धधातुकविशेषणं तथापि विशेषणशब्दः परिच्छेदकपर इति न दोषः।

समीक्षा—श्रुतानुमित्योः श्रुतसम्बन्ध इति न्यायेन श्रुतत्वाल्लोपविशेषण-मित्युक्तम्। गुणवृद्धयोरनिमित्तत्वेऽपि विधेयत्वेन प्राधान्यात्तद्विशेषणता वा, धातुलोपो यस्मिन्निति बहुव्रीहिपक्षे लोपविशेषणता गुणवृद्धिविशेषणता च संभवति। यद्यप्यत्र बहुव्रीहिपक्षे आर्धधातुक इति धातुलोपं प्रति स्वरसतः स्वरसतो विशेषतानुभवति, तथापि लोपांशे तस्य निमित्तत्वेन परिच्छेदकत्वं (व्यावर्तकत्वम्) वर्तत एवेतीदृश साम्यादेव विशेषणत्वं तत्र गौणरूपेणा-वधेयम्। तदेवोक्तमुद्द्योतकृता विशेषणशब्दः परिच्छेदकपर इति। मुख्यं विशेषणत्वं तु विद्यमानत्वे सति विधेयान्यत्वे सति व्यावर्तकत्वरूपम्। अत्र तु विधेयान्वयत्वाभावान्न मुख्यं विशेषणत्वम्, [4]एवमेवाविद्यमानत्वे सति विधेयान्वयत्वे च सति व्यावर्तकत्वमुपलक्षणत्वम्। यथा—[5]काकवन्तो देवदत्तस्य गृहमित्यत्र काके उड्डीयमाने सति गृहपदार्थे तस्योपलक्षणता, काकस्य विद्यमानतादशायां तु काकस्य विशेषणता। परिच्छेदकत्वं तूभय-साधारणधर्मः, किञ्च विद्यमानत्वे सति विधेयानन्वयित्वे सति व्यावर्तक-त्वमुपाधित्वमित्युपाधिलक्षणेऽपीदं परिच्छेदकत्वं वर्तत एव।

**म० भा०—[6]बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः, "असिद्धं बहिरङ्गमन्तरङ्गे"।**

---

१. म० भा० आ० सू० १।१।४।४ २. भा० प्र० पृ० १६८

३. उ० आ० पृ० ४।१६८ ४. ल० मं० टी० रत्नप्रभा

५. म० भा० क्तवतू निष्ठा ६. म० भा० आ० सू० १।१।४।१

अत्र प्रदीपकृता उच्यते—[1]यदा पूर्वं प्रत्ययः पश्चादुपसर्गयोगस्तदा प्रतिषेधोऽन्तरङ्गो गुणो बहिरङ्गः, यदा तु पूर्वमुपसर्गयोगस्तदा गुणोऽन्तरङ्गः पश्चात् प्रत्ययोत्पत्तौ निषेधो बहिरङ्गः, सर्वथा बहिरङ्गस्यासिद्धत्वादिष्टसिद्धिः।

तदनूद्द्योतकृतेत्थमुच्यते—[2]यदेति। पूर्वं धातुः साधनेनेति सिद्धान्तपक्ष इत्यर्थः। यदा त्विति। पूर्वं धातुरूपसर्गेणेति पक्षे पूर्वमेव जातस्य निषेधायोगादिति भावः। बहिरङ्गस्यासिद्धत्वादिति। द्वितीये बहिरङ्गनिमित्तस्यासिद्धत्वाद् विधिप्रवृत्तिकाले निष्पन्नत्वान्निषेधाप्राप्त्य इष्टासिद्धिरित्यर्थः एतेन जातस्य बहिरङ्गस्यान्तरङ्गे कर्तव्येऽनेनासिद्धत्वप्रतिपादनेऽपि जाते अन्तरङ्गे पश्चात्प्राप्तबहिरङ्गस्य अनेनासिद्धत्वप्रतिपादने मानाभावः, फलाभावो ज्ञापकविरोधश्चेत्यपास्तम्। परन्त्वयं पक्षः "[3]सुट्कात्पूर्व-" इत्यादिसूत्रेषु भाष्ये दूषित इति भाष्योक्तमेव सम्यक्।

अत्र समीक्षा—"न [4]धातुलोप आर्धधातुके" इति सूत्रे आर्धधातुकग्रहणं लोपविशेषणम् आहोस्विद् गुणवृद्धिविशेषणमिति पक्षद्वयमुद्भाव्यम्, यदि लोपविशेषणम्, उपेद्धा, प्रेधा अत्रापि प्राप्नोतीत्युक्तम्। अत्रोपसृष्ट इन्धधातुः क्तप्रत्ययान्तः, प्रेध इत्यत्र प्रपूर्वकः स एव धातुः क्तान्तः, अत्रैवोच्यते भगवता भाष्यकृता लोपविशेषणपक्षं समर्थयता बहिरङ्गो गुण इत्यादिः। तत्र व्याख्यायते प्रदीपकृता पूर्वं धातुः साधनेन युज्यते सिद्धान्तपक्षे न धातुलोप इति गुणप्रतिषेधस्यान्तरङ्गत्वम्, एकपदघटकनिमित्तापेक्षत्वात्। धात्वंशनकारलोपः निमित्तभूते क्तप्रत्यये परतोऽस्य निषेधस्य प्रवर्तमानत्वात्, गुणस्य तु पदद्वयसम्बन्धे वर्णद्वयापेक्षत्वेन बहिर्भूतनिमित्तकत्वात् परकालभावित्वाच्च बहिरङ्गत्वम्। निषेधशास्त्रविषये तदपेक्षया पूर्वकालभावित्वादन्तरङ्गत्वम्, उक्तं च पूर्वोपस्थितनिमित्तकत्वमन्तरङ्गत्वम्, परोपस्थितनिमित्तकत्वं बहिरङ्गत्वमिति कृत्वा अन्तरङ्गस्य प्रतिषेधशास्त्रस्य दृष्ट्या बहिरङ्गस्य गुणस्यासिद्धत्वादिष्टसिद्धिः। यतो ह्यन्तरङ्गो कर्तव्य एव बहिरङ्गमसिद्धं भवति न तु कृते सति, तस्मिन् कृते सति बहिरङ्गस्य प्रवृत्तिः सुलभैव। पूर्वं धातुरुपसर्गेण युज्यत इति द्वितीयपक्षेऽपि पूर्वकालोपस्थितिनिमित्तकत्वादन्तरङ्गतया गुणस्य पूर्वं प्रवृत्तिर्भविष्यति, तदुत्तरकाले

---

१. म० भा० प्र० पृ० १६८ २. म० भा० उ० पृ० १६९

३. पा० सू० ६।१।१३५ ४. पा० सू० १।१।४

क्तप्रत्ययेन सम्बन्धे परकालोपस्थितिनिमित्तकत्वाद् निषेधशास्त्रस्य बहिरङ्गतेति कृत्वा बहिरङ्गेण निषेधशास्त्रेणान्तरङ्गस्य गुणशास्त्रस्य विघातः कर्तुं न शक्यते। अत एवोक्तं प्रदीपकृता—सर्वथा बहिरङ्गस्यासिद्धत्वादिष्टसिद्धिरिति। तत्र सर्वथेत्यस्य पक्षद्वयेऽपीत्यर्थः। इममेवाशयं समर्थयत्युद्द्योतकारोऽपि यदेत्यादिनेष्टसिद्धिरित्यर्थ इत्यन्त्येन।

अग्रे उद्द्योतकृता एतेन जातस्येत्युपक्रम्य अपास्तमित्येवं रूपेण यद्दुपसंहृतं तत्तु न प्रदीपप्रातिकूल्यमावहति, अपि तु केनचित् प्राचीनेन विदुषा पूर्वं धातुरुपसर्गेण युज्यत इति द्वितीयपक्षे प्रदीपोपर्याक्षेपः कृतः मानाभावः, फलाभावः, ज्ञापकविरोधश्चेत्येतद् दूषणत्रितयेन, तस्यैव परिहारभूतोऽयमुद्द्योतग्रन्थः। तथा हि द्वितीयपक्षे बहिरङ्गस्य निषेधशास्त्रस्य निमित्ताभावात्प्राप्तिरेव नास्ति, अतो प्राप्तिलक्षणासिद्धत्वेनेष्टसिद्धौ सम्पद्यमानायां पश्चात्प्राप्तबहिरङ्गस्य अनेनासिद्धत्वप्रतिपादने मानाभाव इत्यादिकथनं नितान्तमनुचितम्, यतो ह्यप्राप्तिरूपमेवासिद्धत्वमुच्यते, तत्फलमपि निषेधशास्त्राप्रवृत्तिरूपं वर्तत एव, ज्ञापकविरोधोऽपि न वर्तते, यतश्च जातं समकालप्राप्तिकञ्च द्विविधमेव बहिरङ्गमसिद्धं क्रियते, तत्र पदावधिकमन्वाख्यानमादाय समकालिकत्वं भवत्येव, क्रमिकान्वाख्यानपक्षेऽपि बौद्धं समकालिकत्वमादाय व्यवस्था कर्तव्या, उक्तं च—

**बुद्धौ कृत्वा सर्वाश्चेष्टाः कर्ताधीरस्तन्वन्नीतिः।**
**शब्देनार्थान् वाच्यान् दृष्ट्वा बुद्धौ कुर्यात्पौर्वापर्यम्॥**

**म० भा०-[1]यावता चेदानीं रकि, जीवेरपि सिद्धं भवति।**

अत्रोद्द्योतः-[2]भाष्ये यावता चेदानीमिति। किन्त्वनेन गुणनिषेधादिति भावः। अत्र वलोपो [3]"लोपोव्यो" रित्यनेन। इदं च यथा श्रुतसूत्रमते वलोपप्रत्याख्याने तु रकिज्य इत्येव शरणम्।

अत्रेदं समीक्ष्यते यद् या धातोरौणादिके रक्प्रत्यये कृते सति जीनातीति जीरः [4]"ग्रहिज्या०" इत्यनेन सम्प्रसारणं पररूपं हलि [5]चेति दीर्घश्च। अस्यां परिस्थितावुच्यते भाष्यकृता यदि रदन्त (रक्प्रत्ययान्तः) एव जीरशब्दः

१. म० भा० पृ० १७१
२. उ० पृ० १७१
३. पा० सू० ६।१.६६
४. पा० सू० ६।१।१६
५. पा० सू० ८।३।७७

साधयितुमिष्यते तर्हि जीवप्राधारणे इत्यस्मादपि जीवतीति जीर इति कथन्न साध्येत। कित्त्वाद् गुणनिषेधः [1]"लोपोव्योर्वली"ति वकारलोपः। किन्तु लोपोव्योरिति सूत्रे वलोपः प्रत्याख्यातः तस्यां स्थिताविदं भाष्यमेकदेश्युक्तत्वेनालापनीयम्। यावता इत्यत्र च मत्वर्थो विवक्षितः येन हेतुनेत्येवार्थभाष्ये प्रायः यावच्छब्देन मत्वर्थे विवक्षित एव। यथा—[2]"हलोऽनन्तराः संयोगः" इति सूत्रे [3]ग्रामशब्दोऽयं बह्वर्थोऽस्त्येव शालासमुदाये वर्तत इति भाष्ये "वर्तते" इत्यस्य वृत्तिरित्येवार्थः, तिप्रत्ययार्थो विवक्षितः, यथा घटशब्दोऽत्र घटोऽस्तीति प्रयोगे एकत्वमविवक्षितं तथा अत्रापि धात्वर्थमात्रविवक्षितं वर्तनं वृत्तिरिति, एषैव प्रकृतेऽपि सरणीयम्।

**म० भा०—[4]सावकाशो लुक्। कोऽवकाशः? अवशिष्टः। अथापि कथञ्चिदनवकाशो लुग् स्यादेवमपि न दोषः। अल्लोपे योगविभागः करिष्यते।**

(प्र०)—[5]अथापीति। [6]"यञ्ञोऽचि चे"त्यत्र यकाराकारसमुदायस्य यञ् इति निर्दिष्टस्य विवक्षितत्वादवयवे च यङ्गव्यपदेशस्य गौणत्वादिति भावः।

(उ०)—[7]गौणत्वादिति। अतिदेशविषये गौणत्वाङ्गीकारेऽतिदेशवैयर्थ्यापत्तेरिदं चिन्त्यम्।

अत्र समीक्षा—लोलुवः, मरीमृजः, इत्यादावकारलोपे कृते तस्य स्थानिवद्भावाद् गुणवृद्धी न प्राप्नुतः।

न चानवकाशत्वाल्लुकि कृतेऽकारलोपो न प्राप्नोतीति शङ्क्यम्, परत्वादल्लोपो भविष्यति।

न च नित्यो लुक्यल्लोपे कृतेऽपि प्राप्नोत्यकृतेऽपीति चेत्तन्न समीचीनम्, कृतेऽल्लोपेऽन्यस्य प्राप्नोत्यकृते त्वन्यस्येति कृत्वा शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति।

नन्वेनं तर्हि लुगनवकाश एव बोद्धव्यः, इत्यपि वक्तुं न शक्यम्, विभिन्न-

1. पा० सू० ६।१।६६
2. म० भा० आ० सू० १।१।४।४
3. म० भा० पृ० १९३
4. म० भा० पृ० १७३
5. प्र० पृ० १७३
6. पा० सू० २।४।७४
7. उ० पृ० १७३-१७४

विषयो लुग्लोपोऽकारस्य लोपो यकारस्य लुकि ततश्च नास्ति [1]येन नाप्राप्ति-न्यायः तदग्रे उच्यते भाष्यकृता अथापि कथञ्चिदनवकाशः, इति ।

अत्र प्रदीपकारः—इत्थं व्याचष्टे यद्यकाराकारसमुदायस्य यङ्पदेन विवक्षितत्वात् । यकारमात्रावयवे यङ्पदस्य गौणत्वात् "यङोऽचि [2]चे"-त्यस्य प्रवृत्तिर्न स्यादतो लुगनवकाशः लोपं बाधिष्यते ।

अत्रोद्द्योतकारः—अतिदेशविषये गौणत्वाङ्गीकारेऽतिदेशवैयर्थ्यं स्यादिति रीत्या कैयटोक्तिश्चिन्त्यतां व्यनक्ति । तत्तु न साधुतरं प्रतिभाति, तथा हि यादृशं वाद्यं तादृशो रागः, यादृशं भाष्यं तादृशीरेव कैयटस्य व्याख्या । यदि कथञ्चिल्लुकोऽनवकाशत्वमेवेष्यते तदा कैयटस्य कोऽपराधः ? गौणत्वहेतुमन्तरा कङ्कारं [3]यङोऽचि चेत्यस्य प्रवृत्तिभावं सम्पद्येत । एकारमात्रे यङ्व्यपदेशः प्रत्ययव्यपदेशश्च [4]एकदेशविकृतन्यायाधीनः किं वा [5]स्थानिवत्सूत्राधीनः । तत्रातिदेशविषय एव गौणत्वमुच्यते, अयञ्च [6]गौणमुख्यन्यायः पदकार्याविषयक एव, न त्वन्यविषयक इत्यप्यस्य सिद्धान्तः तथापि भाष्यस्थ कथञ्चित् परिष्कारस्य एषा शैली स्वीकृता प्रदीपकृता । उद्द्योतकारस्तु तदप्राप्तियोग्यस्थले चारितार्थे सति कृते चारितार्थ्यमित्येवं रूपं [7]तक्रन्यायेन भाष्योक्तमनवकाशत्वमभिलषन् कथञ्चित्स्वारस्यं सम्पादयति । एतद्विषये विचारे क्रियमाणे सति प्रदीपकारोक्तिरेव सम्यक् प्रतिभाति, तथा हि यदि तक्रन्यायेन बाधकतेष्टा स्यात्तर्ह्यपवादपदं ब्रूयाद् भगवान् भाष्यकारः न त्वनवकाशपदं कथञ्चित्पदं च । अनेन व्यापारद्वयेन सर्वथा अनवकाशत्वमूलिकैव बाधकता भाष्यकृदभिप्रेता प्रतीयते, सा च गौणत्वदशायामेव भवितुमर्हति । अतश्च तादृशभाष्यस्य लापने प्रवृत्तः प्रदीपकारः साधुतर एव वर्तत इति दिक् ।

**म० भा०—क्ङिति चेति भाष्यकृता उच्यते—[8]उपधारोरवीत्यर्थम् ।**

तत्र प्रदीपः —उपधारोरवीत्यर्थमिति । उपधायाः अपीकः प्रतिषेधार्थम् ।

---

१. परि० शे० प० ५८
२. पा० सू० २।४।७४
३. पा० सू० २।४।७४
४. म० भा० आ० सू० १।१।८।१
५. पा० सू० १।१।५६
६. प० शे० प० १५
७. प० शे० ५८ टी० भूति
८. म० भा० आ० सू० १।१।४।२

रोरवीतेर्यङ्निमित्तप्रतिषेधानिवृत्त्यर्थम्। अत्र हि तिङ्निमित्तो गुणो न यङ्निमित्तः।

उद्द्योतः—[1]उपधाया अपीति। उपधायां रोरवीतौ चाऽर्थः प्रयोजनं प्रवृत्तिनिवृत्तिभ्यां प्रतिषेधो यस्य तत्तन्निमित्तग्रहणमिति भाष्यार्थ इति भावः। उपधारोरवीतिभ्यामित्युपधारोरवीत्यर्थमित्यर्थेन नित्यसमास इत्यन्ये।

अत्र एषा समीक्षा—उपधारोरवीत्यर्थमिति भाष्यस्यायमाशयः यदुपधा च रोरवीतिश्चेत्युपधारोरवीती, तौ, अर्थौ यस्य तद् द्वन्द्वगर्भो बहुव्रीहिः, क्ङिति चेति सूत्रमन्यपदार्थतया ग्राह्यम्। अर्थशब्दस्य प्रत्येकं योगः, द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत इति नियमात्। यद्यपि द्वन्द्वस्यान्तावयवः रोरवीतिशब्दः, तथाप्यन्त्यशब्दस्य परसमीपे लक्षणया अर्थशब्दो गृह्यते।

ननु साहित्यरूपे चाऽर्थे, इतरेतरयोगद्वन्द्वः "चार्थे [2]द्वन्द्वः" इत्यनेन विधीयते, तत्र मिलितानामेकत्रान्वयः साहित्यम्, अर्थाद् एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नससंर्गेण एकधर्मावच्छिन्नेऽन्वयरूपम्। यथा धवखदिरौ छिन्नत्तीत्यत्र धवखदिरयोरुभयत्वेन रूपेण कर्मत्वावच्छिन्नकर्मत्वसंसर्गेण छेदनत्वावच्छिन्ने छेदनपदार्थेऽन्वयः। अत एवोक्तं भगवता भाष्यकृता—"अजाविधनौ देवदत्तयज्ञदत्तौ" न जानीमः कस्य अजाकस्य चावयः।

अयमाशयः यदजानामवीनाञ्चोभयत्वेन रूपेण स्वस्वामिभावसम्बन्धेन उभयत्वावच्छिन्नयोः देवदत्तयज्ञदत्तयोरन्वयः कृतो वर्तते, तत्र साहित्यमहिम्ना प्रत्येकमन्वयो भवितुं नार्हति। अर्थाद् अजानां देवदत्तेऽवीनां यज्ञदत्ते। अत एवोक्तम्—न जानीमः कस्याजा कस्यावय इति। अनया रीत्या उपधारोरवीत्ययोः मिलितयोरेवार्थपदार्थे प्रयोजने अभेदसम्बन्धेनान्वयः स्वीकर्तव्योऽस्ति, कथङ्कारं प्रत्येकमन्वयः प्रतिपादितः प्रदीपोद्द्योतकृद्भ्यामिति जिज्ञासायामिदं वचनीयमस्ति यद्यत्र समुदितेऽन्वयः बाधितो भवति तत्रागत्या प्रत्येकमन्वयः कर्तव्यो भवत्येव, यथा—"आद्यन्तौ [3]टकितौ' इति सूत्रे समुदितस्याद्यन्तपदार्थस्य समुदिते टित्कित्पदार्थे अन्वयं विधाय द्वन्द्वसाधुत्वेऽपि तत्सूत्रसामर्थ्याद् यथासंख्यसूत्रसामर्थ्याद्वा पाश्चात्त्यः क्रमिकान्वयः विधीयत एव, तथैव प्रकृतेऽप्युपधारोरवीतिसमुदायेऽर्थपदार्थस्यान्वये एतद्भाष्यवाक्यं भाष्यतात्पर्यानुगुणं स्यात्, समुदाये प्रयोजना-

१. उ० पृ० १७६    २. पा० सू० २।२।२९
३. पा० सू १।१।४६

सम्भवात्प्रत्येकमेव तत्सम्भवाच्च। यथा [1]चोक्तमादिरन्त्येन सहेतेति सूत्रे मनोरमाग्रन्थे "समुदाये संज्ञा व्यर्थीभूयावयवेषु विश्राम्यत" इति।

अतः स्वयमेवोक्तं भगवता उपधार्थं [2]रोरवीत्यर्थञ्च। यतश्च "स्वपदानि च वर्ण्यन्ते भाष्यो भाष्यविदो विदुः इति" शिष्टोक्तिरपि सङ्गच्छते। [3]प्रदीपकृदुक्तिरप्युपधायाः अपीकः प्रतिषेधार्थं रोरवीत्येव यङ्निमित्तप्रतिषेधनिवृत्त्यर्थमित्येतद्रूपा सङ्गच्छते।

उद्द्योतकृता [4]अप्युपधायां रोरवीतौ च प्रवृत्तिनिवृत्तिभ्यां प्रतिषेधः दर्शितः। अयमाशयः–भिन्नश्छिन्न इत्यादावुपधाभूतस्येकः लघूपधगुणः प्राप्तः, किन्निमित्तकत्वेन निषेधः, रुधातोर्यङि लुकि द्वित्वेऽभ्यासगुणे "रु रु" इत्यवस्थायां लटि तिपि शब्लुकि तिप इडागमे तिब्निमित्तकगुणऽवादेशे "रोरवीती" ति रूपं सिद्ध्यति। यदि तन्निमित्तग्रहणं न क्रियते तदा गिति, किति, ङिति परे इको गुणनिषेध इत्यस्मिन्नर्थे [5]प्रत्ययलक्षणेन यङ्परत्वमादाय तस्य नीत्वा अत्रापि गुणनिषेधः प्रसज्येत। निमित्तग्रहणे कृतेत्वत्रत्यो गुणो यङ्निमित्तको नास्ति, अपि तु तिङ्निमित्तकः, इति कृत्वा निषेधस्य निवृत्तिलक्षणं प्रयोजनं सुसम्पन्नम्।

अत्रोद्द्योतविधाता श्रीनागोजिभट्ट उपधारोरवीतिभ्यामुपधारोरवीत्यर्थमित्यर्थेन नित्यसमास इत्यन्य इत्यपि व्याख्यातवान्। तस्यायमाशयः यदर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यमितीत्यनेन [6]चतुर्थी तदर्थेति सूत्रस्थवार्तिकेन नित्यसमासो विधेयः, स चात्रास्वपदविग्रहः "द्विजायेदं द्विजार्थं पयः" इतिवत्।

अत्रेदमालोच्यते भगवान् भाष्यकारः उपधार्थं रोरवीत्यर्थञ्चेति व्याचक्षाणः बहुब्रीहिसमास एव स्वीयं तात्पर्यं प्रकटयति, यदि नित्यसमासे तात्पर्यं स्यात्तदा उपधायै रोरवीतये चेदमित्येवं व्याख्यातव्यं स्यात्, यद्यप्युद्द्योतकृदूह्यते नित्यसमास अन्यपदार्थनिरूपितशक्तिकल्पनायाः अभावप्रयुक्तं लाघवमस्ति। यतो हि बहुब्रीहावन्यपदार्थनिरूपितायाः शक्तेरवयवपदार्थे प्राधान्येन स्वीकारः कर्तव्यो भवति। सार्थनिरूपितशक्तिस्तु गौणतया स्वीकारो भवति, प्रकृतेऽर्थेन सह नित्यसमासे त्विदमादिरूपेण अन्त्यपदेन

१. पा० सू० १।१।७२
२. म० भा० पृ० १७६
३. प्र० पृ० १७६
४. उ० पृ० १७६
५. पा० सू० १।१।६२
६. पा० सू० ६।२।४३

घटितो विग्रहः क्रियते, अतश्च तादृशी शक्तिद्वयीयाकल्पना न वर्तत इति लाघवमस्ति, तथापि भाष्यकारीयविग्रहपर्यालोचनया बहुव्रीहिरेव मन्तव्यः, व्याख्यानदशायां क्रियमाणं गौरवं न दोषाय कल्पत इति लोके प्रसिद्धमेव, सूत्र एवाल्पाक्षरत्वादिप्रयुक्तं लाघवमादरणीयं भवति। "अथ च वाक्यं वक्तर्यधीनं हीति भाष्योक्त्या अपि बहुव्रीहिरेव सिद्धान्तनीयः, वक्तुर्भाष्यकृतस्तादृशव्याख्यानात्।

अथ च नित्यसमासपक्षे तादर्थ्ये चतुर्थी कल्पनीया स्यात्, तत्र चोपकार्योपकारकभावरूपसम्बन्धात्मकं तादर्थ्यं विवक्षणीयं स्यात्, तच्चोपकारकत्वं किङ्तीत्यत्र परसप्तमीपक्षेऽन्यथासिद्धं स्यात्, बहुवीहिसमासपक्षेऽपि यद्यपि तन्निमित्तग्रहणस्य प्रयोजनत्वं वैकल्पिकमेव परसप्तमीपक्षाश्रयणात्। अस्मिन्नंशे द्वयो स्तुल्यता प्रतिभाति, तथापि बहुव्रीहौ विशेषादरः कर्तव्यः, कृतश्च कैयटादिभिर्विद्वद्वदैः।

अथ चोद्द्योतमते [1]द्वन्द्वांशे नित्यसमासत्वं तत्पुरुषांशे च नित्यसमासत्वमिति वृत्तिरूपांशद्वये एकरूपेण समासस्य स्थितिर्न स्यादत एकवाक्यता भज्येत। भाष्यप्रदीपयोर्मते त्वेकरूपेणैव द्वयोः समासयोः स्थितिः स्यादिति, सम्भवत्येकवाक्यत्वे वाक्यभेदो नैव युज्यत इति सिद्धान्तेन स एव पक्षः समीचीनः प्रतिभातीति दिक्।

"चतुर्थी [2]तदर्थे" इति सूत्रेऽर्थेन नित्यसमासो वक्तव्यः सर्वलिङ्गता च वक्तव्या इत्येवं रूपेण एतद् वार्तिकं पठितमस्ति। तस्य प्रत्याख्यानमप्यग्रे कृतमस्ति, तथा [3]ह्यर्थेन नित्यसमासो वक्तव्यः सर्वलिङ्गता च, नैष दोष इदं तावदयं प्रष्टव्यः—अथेह ब्राह्मणेभ्य इति कैषा चतुर्थी "तदर्थे" इत्याह। यदि तादर्थे चतुर्थी, अर्थशब्दस्य प्रयोगेण न भवितव्यम्, उक्तार्थानामप्रयोग इति। समासोऽपि तर्हि न प्राप्नोति, वचनात्समासो भविष्यति। सर्वलिङ्गता तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येत्येवं रूपेण समाहितः।

अत्र प्रदीपकृतोच्यते चतुर्थ्यन्तस्य अर्थशब्देन समासो विधीयते, न च तयोर्यौगपद्येनेति भावः। एवञ्च वार्तिकस्य नापूर्वता। ब्राह्मणोऽर्थो यस्येत्येवं सामानाधिकरण्यं विग्रहं कृत्वा बहुव्रीहिणैव निर्वाहो विधेयः, तस्यान्योदाहरणार्थं क्लेशत्वात्। अतोऽपि भाष्यप्रदीपयोः सिद्धान्तित्वं मन्तव्यम्, अत्र च अर्थशब्दः प्रयोजकपर इत्यपि व्याख्यातं प्रदीपोद्द्योतयोः।

---

१. म० भा० आ० सू० १।१।४।२ २. पा० सू० ६।२।४३

३. का० वा० १६९

**म० भा०—[1]ङितो यत्कार्यं तद् भवति, ङिति यत्कार्यं तन्न भवति ।**

(प्र०)—[2]ङितो यदिति । स्थानिवद्भावेन लादेशे ङिति यत्कार्यं पूर्वस्य तन्न भवतीति ज्ञाप्यते, न तु स्थानिनर् एव ङिद्व्यपदेश उच्छिद्यते, अन्यथा नित्यं ङित इत्येतन्निर्विषयं स्यात् ।

(उ०)—[3]यत्कार्यं पूर्वस्येति । प्राप्तमिति शेषः । नन्विति । प्रथमोपस्थिते तत्संज्ञाशास्त्रबाधापेक्षया स्थानिवत्वबाध एव युक्त इति भावः । युक्त्यन्तरमप्याह—अन्यथेति । लङ्लिङादेर्ङिद्व्यपदेशस्योच्छिन्नत्वादित्यर्थः । ङित आदेशस्येत्यर्थस्तु नेत्युक्तमेव ।

अत्र समीक्षा—अत्रैव [4]क्ङिति चेति सूत्रे लकारस्य ङित्वादादेशेषु स्थानिवद्भावः प्राप्नोति, अचिनवम्, असुनवम्, अकरवम् इत्येवं रूपेण भाष्ये शङ्का कृता । अयमाशयः—चिन्धातोर्लङि, उत्तमपुरुषैकवचने मिप्यमादेशे स्वादित्वात् श्नुप्रत्यये गुणेऽवादेशे अङ्गस्याडागमे "अचिनवम्" इति सिध्यति । तत्रेत्थमाशङ्कितं यल्लङ्वृत्तिङित्वं स्थानिवद्भावेनामादेशे आदाय [5]क्ङिति चेति सूत्रेण गुणनिषेधः कस्मान्न ? तत्र समाहितं भगवता "यदयं [6]यासुटो ङिद्वचनं शास्ति तेन ज्ञाप्यते ङिदादेशाः ङिपो न भवन्तीति ।"

तत्र पुनः शङ्कितम्—एवं सति "[7]नित्यं ङितः" "[8]इतश्चे"ति सूत्रद्वयं व्यर्थं स्यात् तत्रापि स्थानिवद्भावेन वस्मसाद्यादेशेषु ङित्वाभावात् । तत्र समाहितं ङितो यत्कार्यं तद्भवति, ङिति यत्कार्यं तन्न भवति ।

अयमाशयः-लादेशे स्थानिवद्भावेन ङित्वमानीय तस्मिन् परतः पूर्वस्य यत्कार्यं तन्न भवति, ङित्वमानीय तत्स्थाने यल्लोपादिकार्यं करणीयं तत्तु भवत्येव । एवञ्च [9]"नित्यं ङितः" इत्यादेर्न वैयर्थ्यम्, इममेवाभिप्रायं प्रकाशयति प्रदीपकारः न तु स्थानिन एव ङिद्व्यपदेशः उच्छेद्यत इति, अन्यथा [10]"नित्यं ङितः" इत्येतद् निर्विषयं स्याद् ।

---

१. म० भा० पृ० १८१
२. भा० प्र० पृ० १८१
३. भा० उ० पृ० १८१
४. म० भा० आ० सू० १।१।४२
५. म० भा० आ० सू० १।१।४२
६. म० भा० पृ० १८१
७. पा० सू० ३।४।९९
८. पा० सू० ३।४।१००
९. पा० सू० ३।४।९९
१०. पा० सू० ३।४।९९

अत्रोद्द्योतकृता युक्त्यन्तरमप्याह—अन्यथेति। लङ्लिङ्यादेर्ङिद्व्यपदेशस्योच्छिन्नत्वादित्यर्थः। ङितः आदेशस्येत्यर्थस्तु नेत्युक्तमेव। अयमाशयः-यदुक्तं प्रदीपकृता [1]"नित्यं ङितः" इति निर्विषयं स्यात्तत्तु ङितः आदेशस्येत्यर्थकरणेन न निर्विषयं स्यादित्याशङ्कायामुद्द्योतकार एनमाशयं प्रत्याचष्टे, ङित आदेशस्येत्यर्थस्तु न कर्तव्यः किन्तु नित्यं ङित इत्यादिकं कर्तव्यः।

पुन एतत्प्रत्याख्यातं भगवता भाष्यकृता यासुट एव निर्वचनादपर्याप्तिश्चैव हि यासुट्समुदायस्य ङित्वे, ङितश्च एवं करोति, तस्येतत्प्रयोजनं ङितो यत्कार्यं तद्यथा स्यात्, ङिति यत्कार्यं तद् माभूदिति।

अत्र प्रदीपकारो पर्याप्तिश्चेति प्रतीकं धृत्वा [2]समुदायस्य ङिद्व्यपदेशे कर्तव्ये यासुडसमर्थः, यासुट एव ह्यनेन ङित्वं क्रियते न समुदायस्य। [3]"क्ङिति चे" त्यत्र तन्निमित्तग्रहणस्य प्रत्याख्याततत्वादगुणनिमित्तेऽपि यासुटि ङिति गुणनिषेधः सिध्यति। यदि समुदाये स्थानिवद्भावेन ङित्कार्यमभविष्यद् यासुटो ङित्वं न व्यधास्यत्। विहितं तज्ज्ञापयति-ङिति यत्कार्यं तल्लादेशे न भवतीति।

अत्रोद्द्योतकारः [4]व्याचख्यमपर्याप्तश्चैवेति। अस्य ङित्वस्य केवले आगमे सम्प्रसारणविधानेन चरितार्थत्वात्। अवयवे चरितार्थस्यैव च समुदायविशेषकत्वम्। अत एव पठिता विद्येत्यादाविटस्टित्वमादाय ङिन्नेति भावः। पुनः प्रत्याख्याततत्वादिति प्रतीकमादायोद्द्योतकारः ब्रवीति स्वरितत्वप्रतिज्ञानात् समुदायगतनिमित्तत्वस्यावयवे आरोपादपि निषेधप्रवृत्तिरित्यन्ये।

अत्रेदं समीक्षणीयमस्ति यत् तन्निमित्तग्रहणपक्षं प्रत्याख्याय परसप्तमीं पक्षमेव सिद्धान्तितवान् भगवान् भाष्यकारः। यतो हि [5]"तस्मिन्निति निर्दिष्टे पूर्वस्ये" ति परिभाषासूत्रं सर्वत्र सप्तमीविषयं परसप्तम्यर्थकतया सिद्धान्तितवान्, तेन तिपि परतः प्राप्तो गुणः यासुटि ङिन्निषेधं शक्यः, समुदाये ङित्वस्यावश्यकता नास्ति, [6]क्ङिति चेत्यङ्गाधिकाराभावात् गित्कित्ङित्प्रत्ययाः एव गृह्येरन् इत्यत्राग्रहो नास्ति, अतः यासुट्रूपः आगमोऽपि ङित्वेन निषेधनिमित्तं भवत्येव।

यत्तूद्द्योतकृता स्वरितत्वप्रतिज्ञानात् समुदायगतनिमित्तत्वस्यावयवे

---

१. पा० सू० ३।४।९९ २. म० भा० पृ० १८२
३. पा० सू० १।१।५ ४. भा० उ० पृ० १८२
५. पा० सू० १।२।९९ ६. म० भा० आ० सू० १।१।४।२

आरोपादपि निषेधप्रवृत्तिरित्युक्तं तत्तु नाधिकं रोचते, स्वरितत्वप्रतिज्ञायाः कल्पनीयत्वादवयवे समुदायधर्मस्यारोपकरणाच्च गौरवग्रस्तपक्षस्य समादरे मानाभावात् ।

पुनश्च [1]"सुपर्याप्तश्चैव हि यासुट्समुदायस्य ङित्वे" इति भाष्यकारीयं पाठान्तरमादाय व्याख्यातं प्रदीपकृता । तत्रावयवङित्वद्वारेण समुदायङित्वं विधीयत इति व्याख्येयम् । एवं हि क्ङितीति निमित्तसप्तमीपक्षे गुणनिषेधः सिध्यति । अस्मिन् पक्षे ङितं चेदं करोतीति समुदायः परामृश्यत इति ।

तदुपर्युक्तमुद्द्योतकृता अत्र पाठे यासुट एवेति, एवकारः प्रसिद्धार्थकः । केवलयासुटो ङित्वं व्यर्थम्, गुणनिषेधे तन्निमित्तग्रहणात्, ङित्वं चैनमिति स्थानिवत्वेन ङित्वं सिद्धेऽपीति शेषः । ङितो यत्कार्यमित्यादि । ज्ञापकस्य सजातीयापेक्षत्वादिति भाव इत्युक्तम् ।

अस्मिन् पाठे इदं समीक्षितं वर्तते यदवयवङित्वस्य यासुट् विशिष्टे समुदाये सामर्थ्यादारोपः, अन्यथा तद्व्यर्थं स्यात्, सुपर्याप्त इत्यस्य सुसमर्थ इत्यर्थः । अत्र ज्ञापकस्य सजातीयापेक्षत्वात् ङिति यत्कार्यं तस्मिन्नेव कर्तव्ये स्थानिद्भावनिषिद्धयते, ङित्स्थानिके लोपादिकार्ये तु भवत्येव स्थानिवद्भावः, तेन [2]नित्यं ङित इत्यादेः सार्थक्यं न विस्मर्तव्यमिति । अस्य पक्षस्येदमेवापूर्व वैशिष्ट्यं यन्निमित्तसप्तमीपक्षेऽपि गुणनिषेधसिद्धिः सुलभेति । वस्तुतस्तु निमित्तसप्तमीपक्षस्यापूर्ववचनसाध्यत्वेनास्वारसिकत्वादनादरणीयत्वमेव, इमामेवारुचिं मनसि निधाय प्रदीपकृतापि केषाञ्चित्पाठ इत्युक्त्या उपक्रम्यते ।

उद्द्योतकारोऽपि ग्रन्थमेनं व्याचक्षाणः [3]सामर्थ्यात् समुदायविशेषकं तद् ( यासुटो ङित्वम् ) इति ब्रुवन् एवञ्चात्रत्यपूर्वपक्षसिद्धान्तावेकदेशिनः एवेति बोद्धव्यमित्युपसंहरति ।

**इति महाभाष्य-समीक्षणे द्वितीयाध्यायस्य द्वितीयपादः**



१. म० भा० पृ० १८२
२. भा० सू० ३।४।९९
३. म० भा० पृ० १८२

# अथ तृतीयः पादः

**म० भा०–[1]इटश्चापि ग्रहणं शक्यमकर्तुम्। कथम्? अकणिषम्, अरणिषम्, कणिताश्वः, रणिताश्व इति। [2]आर्धधातुकस्येड्वलादेरित्यत्रेडित्यनुवर्तमाने पुनरिड्ग्रहणस्य प्रयोजनमिडिडेव यथा स्याद्, यदन्यत्प्राप्नोति तन्माभूदिति। किञ्चान्यत्प्राप्नोति? गुणः। यदि नियमः क्रियते पिपठिषते रप्रत्ययः पिपठीः, दीर्घत्वं न प्राप्नोति नैष दोषः। आङ्गं यत्कार्यं तन्नियम्यते, न चैतदाङ्गम्।**

(प्रदीपः)—[3]नाङ्गमिति। अङ्गस्येत्यनुवर्तनादङ्गाधिकारविहितं यद्रूपान्तरमिटस्तदेव निवार्यते - इडेव यथा स्यादिति नियमेनेत्यर्थः। [4]र्वोरुपधाया इति न दीर्घत्वं नाङ्गम्। यत्तु ग्रहो[5] लिटि (दीर्घ इति) दीर्घत्वं तद्वचनाद्भवति। 'पिपठीषि ब्राह्मणकुलानी'त्यत्र त्वकारलोपस्य स्थानिवद्भावाज्झलन्तत्वाभावान्नुमभावस्तेन "पिपठीषी"ति कथं [6]सान्तमहतः संयोगस्येति दीर्घत्वमिति न चोदनीयम्। क्वौ विधिं प्रति न स्थानिवदित्यर्थो व्यवस्थापयिष्यते, न तु क्वौ लुप्तं न स्थानिवदिति।

(उ०)—[7]झलन्तत्वाभावादिति। स्वविधौ स्थानिवत्वाभावादजन्तलक्षणोऽपि नेति द्रष्टव्यम्। ननु क्वौ लुप्तस्य स्थानिवत्वनिषेधादलोपस्य स्थानिवत्वं दुर्लभमत आह–क्वाविति।

अत्र समीक्षा—"[8]दीधीवेवीटामि"ति सूत्रे छान्दसत्वात् दीधीवेवीयोः प्रत्याख्यानं कृत्वा इटोऽपि प्रत्याख्यानं कर्त्तुमारभ्यत इटश्चापि ग्रहणं शक्यमकर्तुमति। तत्र शङ्क्यते यदिटो ग्रहणं न क्रियते तर्हि कथम् अकणिषमित्यत्रामि परतः लघूपधत्वप्रयुक्तगुणस्य कथं निषेधः स्यात्। तत्र समाधीयते

---

१. म० भा० आ० सू० १।१।४।३ २. पा० सू० ७।२।३५
३. भा० प्र० पृ० १८४ ४. पा० सू० ८।२।७६
५. पा० सू० ७।२।३७ ६. पा० सू० ६।४।१०
७. भा० उ० पृ० १८५ ८. म० भा० आ० सू० १।१।४।३

भगवता भाष्यकृता [1]नेड्वशिकृति इत्यत इट्पदेऽनुवर्तमाने [2]पुन"रार्धधातुकस्येड्वलादे"रित्यत्रेड्ग्रहणं व्यर्थीभूय ज्ञापयति-यदिड् इडेव यथा स्यात्तस्य यः कोऽप्यन्यः आदेशः प्राप्नोति स माभूत, स चाऽन्यादेशो गुणरूपः प्रकृते बोद्धव्यः। पुनरपि भाष्यकृता शङ्क्यते पठितुमिच्छति पिपठिषतीति विग्रहे सन्नन्तात् पिपठिस्धातोः कर्तरि क्विपि [3]अतो लोप इत्यकारलोपे षत्वस्यासिद्धत्वात् [4]सस्जुषोरुरिति रुत्वे "[5]र्वोरुपधाया: दीर्घ इकः" इति दीर्घे विसर्गे च कृते पिपठीषिरितीदानीं न सिध्येत्, यत उक्तं भगवता [6]इड् इडेव भवति तत्स्थानेऽन्यः कोऽप्यादेशो न भवति, अस्यां स्थितौ पुनः समाधीयते भाष्यकृता आङ्गं यत्कार्यं तदेव नियम्यत इत्यादिः।

अत्रेदमालोचनीयमस्ति यदाङ्गमित्यनेनाङ्गोद्देश्यकं कार्यं ग्राह्यम्, अङ्गाधिकारीयकार्यं वा। तत्र प्रथमः पक्षः न सम्भवति, अस्य दीर्घस्याऽपि, वस्तुतोऽऽङ्गोद्देश्यकत्वेनोक्तदोषस्य तादवस्थ्यात्। अतश्चाङ्गाधिकारविहितं यत्कार्यं तदेव नियम्यत इत्ययमेव पक्षः समादृतः प्रदीपकृता। अस्मिन्नेव प्रसङ्गे "पिपठीषि ब्राह्मणकुलानी" त्यत्राकारलोपे कृते झलन्तत्वात् "नपुंसकस्य [7]झलचः" इत्यनेन नुमि सति "सान्तमहतः [8]संयोगः" इत्यनेन कथं दीर्घत्वम् तस्याङ्गाधिकारीयत्वादिति तु न शङ्कनीयम्, [9]अलोपस्याचः परस्मिन्नि"ति स्थानिवद्भावात्।

न च क्वौ लुप्तं न स्थानिवदिति वाच्यम्, क्वौ विधिं प्रति न स्थानिवदित्यस्यैव सिद्धान्तितत्वात्। स्थानिवद्भावेनाजन्तलक्षणोऽपि नुम्न शङ्क्यः, स्वविधौ स्थानिवत्वनिषेधात्, ग्रहो [10]लिटि दीर्घः, इत्यादिभिस्तु तत्तद्वचनबलात् दीर्घत्वं भवत्येव।

वस्तुतस्तु "[11]दीधीवेवीटामि"त्यत्र इड्ग्रहणं न प्रत्याख्येयमपितु गुणनिषेधाय समादरणीयमेव, यदीटः प्रत्याख्यानमिष्यत एव तर्हि "[12]नेड्वशी"-त्यत इड्ग्रहणमनुवर्त्य, [13]"आर्धधातुकस्येड्वलादे"रित्यत्रैव इड्ग्रहणं

---

१. पा० सू० ७।२।८
२. पा० सू० ७।२।३५
३. पा० सू० ६।४।४८
४. पा० सू० ८।२।६६
५. पा० सू० ८।२।७६
६. म० भा० पृ० १८४
७. पा० सू० ७।१।७२
८. पा० सू० ६।४।१०
९. पा० सू० १।१।५७
१०. पा० सू० ७।३।३८
११. म० भा० आ० सू० १।१।४।३
१२. पा० सू० ७।२।८
१३. पा० सू० ७।२।३५

प्रत्याख्यातव्यम् । एतावता गुरुतरप्रयासेन [1]दीधीवेवीटामित्येतदीये-ङ्ग्रहणस्य प्रत्याख्यानं न युक्तियुक्तं प्रतिभातीति तत्त्वं सुधियो विदाङ्कुर्वन्तु ।

**म० भा० – यदा [2]द्वयोर्द्वयोः संयोगसंज्ञा तदैवं विग्रहः करिष्यते– अविद्यमाना अन्तरैषामिति, द्वयोश्चैवान्तरा कश्चिद् विद्यते वा न वा ।**

(प्र०)—[3]अविद्यमानेति । मध्ये च आधेयः स द्वयोरेव मध्ये भवतीति संसर्गवद् विप्रयोगस्यापि विशेषावगतिहेतुत्वाद् बहुषु द्वयोर्द्वयोः संयोगसंज्ञा भवतीति पक्षः । द्वयोश्चैवान्तरेति । [4]"अन्तरान्तरेण युक्ते" इति द्वितीया कस्मादत्र न भवति ? उच्यते—यदा मध्यापेक्षया नियतावधिरूपत्वं विवक्ष्यते "त्वां च मां चान्तरा कमण्डलुः" अग्नी अन्तरा धवखदिरावन्तरा इति, तदा द्वितीया । यदा तु नियतावधित्वं न विवक्ष्यतेऽपि तु सम्बन्धमात्रं तदा षष्ठ्येव भवति । तदा हि न ज्ञायते—किं तयोरेवावधित्वमुतान्यसहित-योरित्यधिनियमाभावाद् द्वितीयाया युक्तग्रहणान्नियतावधिविवक्षाविषयाया अभावः ।

(उ०)—[5]संसर्गविप्रयोगावेव भाष्ये दर्शयति—द्वयोश्चैवेति । विद्यते इत्यन्तं दृष्टान्तार्थम् अवत्साधेनुरित्यादौ विप्रयोगोऽपि विशेषावगतिहेतुर्दृष्टः । अन्तरा विद्यत इति न विद्यत इति वा यत्तद् द्वयोरेवेत्यर्थः । नियतावधिरूपतेति । अवधित्वं ह्यन्यासहितत्वे एव तयोर्नियमेन भवति, अन्यसाहित्ये तु न तत्रावधित्वस्य नियमेन प्रतीतिः, अवधित्वविवक्षायामेव च द्वितीयेति भावः । यस्य च नियमेनावधित्वं तस्यैवावधित्वविवक्षाशब्देनेति तात्पर्यम् । नियतत्वमनया सहितत्वम्, तद्वैशिष्ट्येन यावधिरूपता सा विवक्षिता यदा भवतीत्यक्षरार्थः । अन्यथा अवधित्वाविवक्षायां द्वितीया तत्त्वाविवक्षायां षष्ठीत्यर्थस्यैव शब्दतो लाभेन नियतेति कथनमधिकं स्यादिति बोध्यम् ।

अत्र समीक्षा—भाष्यप्रदीपोद्द्योतेति लब्धत्रितयस्याभिप्रायः प्रतीयते यदज्व्यवधानरहितयोर्द्वयोः, हल्वर्णयोरिति संयोगसंज्ञा चिकीर्षिता भवति

---

१. म० भा० आ० सू० १।१।४।३ २. म० भा० आ० सू० १।१।४।४
३. भा० प्र० पृ० १९० ४. पा० सू० २।३।४
५. भा० उ० पृ० १९०

तदा "अविद्यमाना[1] अन्तरा येषां तेऽनन्तराः" इत्येवं विग्रहो विधेयः। अग्रे च पुनरुच्यते भगवता द्वयोश्चैवान्तरा (मध्ये) कश्चिद् विद्यते वा न वा।

अस्मिन् भाष्यग्रन्थे येषामिति बहुवचननिर्देशेन बहुत्वविवक्षा न कार्या, तस्य विवक्षितत्वात्, तदेव स्पष्टीकर्तुमुच्यते—द्वयोश्चैवेति। यतो ह्यन्तराशब्दार्थः मध्य इति, तत्र मध्यत्वनिरूपको द्वावेव भवत इति लोके सर्वविदितमेव। एतद् ध्वनयितुं प्रकृते भाष्यकृतोच्यते द्वयोश्चैवेत्यादि। तत्र "अन्तरा"शब्दयोगे द्वयोरिति षष्ठी न साध्वी भवितुमर्हति, "अन्तरान्तरेण[2] युक्ते" इति द्वितीया प्रसङ्गात्। अत इमां शङ्कामपनुदति प्रदीपकारः यदा[3] मध्यापेक्षया नियतावधित्वविवक्षा तदा नियमेन द्वितीया, त्वां च मां चान्तरा कमण्डलुरितिवत्। यदा तु न नियतावधित्वविवक्षा अपितु सम्बन्धित्वमात्रविवक्षा तदा षष्ठी। एवञ्चास्यां परिस्थितौ न निर्णेतुं शक्यते यत्तयोरेवावधित्वमुदन्यसहितयोरित्यवधिनियमाभावात् द्वितीया न कृता सा त्वन्तरान्तरेण[4] युक्त इति सूत्रे युक्तग्रहणमहिम्ना नियमेन अवधित्वविवक्षायामेव प्रवर्तते। न च युक्तग्रहणाभावे अन्तरान्तरेण शब्दाभ्यां द्वितीया स्यादिति न शङ्क्यं तयोरव्ययत्वेन विशेषाभावात्। प्रथमाबाधनेन सपूर्वायाः प्रथमायाः विभाषा इत्यस्याप्रवृत्त्यर्थं द्वितीयाविधानं सविशेषमित्यपि न शङ्कनीयं व्यवस्थितविभाषया तस्य समाधेयत्वात्। अतः युक्तग्रहणमवधित्वप्रतियोगित्वान्यतरसम्बन्धविशेषप्रतिपादनाय एव मन्तव्यम्, एवञ्च सम्बन्ध सामान्यविवक्षायाः षष्ठ्याः प्रवृत्तिः सुसाध्येति तत्त्वम्।

**म० भा—एवमपि[5] बहूनामेव प्राप्नोति। यान् हि भवानत्र षष्ठ्या प्रतिनिर्दिशति, एतेषामन्येन व्यवाये न भवितव्यम्।**

(प्र०)—[6]यान् हीति। एषामिति बहुवचननिर्देशादिति न बोध्यम्, बहुत्वस्याविवक्षणात्। अन्यथा शिक्षेत्यादौ द्वयोर्न स्यात्। तस्माद्योऽसावन्तरा स द्वयोर्भवति, न वेति यदुक्तं तत्रोच्यते—यदा द्वयोर्द्वयोरन्तरा न

---

१. म० भा० पृ० १९०
२. पा० सू० २।३।४
३. भा० प्र० पृ० १९०
४. पा० सू० २।३।४
५. म० भा० प्र० १९०
६. भा० उ० पृ० १९०

भवति तदा बह्वोऽनन्तरेति तेषामेव प्राप्नोति यदा हि बहूनां मध्ये भिन्न-जातीयोऽज् भवति तदा माभूत्। तदभावे तु प्रवर्तितव्यमेव बहूनां संज्ञया समुदायद्विर्वचनवदित्यर्थः।

(उ०) ननु[1] भाष्ये द्वयोरिति षष्ठीद्विर्वचननिर्दिष्टस्य द्वित्वाद् यान् हीति। बहुवचननिर्देशोऽनुपपन्न इति चेन्न। प्रकृते द्वयोरित्यनेन न केवलौ वर्णौ निर्दिष्टौ। तथा सति तयोरेवावधित्वे द्वितीयापत्तिः। किं त्वन्यसहितावप्यत एव षष्ठी। एवं च त्रयाणां समवधाने द्वयोः समुदाययोरवधित्वविवक्षणेन द्वयोः समुदाययोरनन्तरत्वे तत्समुदायवर्तिहलां बहुत्वात्तदुपपत्तिः। अनन्तरा इत्यनेन च न विद्यतेऽन्तरा यौ वर्णौ तौ, यौ च समुदायावन्तरा न विद्यते तौ च गृह्यन्त एकशेषादिति न दोषः। तत्सर्वमभिप्रेत्याह—यदा द्वयोर्द्वयोरिति। द्वयवयवकसमुदाययोरित्यर्थः। यान् वर्णान् द्वयोः समुदाययोरित्यर्थकषष्ठ्या प्रतिनिर्दिशतीति भाष्यार्थ इति भावः।

समीक्षा—अनुपदमेव व्याख्यातभाष्यत इदं निर्णीतं यद् "अन्तरा" शब्द-योगे द्वयोरिति षष्ठ्याः न नहि वर्णयोरेवावधिभूतयोः प्रतीतिरपि त्वन्यसहि-तयोः सम्बन्धिभूतयोर्वर्णयोः। एवञ्चावयवद्वयघटितसमुदायरूपयोः। सम्बन्धिनोरपि ग्रहणं प्राप्नोति, ततश्च पुनरपि बहूनां संयोगसंज्ञापक्ष आपत-तीतीमां जिज्ञासां शमयितुमाक्षिपति भगवान् भाष्यकारः, एवमपि[2] बहूना-मेव प्राप्नोतीत्यादिना।

अयमभिप्रायोऽत्र प्रदीपानुमोदित उच्यते-अविद्यमाना अन्तरा येषामिति विग्रहे येषामिति बहुवचननिर्देशेन बहुत्वं न विवक्षितम्, तथा सति शिक्षा भिक्षेत्यादौ द्वयोः संयोगसंज्ञायाः अभावे "संयोगे[3] गुरु"रिति गुरुसंज्ञायाः अभावे च "गुरोश्च[4] हलः" इति स्त्रीत्वविशिष्टे भावे प्रत्ययो न स्यात्। अतश्च यदा द्वयोर्द्वयोरन्तरा न भवति तदा बह्वोऽन्तराः, यथा—"सु द् ध् य् उपास्यः" इत्यत्र "द् ध् य्" इति त्रयाणां समवाये वर्णद्वयं मात्रं निरूपितं मध्यत्वं नास्तीति कृत्वा बहूनां संयोगसंज्ञा भवत्येव, दकारसहितो धकारः पूर्वावधिः यकारश्च परावधिः, अथवा यकारसहितो धकारः परावधिः दकार एव पूर्वावधिः।

यदा तु बहूनां मध्ये कश्चन विजातीय आयाति तदा न भवति, अन्यथा तु समुदायद्विर्वचनवद् बहूनां भवत्येव संयोगसंज्ञा। यथा—वृक्षे प्रचलिते

---

१. भा० उ० पृ० १९०
२. म० भा० १९०
३. पा० सू० १।४।११
४. पा० सू० ३।३।१०३

तदावयवाः अपि प्रचलन्ति, किं वा समुदायस्य द्वित्वे तदवयवापि द्वित्वभाजो भवन्ति, तद्वद् बहुनां संयोगसंज्ञायां द्वयोर्द्वयोः सुतरां सिध्यति। अत्र द्वयोर्द्वयोरित्यस्य द्वयवयवकसमुदाययोः ग्रहणम्। यान् वर्णान् द्वयोः समुदाययोरित्यर्थकषष्ठ्यां प्रति निर्दिशतीति भाष्याभिप्रायः विद्वद्भिराकरणीयम्।

यद्यपि "स्रष्टा" इत्यत्र रेफसकारयोः रेफषकारयोश्च द्वयवयवकसमुदांययोर्मध्ये कोऽपि न विद्यते तर्हि कथन्न एतेषां संयोगसंज्ञा स्यादिति शङ्का अवश्यं सचेतसां मनांसि धुनोति, तथापि रेफसकारयोरन्तरा अकारस्य विद्यमानत्वेन नास्त्यनन्तरत्वम्, सर्वतोभावेनैवानन्तर्यस्य विवक्षितत्वाद्, अत एवोक्तमसति बाधके सर्वं वाक्यं सावधारणं भवतीति। इदमेवोक्तमग्रे भगवता भाष्यकृता—न[1] वा तज्जातीयव्यवायादिति लोके विभिन्नजातीयकमेव व्यवधायकं भवति, "अनन्तरा इमौ ग्रामौ" इति व्यवहारोऽपि नद्यादीनां व्यवधानं न तद्बाधकम्, यतो हि—सारण्यके, ससीमके सस्थण्डिलकेऽर्थे वर्तमानो यो ग्रामशब्दः तमुद्दिश्येदमुच्यते—"अनन्तराविमौ ग्रामौ" इति। एवञ्च कृते रेफसकारयोर्मध्येऽकारस्य वर्तमानत्वान्न संयोगसंज्ञाप्रसक्तिरिति दिक्।

इति महाभाष्य-समीक्षणे द्वितीयाध्यायस्य तृतीयपादः।



---

१. म० भा० पृ० १३०

## अथ चतुर्थः पादः

**मुखनासिकावचनोऽनुनासिकः ।**

**म० भा०—[1]किमिदं "मुखनासिकावचनः" इति ? मुखं च नासिका च मुखनासिकम् । मुखनासिकं वचनमस्य सोऽयं मुखनासिकावचनः । यद्येवं मुखनासिकवचन इति प्राप्नोति । निपातनाद् दीर्घत्वं भविष्यति । अथवा—मुखनासिकमावचनमस्य सोऽयं मुखनासिकावचनः । अथ किमिदमावचनमिति । ईषद्वचनमावचनमिति, किञ्चिन्मुखवचनं किञ्चिन्नासिकावचनम् । मुखद्वितीया वा नासिकावचनमस्य सोऽयं मुखनासिकावचनः । मुखोपसहिता वा नासिका वचनमस्य सोऽयं मुखनासिकावचनः ।**

अत्र समीक्षा—चतुर्विधेषु समासेषु भाष्योक्तेषु किं सर्वे सिद्धान्तभूताः उताहो एकः कश्चिदिति जिज्ञासायामुच्यते—प्रथमपक्षे निपातमनेन दीर्घत्वं साधनीयं भविष्यति, निपातनं त्वबाधकमपि भवतीति कृत्वा सदोषोऽयं पक्षः । अस्य लौकिकशब्दत्वं मत्वा सौत्रत्वेन हेतुना सिद्धिर्नोक्ता । ईषदर्थकमाङ् उपसर्गं प्रश्लिष्य ईषदुच्यतेऽनेनेति आवचनमिति द्वितीयपक्षे किञ्चिन्मुखवचनं किञ्चिन् नासिकावचनमित्येवं यद्यप्यर्थसङ्गतिर्भवितुमर्हति, तथाऽप्यस्मिन् पक्षे मुखनासिकवचन इत्यपि प्राप्नोति, यो हीषदुच्यते स उच्यत एव, यथेषच्छुक्लः शुक्ल एव, अतोऽयमपि पक्षः न साधुतरः । मुखद्वितीयेति तृतीयपक्षे द्वितीयशब्दः सहायवाची स्वीकर्तव्यः [2]शाकपार्थिवादित्वान्मध्यमपदलोपिसमासः मन्तव्यः । अस्मिन् पक्षेऽपि मध्यमपदलोपित्वात् शब्दानित्यत्वापत्तिरायाति, अतोऽयमपि पक्षो न

---

१. म० भा० आ० सू० १।१।४।५ २. का० वा० १०६८

समीचीनः [1]मुखोपसंहिता वा नासिकावचनमस्येति चतुर्थः पक्ष इदानीमवशिष्यते, तत्र विचारे क्रियमाणे यद्यपि मध्यमपदलोपितया अनित्यत्वमायाति, तथाऽप्येषा न विग्रहोऽपि तु आर्थिकार्थिकथनम्, मुखं च नासिका चानयोः समाहारद्वन्द्वे यद्यपि क्लीबत्वं प्राप्नोति तथापि लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति सिद्धान्तेन स्त्रीत्वाश्रयणे न कोऽपि दोषः। भाष्यकृतोपसंहितापदप्रयोगः कृतः तेन सामीप्यान्मुखं च तन्नासिका चेत्युभाभ्यामन्तरालं व्यपदिश्यते, तत्संस्कारपक्षे तु मुखनासिकापदनिरपेक्षं वचनमित्येतत्पदं लिङ्गसर्वनामनपुंसकत्वाश्रयणसंश्रयते पश्चात् स्त्रीत्वस्य तदान्तरसम्बन्धेन प्रतीयमानत्वाद् बहिरङ्गत्वात् टित्वप्रयुक्तो ङिप्प्रत्ययो न भवति। एवञ्च यथा स्त्रीप्रमाणी अस्येति स्त्रीप्रामाणिक इति भवति तथा मुखनासिकावचनमस्येति मुखनासिकावचनीक इति न भवति। अथवा मुखपदस्य मुखोपसहिते रूपेऽर्थे लक्षणा, एवञ्च नासिकशब्देन मुखशब्दस्य कर्मधारयसमासः कर्तव्यः, ततः वचनशब्देन करणलुडन्तेन सह तृतीयातत्पुरुष इत्येवं प्रकारे लाघवं प्रतिभाति, अतः चतुर्थोऽपि पक्षः गौरवग्रस्त एव।

भाष्यकारस्य त्वस्मिन् पक्षेऽयमाशयः प्रतिभाति [2]यत्कर्मणि ल्युट् स्वीकारः बाहुलकादधीनः बाहुलकन्त्वगतिकगतिः, अतः भगवदभिहितोऽयं चतुर्थः पक्षः सर्वथा संग्राह्यः। श्रीभर्तृहरिणाऽप्युक्तम्—"सः[3] हि वर्णो न मुखेन वा नाऽपि नासिकयैव चात्मवृत्तिं लभते, किं तु वायुनाऽनुपरतशक्तिना अन्यतरकरणमभिहत्यावन्यतरकरणेऽभिहन्यमाने आत्मव्यक्तिं लभते इति। अत एव चानुनासिकपदस्य व्युत्पत्तिरपि क्रियते, नासिकामभिहत्य वायुना अभिव्यञ्जित इति। भगवता भाष्यकृता तु मुखग्रहणं प्रत्याख्यातं [4]प्रासादवासिन्यायेन नासिकावचनोऽनुनासिक इत्येव न्यासः सिद्धान्तित इत्यन्यद्।

**तुल्यास्यप्रयत्नं सवर्णम्।**

**म० भा०—[5]किमिदं तुल्यास्यप्रयत्नमिति ? तुलया सम्मितंतुल्यम्। आस्यं च प्रयत्नश्च आस्यप्रयत्नम्। तुल्यास्यं तुल्यप्रयत्नं च सवर्णसंज्ञं भवति।**

---

१. म० भा० पृ० १९४ २. भा० उ० पृ० १९४
३. उ० पा० सू० १।१।७ ४. म० भा० १९५
५. म० भा० आ० सू० १।१।४।६

(प्र०)—[1]तुल्यास्यप्रयत्नम्। चत्वारोऽत्र पक्षाः सम्भवन्ति-द्वन्द्वगर्भो बहुव्रीहिः, त्रिपदो बहुव्रीहिः, तुल्यास्यशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः, आस्य-प्रयत्नशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिरिति। तत्र द्वन्द्वगर्भो बहुव्रीहिरिति पक्षे वार्तिकस्यावतार इति तमेव भाष्यकारः पूर्वं दर्शयति—"तुलया सम्मित-मिति। व्युत्पत्त्यर्थमेव तुलोपादीयते। रुढिशब्दस्त्वयं सदृशपर्यायः। यथा—प्रवीणः कुशलः प्रतिलोमोऽनुलोम इत्यवयवार्थाभावः, एवं तुल्यशब्देऽपि।

(उ०)–[2]तुल्यास्य प्र०। तत्पुरुष इति। तुल्यास्यशब्दयोर्मयूरव्यंसकादित्वात्पूर्व-पदार्थप्रधानस्तत्पुरुषः। आस्यप्रयत्नशब्दयोश्च साधनं कृतेत्यनेन समासः। ननु स्थानादिकं न तुलया सम्मीयतेऽत आह—व्युत्पत्त्यर्थमेवेति।

समीक्षा—अस्मिन् सूत्रे तुल्यास्यप्रयत्नशब्दे समासविषये चतुर्णां पक्षाणां सम्भवः प्रदर्शितः, तत्र द्वन्द्वगर्भो बहुव्रीहिः प्रथमपक्षे दर्शितः, तस्यैतत् स्वरूपं मन्तव्यं यदास्यं [3]च प्रयत्नश्च आस्यप्रयत्नौ, तुल्यौ आस्य-प्रयत्नौ यस्य तत्। अत्र द्वन्द्वादौ श्रूयमाणस्य तुल्यशब्दस्य प्रत्येकं योगः सामर्थ्यादन्यथा उभयत्वावच्छेदेनास्यप्रयत्नयोः समुदाये तुल्यत्वस्यान्वये कृतेऽपि प्रत्येकमेव, अर्थादन्वयः पर्यवस्थितो भविष्यति, एवञ्च तुल्यास्यं तुल्यप्रयत्नं चेत्युक्तं भगवता भाष्यकृता। त्रिपदो बहुव्रीहिरिति द्वितीय-पक्षेऽपि तुल्य आस्यः प्रयत्नो यस्येत्येवं विग्रहो भविष्यति, त्रिपदोऽयं व्यधिकरणबहुव्रीहिः भाष्यप्रामाण्यात् स्वी कर्तव्यो भविष्यति, अथ चास्मिन् पक्षे आस्यरूपस्थानस्य तुल्यता नैव संगृहीता स्यात्।

तृतीयपक्षे तु तुल्यास्यशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः, तुल्यः आस्यः तुल्यास्यः, मयूरव्यंसकादित्वात् सप्तम्यन्तोत्तरपदकोऽयं तत्पुरुषस्तादृशः प्रयत्नो यस्य तत्तुल्यास्यप्रयत्न इति तत्पुरुषगर्भो बहुव्रीहिः। अयमपि पक्षः नेष्टसाधकः यतः प्रयत्नसाम्येऽपि स्थानसाम्यं न विवक्षितमत्रापि। तदन्वा-स्यप्रयत्नशब्दयोस्तत्पुरुषं कृत्वा बहुव्रीहिः स्वीकृतो वर्तते, तस्य विग्रह इत्थं प्रदर्शनीयो भवति, यदास्ये प्रयत्न आस्यप्रयत्नः, तुल्य आस्यप्रयत्नः यस्य तत्। अस्मिन् सप्तमीति योगविभागात्समासो कर्तव्यो भवति, स चास्मादेव भाष्यात् स्वीकर्तव्यः स्यात्, न हि तत्रान्यत्प्रमाणमस्ति। [4]"सह सुपे"ति त्व-गतिकगतिः, कथञ्चित्समासे कृतेऽप्यस्मिन् पक्षेऽपि स्थानोपसाम्याभावात् सिद्धान्तपथमानेयः। यतश्च आस्यपदस्य शब्दस्य वा आस्ये भवमिति

---

१, भा० प्र० पृ० १९६  २. भा० उ० पृ० १९६

३. म० भा० पृ० १९६  ४. पा० सू० २।१।४

व्युत्पत्त्या कण्ठादिस्थानपरत्वमपि लभ्यते। प्रयत्नपदेन च प्रकृष्टो यत्न इति व्युत्पत्त्या "प्रादयो [1]गताद्यर्थे" इति वचनेन समासे कृते वर्णोत्पत्त्यः व्यवहितपूर्वक्षणभाविनः आभ्यन्तराः गृह्यन्ते। ते च [2]स्पृष्टेषत्स्पृष्टेषद्विवृतसंवृतभेदाः। स्पृष्टादयः पञ्चविधा भाष्यमते, सूत्रमते तु चतुर्विधैव। आस्यपदं यद्यप्यस्यन्ति वर्णान् अनेनेति व्युत्पत्त्या मुखपरं तथापि सर्वेषामेव वर्णानां तस्य समानत्वादव्यावर्तकं स्यादिति कृत्वा आस्ये भवमिति व्युत्पत्त्या तद्धितान्तस्य आस्यशब्दस्य ग्रहणं कृतं भगवता। तच्च कण्ठादिस्थानरूपम्, यद्यप्यास्यभवोऽन्योऽपि पदार्थः ष्ठीवनादिरूपमस्ति तथापि वर्णोत्पत्तावुपयोगित्वेन ताल्वादिस्थानमेव गृह्यते। प्रयत्नपदेन तु प्रशब्दबलेनाभ्यन्तरः ग्राह्य इत्युक्तमेव।

**म० भा०—[3]सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गो भवति। जबगडदशाम्। किं कारणम? प्रयत्नसाम्यात्। एतेषां हि समानः प्रयत्नः।**

(प्र०)—[4]सवर्णसंज्ञायामिति। द्वन्द्वे प्रयत्नस्यास्येनाविशेषणान्मुखप्रयत्नयोस्तुल्यत्वाद् भिन्नस्थानानामपि प्रसङ्गः। भाष्ये शकारः प्रत्याहारपाठवशात्पठितः। अत्र प्रत्याहारे जबगडदानां प्राप्नोतीत्यर्थः। शकारस्य तु विवृतत्वात्स्पर्शानां स्पृष्टत्वादप्रसङ्ग एव। ततश्च ऊर्ज इत्यादौ [5]झरो झरीति लोपप्रसङ्गः।

(उ०)—[6]द्वन्द्वे प्रयत्नस्यास्येनाविशेषणादित्यस्योपयोगश्चिन्त्यः। अत्रेति। एतद्वर्णसमूहसाध्यप्रत्याहार इत्यर्थः। ऊग् अन्नं तस्माज्जात ऊर्जः।

अत्र समीक्षा—यावता च सवर्णसंज्ञाविधायके [7]तुल्यास्येति सूत्रे द्वन्द्वः स्वीक्रियते—आस्ये प्रयत्नः, एवं रूपेण सप्तम्यन्तघटितं समासं विधाय आस्यस्य प्रयत्नविशेषणता नाभ्युपेयते, आस्यशब्दस्य मुखमात्रपर इति चाङ्गीक्रियते तावता तुल्यावास्यप्रयत्नौ यस्येति बहुव्रीहौ कृते सति मुखप्रयत्नयोर्द्वयोरपि तुल्यता अपेक्षिता भविष्यति, यतश्च द्वन्द्वादौ श्रूयमाणं प्रत्येकमभिसम्बध्यत इति न्यायोऽस्ति। तदेवोक्तं प्रदीपकृता श्रीकैयटेन

---

१. का० वा० १११९　　२. वै० सि० कौ० संज्ञाप्रकरणम्
३. म० भा० पृ० १९८　　४. भा० प्र० पृ० १९८
५. भा० प्र० पृ० १९८　　६. पा० सू० ८।४।६५
७. पा० सू० १।१।९

प्रयत्नस्यास्येनाविशेषणादिति। अयं हेतुः सर्वविधप्रयत्नस्य तुल्यत्व उपयुज्यते, तादृशमेवाभिप्रायं मत्वा भगवान् भाष्यकारोऽतिप्रसङ्गमुपस्थापयति [1]जबगडदशामिति। एतेषां वर्णानामाभ्यन्तरः बाह्यश्चोभयविधोऽपि प्रयत्नः समान एव। स्पृष्टरूपः आभ्यन्तरः समानः स्पर्शसंज्ञकत्वात्, बाह्यप्रयत्नेष्वपि संवारो नादो घोषोऽल्पप्राणश्चेति, एते चत्वारः समानाः एव। उक्तं च तत्र [2]स्पृष्टं प्रयत्नं स्पर्शानामिति।

"खयां[3] यमां खयः ≍क ⌒पौ विसर्गः शर एव चेत्यादि"।

एवञ्च द्वन्द्वे प्रयत्नस्यास्येनाविशेषणादित्यस्योपयोगश्चिन्त्य इत्युद्द्योतकारस्योक्तिरेव चिन्त्या प्रतिभाति। अत एवाग्रे उक्तं भगवता भाष्यकृता "सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णमि"ति। एवमपि किमास्योपादाने प्रयोजनम्? सर्वेषां हि तत्तुल्यम्?। प्रत्ययविशेषणमास्योपादानम्। सन्ति ह्यास्याद् बाह्याः प्रयत्नाः, ते हापिताः भवन्तीति। सवर्णसंज्ञायां विभिन्नदेशेष्वप्यतिप्रसङ्गो भवतीति [4]जबगडदशामिति भाष्ये शकार एतद्वर्णसमूहसाध्यप्रत्याहारसूत्रपाठवशात्पठितः। वस्तुतस्तु जबगडदानां प्राप्नोत्येवोचितम्। शकारस्य तु विवृतत्वात् प्रयत्नभेदः।

नन्वेवं तर्ह्यस्तु जबगडदानां सवर्णसंज्ञा को दोष इति चेत्तदपि स्पष्टीकृतं प्रदीपकृता "ऊर्ग्जः" इत्यादौ [5]झलो झलीति लोपप्रसङ्ग इति।

ऊर्ज-बलप्राणनयोरित्यस्माद् ऊर्जयतीति विग्रहे कर्तरि क्विपि तस्मिन् जात ऊर्ग्जः। अत्र हि शकारजकारयोः सावर्ण्यम्, रेफात्परस्य गकारस्य लोपः स्याज्जकारे पर इत्यनिष्टप्रसङ्गः आपतति। अत्र प्रयत्नसामान्यादिति भाष्ये प्रयत्न दिनाभ्यन्तरग्रहणं व्याचक्षाणस्तत्त्वालोककारः राजलक्ष्मीकारश्च चिन्त्यः यस्मिन् विषय उद्द्योतकारस्य चिन्त्योक्तिश्चिन्त्या जाता, तस्मिन् विषय एतयोः का कथा। किं तत्र[6] प्रमाणं यत्र मज्जति मन्दर० इति लोके प्रसिद्धमाख्यानं स्मृतिपथमायाति।

**म०भा०--[7]एवमपि व्यपदेशो न प्रकल्पते। "आस्ये येषां तुल्यो देशः" इति।**

---

१. शि० सू० १०

२. वै सि० कौ० सं० प्र०

३. का० वा० १५९

४. शि० सू० १०

५. पा० सू० ८।२।२६

६. लोकप्रसिद्धिः

७. म० भा० पृ० १९९

**समाधानभाष्यम्–[1]व्यपदेशिवद्भावेन व्यपदेशो भविष्यति।**

(प्र०)—[2]व्यपदेशिवद्भावेनेति। सर्वावस्थायुक्तमास्यमास्यशब्देनोच्यते, देशशब्देन तु विशिष्टैवावस्था वर्णोत्पादनहेतुः। तत्र बुद्धिकृतभेदाश्रयेण व्यपदेशः।

अत्र समीक्षा - अवर्णस्य स्थानं काकलकस्य अधस्तादुपजतुप्रदेश इति कस्यश्चिदाचार्यस्य मतम्, तन्मते वर्णस्यास्याद् बाह्यं स्थानं जातं तद्वारणाय स्थानविशेषणत्वमप्यास्ये देयमिति प्रसङ्गं वारयितुं सर्वमुखं स्थानमवर्णमेक इच्छन्तीति मतान्तरमुक्तं भगवता भाष्यकृता, किन्त्वस्मिन्नपि मत आस्ये येषां तुल्यो देश इति व्यवहारो न युज्यते, यतश्चात्र मतेऽप्यवर्णस्यास्यमेव देशो न त्वास्ये देशः, अभेदे आधाराधेयभावः कथमुत्पद्येत, तदुपरि पुनः समाहितः भगवता भाष्यकृता व्यपदेशिवद्भावेन व्यपदेशो भविष्यतीति।

अयमाशयः—आधारभूत आस्यशब्दः सर्वावस्थायुतं स्वार्थं ब्रूते, आधेयभूतस्तु विशिष्टावस्थायुक्तं तदर्थं वक्तीति कृत्वा बुद्धिकृतभेदाश्रयणेन व्यपदेशः प्रकल्पत एव। अत्र मूलभूता [3]व्यपदेशिवदेकस्मिन्निति परिभाषा मन्तव्या, [4]आद्यन्तवदेकस्मिन्निति सूत्रं प्रत्याचक्षाणेन भगवता भाष्यकृता एषा परिभाषा अङ्गीकृताऽस्ति, एतद्विषयको विचारः विशेषतः तत्रैव विशदी करिष्यते। पुरुषस्य चैतन्यम्, राहोः शिरः, शिलापुत्रकस्य शरीरमित्यादिषु लोकव्यवहारेषु व्यपदेशिवद्भाव एव मूलं सकललोकप्रसिद्धमस्ति, अथवा—[5]शब्दज्ञानानुपातिवस्तुशून्यो विकल्प इति योगदर्शनसिद्धान्तोऽपि तत्र मूलमभ्युपेयम्। एतदनुसारेणैवोच्यते—"अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि"। अयमाशयः शशशृङ्ग-खपुष्प-बन्ध्यापुत्र-कूर्मक्षीरादिरूपेष्वर्थेषु लोकेऽत्यन्तमसत्स्वपि तत्तच्छब्देषूच्चार्यमाणेषु बुद्धौ कोऽप्यर्थाकारो भाषत एव, स चार्थो वैयाकरणैः बौद्धपदार्थ इत्युच्यते। स्वप्नाद्यवस्थायामयमेवार्थः सर्वैरनुभूयते, अतो भेदेऽपि बौद्धभेदमाश्रित्य एतद्भाष्यं सङ्गमनीयमिति दिक्।

**म०भा०–किं[6] पुनरत्र ज्यायः ?**

**समाधानभाष्यम्--सवर्णसंज्ञावचनमेव ज्यायः। दीर्घत्व-**

---

१. म० भा० पृ० २००
२. भा० प्र० पृ० २००
३. म० भा० पृ० २००
४. पा० सू० १।१।२०
५. पातञ्जलियोगसूत्रम्
६. म० भा० पृ० २०६

**न्चैव हि सिद्धं भवति। अपि च ऋकारग्रहणे लृकारग्रहणं सन्निहितं भवति। "ऋत्यकः" षट्वऋश्यः, मालऋश्यः। इदमपि सिद्धं भवति–षट्वलृकारो माललृकार इति।**

(प्र०)—किं [1]पुनरिति। एकैकस्मिन्संहितायां शाकलाभावपक्षे रूपद्वयं साध्यम्। तच्चोभयथाऽपि सिध्यति। तत्र सवर्णसंज्ञायामसत्यां यथा सिध्यति तथा पूर्वमेवोक्तम्। इह तु यथा सिध्यति तथोच्यते (अकः[2] सवर्णे दीर्घ इत्यत्रान्तरतमत्वदीर्घत्वयोरुपादेयविशेषणयोर्विवक्षितत्वादुभयविशिष्टैकासंभवाद्विकल्पः। यश्चान्तरतमो नासौ दीर्घो नासावन्तरतम इति) द्वयोः ऋकारयोः रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदाचिद्रेफद्वययुक्तऋकारो भवति कदाचिद्विवृत ऋकारः। लृकारोऽपि कदाचिदृकारान्तरतम ऋकारः कदाचिद् लृकारान्तरतमो लृकार इति साम्यमुभयोः पक्षयोः।

(उ०)— अत्र पक्षेऽप्युक्तयुक्त्या ह्रस्वऋकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये आद्यस्य ह्रस्वऋकारलृकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये द्वितीयस्य न साधुत्वमिति नातिप्रसङ्गः, पक्षयोस्तुल्यफलता चेति बोध्यम्। तदेव ध्वनयन् पृच्छति भाष्ये किं पुनरत्रेति। ऋकार इति। विवृत इत्यर्थः। ल्लृकार इति। ईषत्स्पृष्ट इत्यर्थः।

अत्र समीक्षा—ऋकारलृकारयोः स्थानप्रयत्नसाम्याभावात् सवर्णसंज्ञा न प्राप्नोतीति कृत्वा सवर्णसंज्ञा वचनमुक्तं वार्तिककृता, तत्फलं च प्रदर्शितं होतृ लृकारः होतृकारः, "अकः[3] सवर्णे दीर्घः" इति दीर्घः सम्पन्नः। ततश्च [4]"ऋति ऋ वा, लृति लृ वा" इति वार्तिकाभ्यामेतत्प्रत्याख्यानं व्यधायि, द्वितीयवार्तिके प्रथमवार्तिकाद् ऋतीति पदमनुवर्त्य पञ्चम्या विपरिणम्य ऋतः लृति परे लृकारादेश इत्यर्थेन दध्य् लृकार इत्यत्र दोषो वारितः। तदन्वनयोर्द्वयोर्वार्तिकयोर्प्रत्याख्यानं भगवता भाष्यकृता अनेन रूपेण कृतम् यद् द्वावप्येतौ ऋलृदीर्घाविति "अकः सवर्णे[5] दीर्घः" इति सूत्रेणैव रूपद्वयं सिद्धं भविष्यति, कदाचिदीषत्स्पृष्टघटितं कदाचिच्च विवृतघटितम्।

पुनश्चाग्रेऽनयोर्वार्तिकयोरवश्यकर्तव्यता उक्ता, यतो [6]ह्यूकालोऽजिति

१. भा० म० पृ० २०६
२. पा० सू० ६।१।१०१
३. पा० सू० ६।१।१०१
४. म० भा० पृ० २०४
५. पा० सू० ६।१।१०१
६. पा० सू० १।१।२७

सूत्रेणानयोः विधीयमानयोः ऋकारऌकारयोरच् संज्ञैव न भवति, ईषत्स्पृष्ट-प्रयत्नजन्यत्वाद् अच्प्रत्याहारे च सर्वेषामचां विवृतप्रत्ययजन्यत्वस्वीकारात् । ततश्चोक्तं भगवता ऋकारस्य ऌकारस्य चाच्त्वं वक्ष्यामीति, [१]सति चाच्त्वेऽनयोर्दीर्घत्वं भविष्यति, तस्माद् द्विमात्रावेतौ दीर्घौ मन्तव्यौ । कस्यचिदाचार्यस्य मते त्वर्धतृतीयमात्रावेताविति, सार्द्धद्वयमात्रमित्यर्थः । तन्मतं तु न समीचीनं यतो हि तन्मते सत्यप्यच्त्वे द्विमात्रत्वाभावाद् एतयोर्दीर्घसंज्ञा न प्राप्नोति । एवञ्चेदमच्त्वं त्वयाऽप्यवश्यं वक्तव्यम्, अन्यथा—"ऋति[२] ऋ वा, ऌति ऌ वा" इति वार्तिकाभ्यामेतयोर्विधानमात्रमेव स्याद् नाच्त्वं प्रयुक्तं प्लुतादिकार्यम् । अच्त्वे सति तु त्रिमात्रयोरपि ताभ्यां सावर्ण्याद् ग्रहणे सति प्लुप्तसंज्ञा भविष्यतीति प्लुतः सिध्यति । अस्यां परिस्थितौ भाष्ये जिज्ञासा स्थापिता, किं पुनरत्र[३] ज्याय इति ।

अयमाशयः सवर्णसंज्ञापक्षेऽप्येतद्रूपद्वयम् "अकः सवर्णे[४] दीर्घः" इत्यनेन साधितं भवति । एतद् वार्तिकद्वयपक्षेऽपि तादृशमेव रूपद्वयं साधितं भवति ।

अयमाशयः—द्वयोः ऋकारयोः सखण्डत्वपक्षे रेफद्वयमुक्तत्वाद् विवृतत्वाच्च कदाचिद्रेफद्वयमुक्तः ऋकारो भवति, स चेषत्स्पृष्टप्रयत्नजन्यः, कदाचिच्च विवृतः ऋकारः ऌकारोऽपि ऋकारान्तरतमः ऋकारः कदाचिद् ऌकारान्तरतमः ऋकारः, स चेषत्स्पृष्ट इति कृत्वा द्वयोः पक्षयोस्तुल्यफलता आगताः, अतश्चोक्तं भगवता किं पुनरत्र ज्याय इति ।

तत्र समाहितं सवर्णसंज्ञाविधायकं वचनमेव ज्यायः । अन्यदपि [५]फलं ततः सिद्धं भवति, तथा हि ऋकारऌकारयोः सावर्ण्ये [६]ऋकारग्रहणेनाणुदित्सूत्रबलाद् ऋकारग्रहणेन ऌकारस्याऽपि ग्रहणं भवति, तेन "खट्व ऋश्यः" इत्यत्र यथा "ऋत्यकः[७]" इति सूत्रं प्रवर्तते तथैव "खट्वऌकारः" इत्यत्रापि प्रवर्त्स्यति । वा [८]सुप्यापिशलेरिति यथा उपार्कारीयतीत्यादौ विकल्पेन वृद्धिं विदधाति तथैव उपाल्कारीयतीत्यादिष्वपि ।

नन्वनयोः सावर्ण्ये "उरण् रपरः[९]" इत्यनेन ऌकारस्याऽपि रपरत्वं प्राप्नोतीति न शङ्क्यम्, [१०]तत्र लपरत्वं वक्ष्यामीत्येवं रीत्या भगवतैव

१. म० भा० पृ० २०५
२. म० भा० पृ० २०४
३. म० भा० पृ० २०६
४. पा० सू० ६।१।१०१
५. म० भा० पृ० २०६
६. पा० सू० १।१।६९
७. पा० सू० ६।१।१२८
८. पा० सू० ६।१।९२
९. पा० सू० १।१।५१
१०. म० भा० आ० सू० १।१।७७

समाहितत्वात्। तस्यायमाशयः यद् "रपरः" इत्यत्र "र" इति पदे [१]"लण्" घटकाकारेण प्रत्याहारो मन्तव्यः। तत्र रेफलकारयोरुभयोर्बोधो भविष्यति। तत्रान्तरतम्याद् ऋकारस्याण् रपरः ऋकारस्याण् लपरः, यदि अनयोः सवर्णसंज्ञा न स्यात्तदा "उरण् रपरः[२]" इति सूत्रे ऌकारग्रहणं कर्तव्यं भवति। इत्येवं भाष्याभिप्रायः प्रकाशितः प्रदीपकृता श्रीकेयटेन, परन्तु उद्द्योतविधात्रा श्रीनागोजीभट्टेन "र"प्रत्याहारो नाभ्युपगतः, अपितु तद्विरोधे उक्तं यत् "लण्"सूत्रस्थाकारस्य अनुनासिकत्वे "अतोल्रान्तस्ये[३]"-त्यत्र भगवान् पाणिनिः लकारो नोच्चारितवान्, प्रत्याहारेणैव निर्वाहात्। तस्मादपूर्ववचनं कार्यमित्येव भाष्याशय इत्युच्यते।

अत्रेदमालोच्यते यद् "अतोल्रान्तस्ये[४]"ति लकारोच्चारणेन रप्रत्याहारोऽनित्य इत्येवं मन्तव्यं न तु सर्वथा नास्त्येव इति। अनित्यत्वस्य तात्पर्यं तु "उरण् रपरः[५]" इत्यादि सूत्रघटिते रशब्दे रेफोत्तरवर्ति अकारः क्वचिदनुनासिकः क्वचिच्च नेत्यत्र व्याख्यानमेव शरणम्। यथा "उरण् रपरः[६]" इत्यत्र अण्प्रत्याहारसाहचर्यमूलकाद् व्याख्यानात् "र" इत्यपि प्रत्याहारः। अतश्चात्रत्योकारः अनुनासिकः "रषाभ्यां[७] नो णः समानपदे" इत्यत्र षकारसाहचर्येण वर्णमात्रपरः इति न तत्र प्रत्याहारग्रहणम्। अतश्च "प्रकल्पने" इत्यादौ न णत्वम्। "रदाभ्यां[८] निष्ठातो नः पूर्वस्य च दः" इति सूत्रेण यथा तीर्णं, जीर्णमित्यादौ णत्वं भवति। तथा प्रफुल्लतेत्यादौ लकारात् परस्य तकारनत्वं न शङ्कनीयम्। तत्रापि दकारसाहचर्येण वर्णमात्रपरत्वाद् एवञ्च सवर्णसंज्ञावचनं सिद्धान्तितं भगवता, क्वचिच्च साङ्कर्यमपि प्राप्नोति, [९]तथा "रषाभ्यामि"ति सूत्रे "ऋवर्णान्तस्य [१०]णत्वं वाच्यमि"ति वार्तिकेन धातृणाम्, मातृणामित्यादौ यथा णत्वं भवति। तथा "क्लृप्यमानं पश्य" इत्यादावपि प्राप्नोति। एवमेव "पुषादिद्युतादि[११] ऌदितः परस्मैपदेषु" इति यथा ऌदितो धातोश्च्लेरङ् विदधामि तथैव ऋदितोऽपि प्राप्नोति। एवमेव [१२]"नाग्लोपिशास्वृदितामि"ति सूत्रं यथा ऋदितधातुविषये प्रवर्तत तथैव

---

१. शि० सू० ६
२. पा० सू० १।१।५१
३. पा० सू० ६।२।२
४. पा० सू० ६।२।२
५. पा० सू० १।१।५१
६. पा० सू० १।१।५१
७. पा० सू० ८।४।१
८. पा० सू० ८।२।४२
९. पा० सू० ८।४।१
१०. का० वा० ३९६
११. पा० सू० ३।१।५५
१२. पा० सू० ७।४।२

लृदित धातावपि प्रवर्तेत। एतेषां दोषाणां निरासायोक्तं प्रदीपकृता [1]"ऋदितां लृदितां च भेदेन अनुबन्धनिर्देशाद् भेदेन चोपादानाद् अनुबन्ध-कार्येषु परस्परग्रहणाभावात् साङ्कर्याभावः।

एतदुपरि उद्द्योतकृता उच्यते—भेदेनेति ओण्, गम्लृ इति भेदेनानु-बन्धनिर्देशाः। [2]"नाग्लोपिशास्वृदितां", [3]"पुषादिद्युताद्लृदितः परस्मैपदेषु" इति भेदेनोपादानमित्यर्थः।

अयमभिप्रायः "ऋलृवर्णयोः[4] सावर्ण्यं यदि नियमेनाभिप्रेतं स्यात्तदा भगवान् पाणिनिः धातुपाठे क्वचित् ऋकारं क्वचिच्च लृकारमनुबन्धत्वेन न कुर्यात्। किन्तु सर्वत्र एकमेव ऋकारं वा लृकारं वा कुर्यात्। किन्तु नैतादृशमाचरितवान्। अतो ज्ञायते यत् सावर्ण्यविधानमनित्यं लक्ष्यानु-रोधात् व्यवस्थितामित्यर्थः।

एवमेव पूर्वोक्त-"र"प्रत्याहारविषयेऽपि व्यवस्था मन्तव्या "[5]अतो-ल्रान्तस्येत्यत्र लकारोच्चारणमदृष्टार्थमेव अभ्युपेयमिति दिक्।

**म० भा०—[6]स्यादभेदो यदि नित्यो लोपः स्यात् विभाषा तु स लोपः।**

(प्रदीपः)—इतर आह—[7]स्यादभेदो यदि नित्यो लोपः स्यात् विभाषा तु स लोप इति। ततो नास्ति भेद इत्यर्थः। समाधानभाष्यम्—यथा अभेदः तथास्तु नाज्झलौ। प्रदीपः—द्विर्वचनमपि विभाषा [8]यरोऽनुनासिके-ऽनुनासिको वेत्यतो वेत्यनुवर्तनात्। लोपोऽपि विभाषा "[9]झयो होऽन्यतर-स्यामि"त्यतोऽन्यतरस्यामित्यनुवर्तनादित्यर्थः।

(उ०)—[10]झयो हय—इति। इदं वृत्तिरीत्या भाष्यरीत्या च [11]"वाऽवसाने" इत्यत इति बोध्यम्।

---

१. म० भा० आ० सू० प्र० १।१।७।७
२. पा० सू० ७।४।२
३. पा० सू० ३।१।५५
४. म० भा० पृ० २०४
५. पा० सू० ७।२।२
६. म० भा० आ० सू० १।१।४।७
७. प्र० पृ० २११
८. पा० सू० ८।४।४५
९. पा० सू० ८।४।६२
१०. उ० पृ० २११
११. पा० सू० ८।४।५६

समीक्षा—[1]"नाज्झलौ" इति सूत्रे अज्झलोः सावर्ण्यप्रतिषेधं शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति। यतो हि—

[2]नाज्झलावित्यत्र अच्पदबोध्येकारः सवर्णग्रहणेन शकारमपि गृह्णाति, इति रीत्या अच्त्वमायाति, हल्प्रत्याहारे उपदिष्ट एव सकार इति हल्त्वं तत्र सुतरां वर्तते अतश्च परश्शतानि कार्याणीत्यत्र "[3]झरो झरि सवर्णे" इति लोपो न प्राप्नोति। अत्र वर्तते शकारत्रयम्, शतात् पराणि इति विग्रहे "[4]कर्तृकरणे कृता बहुलमि"ति बहुलवचनात् समासे, पारस्करादित्वात् सुडागमे सकारस्य श्चुत्वे "[5]अनचि चे"ति द्वित्वे च सति शकारत्रितय-घटितमेतत् रूपं सिध्यति। तत्र "[6]झरो झरि" इति वैकल्पिके लोपे कदाचित् द्विशकारमपि भवति तच्चेदानीं न सिध्येत्। "[7]नाज्झलौ" इत्यनेन शकारयोः अज्झल्त्वाभ्यां शकारयोः अच्त्वहल्त्वाभ्यां सावर्ण्यनिषेधात्। तत्रोच्यते भाष्यकृता [8]शकारस्य अनच्त्वात् नास्ति दोषः अनच्त्वे हेतुरुक्तः वाक्या-परिसमाप्तेर्वा इति। अत्र भाष्ये वाशब्दघटितः पाठः उचितो न प्रतिभाति, यतो हि एकस्मिन् साध्ये हेतुविकल्पो भवति न तु साध्यभेदे। अल् तु [9]प्रयोगसिद्धौ, अनश्वं हेतुः अनश्वत्वे तु [10]वाक्यापरिसमाप्तेर्हेतुः इति तुल्यार्थस्तु विकल्पयेरन् इति मीमांसासिद्धान्तेन व्याकरणस्यानुप-पत्तिरेवायाति।

अत्रोच्यते शकारस्य शकारेण सवर्णसंज्ञा भवतु, मा वा भवतु अस्तु वेकारेण शकारस्य ग्रहणमिति प्रतिज्ञाविकल्पेऽर्थे वाशब्दस्य प्रयोग उपपन्न एव। पुनश्चाग्रे "परश्शतानि" इति लक्ष्ये लोपाभावेन प्रयोगभेदानुपपत्ति-मुत्थाप्य नास्ति भेदो [11]सत्यपि लोके द्विशकारकमेव द्विर्वचनस्य विभा-षितत्वादित्युक्तम्। तदनु द्विर्वचनस्य विभाषितत्वेऽप्यसतिलोपे कदाचिद् द्विशकारकं कदाचित् त्रिशकारकम्, सतिलोपे तु द्विशकारकमेवेत्येवं

---

१. म० भा० आ० सू० १।१।४।७
२. म० भा० आ० सू० १।१।५।७
३. पा० सू० ८।४।६५
४. पा० सू० २।१।३२
५. पा० सू० ८।४।४७
६. पा० सू० ८।४।६५
७. पा० सू० १।१।१०
८. म० भा० पृ० २०७
९. म० भा० पृ० २१०
१०. म० भा० पृ० २११
११. म० भा० पृ० २११

शङ्कितम् । तस्य भेदस्यापनोदनाय उक्तं भगवता भाष्यकृता—[1]स्याद् भेदः यदि नित्यो लोपः स्यात्, विभाषा तु सलोप इति ।

अयमाशयः लोपस्य नित्यत्व एवोक्तो भेदो भवितुमर्हति, परन्तु लोको विभाषितः, अतो न भेदः, इदमेवोपसंहृतं [2]भाष्यकृता यथा अभेदस्तथा अस्त्विति ।

अयमभिप्रायः—यथा [3]"यरोऽनुनासिकेऽनुनासिको वा" इत्यतः वाशब्द-स्यानुवर्तनाद् [4]"अनचि चे"ति द्विर्वचनं विभाषितं भवति । तथैव "झरो झरि [5]सवर्णे" इति लोपोऽपि "झयो [6]होऽन्यतरस्यामि"त्यतोऽन्यतरस्यामिति पदानुवर्तनेन, वैकल्पिक एव ।

अत्रोद्द्योतकारः श्रीनागोजिभट्ट इत्थं व्याचष्टे [7]यदिदमन्यतरस्यां पदानुवर्तनं प्राचीनवृत्तिकरीत्योक्तम् । अष्टाध्याय्याः पाठभेदं विदधतुः भाष्यकारस्य मते तु [8]"वाऽवसाने" इत्यतः वाशब्दानुवृत्तिर्बोध्या । एवं च रूपभेदाभावः सुसम्पन्न एव, अर्थात् कदाचित् द्विशकारकं कदाचिच्च त्रिशकारकमित्येवं सिद्धान्तं स्वीकर्तव्यम् ।

इति महाभाष्य-समीक्षणे द्वितीयोऽध्यायः चतुर्थः पादश्च ।



---

१. पा० सू० ८।४।४५
२. पा० सू० ८।४।४७
३. पा० सू० ८।४।६५
४. पा० सू० ८।४।४५
५. पा० सू० ८।४।४७
६. पा० सू० ८।४।६५
७. पा० सू० ८।४।६२
८. भा० उ० पृ० २११
९. पा० सू० ८।६।५६

# अथ तृतीयोऽध्यायः

म० भा०—[1]किं पुनः प्लुतस्य प्रगृह्यसंज्ञावचने प्रयोजनम् ? प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात्। मा भूदेवम्। प्लुतः प्रकृत्येत्येवं भविष्यति।

नैवं शक्यम् उपस्थिते हि दोषः स्यात् "अप्लुतवदुपस्थिते" इति। अत्र पठिष्यति ह्याचार्यः वद्वचनं प्लुतकार्यप्रतिषेधार्थम्। प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वाद् इति। तस्मात्प्लुतस्य प्रगृह्यसंज्ञैषितव्या। प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात्।

(प्रदीपः)—[2]उपस्थिते हीति। उपस्थितः अनार्ष इति करणः अग्नी इति इत्यत्र प्लुताश्रये प्रकृतिभावे प्रतिषिद्धे प्रगृह्याश्रयः प्रकृतिभाव इष्यते। तदाह—पठिष्यतीति। यत्र प्रगृह्यसंज्ञा नास्ति, स प्लुताश्रयप्रकृतिभावप्रतिषेधविषयः—देवदत्ता इति देवदत्तेति।

(उद्द्योतः)—[3]प्रतिषिद्धे इति। अप्लुतवदभावेन बाधिते इत्यर्थः। भाष्ये प्रगृह्यप्लुतप्रतिषेधेति। प्रगृह्याश्रये प्रकृतिभावे प्लुतप्रतिषेधप्रसङ्ग इत्यर्थः। प्रगृह्याश्रयस्यापि कुतो न निवृत्तिरित्यत आह—अन्येनेति। प्रगृह्यः प्रकृत्येत्यनेनेत्यर्थः। नन्वीदृशेऽपि विषये प्रगृह्याश्रयप्रकृतिभावे सति प्लुताश्रयप्रकृतिभावप्रतिषेधोऽप्लुतवदिति बोधितो व्यर्थ इत्यत आह—यत्रेति।

समीक्षा—[4]ईदूदेदिति सूत्रे ईदादिषु तपरकरणेन दीर्घाणामेव ईकारादीनां प्रगृह्यसंज्ञा स्यान्नतु त्रिमात्रिकाणां प्लुतानाम्।

तथोक्तं भगवता—प्लुतविधेस्त्रैपादिकत्वात् प्रगृह्यसंज्ञायाः सापादिकत्वेन तां प्रति प्लुतस्यासिद्धत्वात् भविष्यति प्रगृह्यसंज्ञा। तदनुप्रोक्तं

---

१. म० भा० आ० सू० १।१।५।१ २. प्र० पृ० २१३

३. उ० पृ० २१३ ४, पा० सू० १।१।११

भाष्यकृता—[1]"कार्यकालं संज्ञापरिभाषम्, संज्ञासूत्रं परिभाषासूत्रञ्च कार्यार्थं भवति, कार्यं च प्रधानं भवति" इति यत्र कार्यविधायकं सूत्रं तत्रेदमपि उपस्थितं भवति। एवञ्च तदेकवाक्यतापन्नं संज्ञासूत्रमपि तद्देशस्थं भवति, अतश्चासिद्धत्वं न भविष्यति।

अस्मिन् प्रसङ्गे आक्षेपं परिहरन् भगवान् भाष्यकारो ब्रवीति—किं पुनः [2]प्लुतस्य प्रगृह्यसंज्ञावचने प्रयोजनम्।

अयमाशयः—व्याकरणशास्त्रे या या संज्ञा सा सा फलवती, तर्हि प्लुतस्य प्रगृह्यसंज्ञाकरणे किं प्रयोजनमस्ति ? यदि नास्ति किमपि प्रयोजनं तर्हि किमर्थं प्रगृह्यसंज्ञा विधीयते ?

तत्र [3]समाधीयते प्लुतस्य प्रगृह्यसंज्ञायां प्रकृतिभावः फलमस्ति।

ननु प्लुतत्वादेव प्रकृतिभावः सिध्यति इति नास्ति इदं फलमिति चेदुच्यते—नैवं [4]शङ्क्यम्, उपस्थितेऽवैदिके इतिशब्दे दोषः स्यात्।

तथा हि—अप्लुतवदुपस्थिते इत्यत्र यद्ग्रहणस्यैव फलमस्ति, यत् प्लुतस्याप्लुतवत्कार्यं स्यात्। न तु प्लुतत्वप्रयुक्तं प्रकृतिभावादिकार्यं भवति। यदि वद् ग्रहणं न क्रियते, तदा प्लुत एव निषिध्येत्। ततश्च त्रिमात्रिकस्य श्रवणं न स्यात्। प्रकृतिभावस्तु प्रगृह्यसंज्ञाप्रयुक्तस्तिष्ठति। एतदर्थं प्लुतस्य प्रगृह्यसंज्ञा विधेया।

नन्वेवं तर्हि प्लुतप्रयुक्तप्रकृतिभावस्य कुत्र प्रतिषेधः स्यादिति शङ्कायामुच्यते—यत्र [5]प्रगृह्यसंज्ञायाः अवसरो नास्ति "देवदत्ताः इति" इत्यादौ एवञ्च अप्लुतवदुपस्थिते इति सूत्रविहितः प्लुताश्रयप्रकृतिभावप्रतिषेधो न व्यर्थ इति भाष्याभिप्रायः।

**म० भा०–[6]प्लुतभावो प्रकृत्येत्येवमेतद् विज्ञायते।**

(प्रदीपः)—[7]प्लुतभावीति। प्लुतो भावी यस्य सः प्लुतभावी स्थानी प्रकृतस्तस्यैव प्रकृतिभावः। ननु प्लुतस्यासिद्धत्वात्स्थान्यपि प्लुतभावित्वात्

---

१. म० भा० पृ० २१३
२. म० भा० पृ० २१३
३. म० भा० पृ० २१६
४. म० भा० पृ० २१६
५. प्र० पृ० २१३
६. म० भा० आ० सू० १।१।५।१
७. प्र० पृ० २१५

प्लुतव्यपदेशं कथं लभते ? नैष दोषः प्लुतो ह्यस्य भावीति बुद्ध्या प्रकल्पनमेतत् । न च प्लुतस्यासिद्धत्वम्, अन्यथा प्लुतोऽसिद्ध इत्ययमपि व्यवहारो न स्यात् ।

(उद्द्योतः)—[1]कर्मधारयभ्रमं व्युदस्यति—प्लुतो भावीति । यद्यप्याश्रयात्सिद्धत्वेनापि सिध्यति, तथापि शास्त्रबाधापेक्षया लक्षणाश्रयणमुचितमिति भाष्याभिप्रायः । प्रकृत इति । प्लुतशब्देन बोधित इत्यर्थः । बुद्ध्येति शास्त्रीये कार्येऽसिद्धत्वम्, न चायं व्यवहारः शास्त्रीयं कार्यमिति भावः ।

समीक्षा—[2]"इदूदेदि" ति सूत्रे भाष्यकृता शङ्कितम्, यदि [3]ह्रस्वानाम् अतपराणां प्रगृह्यसंज्ञा उच्यते तर्हि "अकुर्वहि अत्र" इत्यत्रापि प्रगृह्यसंज्ञा प्रसिध्येत्, तद्वारणाय दीर्घाणामेव तपराणा प्रगृह्यसंज्ञा वक्तव्या भविष्यति । तस्यां स्थितौ प्लुतानां सा न प्राप्नोति इति । तदर्थं यदि प्लुतस्यासिद्धत्वं स्वीकृत्य कार्यनिर्वाहो विधीयते तदा पूर्वभाष्यविरोध आपतति ।

यतो हि—"प्लुतप्रगृह्या [4]अची" ति ज्ञापकमाश्रित्य प्लुतस्य स्वरसन्धिविषये सिद्धत्वमुक्तं भगवता । तत्र एतद् समाधीयते "[5]प्लुतभावी प्रकृत्या" इत्यादि ।

अत्र प्रदीपकृतोऽयमभिप्रायः यत् "प्लुतो भावी यस्य सः प्लुतभावी" इत्यनेन स्थानी ग्राह्यः, तस्यैव प्रकृतिभावः कर्तव्यः कर्मधारयसमासेन विधेयः ततः इष्टलाभो न भवेत् ।

ननु सूत्रे "प्लुत"शब्दप्लुतभावित्वव्यपदेशं कथं लभते, इति जिज्ञासायामुक्तम् उद्द्योतकृता लक्षणया अयमर्थो [6]लब्धव्यः, एवञ्च यद्यपि प्लुतरूपस्य उद्देश्यस्य अप्रसिद्ध्या एतत् सामर्थ्यात् [7]"पूर्वत्रासिद्धमि" ति सूत्रं बाधितुं शक्यते, तथा सति शास्त्रबाधः स्यात्, तदपेक्षया सूत्रघटकप्लुतपदस्य शक्तिबाधो लाघवात् समुचितः ।

यद्यपि प्लुतस्यासिद्धत्वात् तत्स्थानिनाऽपि प्लुतभावीत्वेन प्लुतव्यपदेशः कथं लभ्येदिति जिज्ञासा उदेति, तथापि अस्य स्थानिनः प्लुतो भावी इति

---

१. उ० पृ० २१५
२. म० भा० आ० सू० १।१।५।१
३. म० भा० पृ० २१४
४. पा० सू० ६।१।१२५
५. म० भा० पृ० २१५
६. उ० पृ० २१५
७. पा० सू० ८।२।१

बुद्धया एतत् प्रकल्पिते, अस्याश्चावस्थायां प्लुतस्यासिद्धत्वं भवितुं नार्हति, यतो हि सापादिके पूर्वशास्त्रे कर्तव्ये त्रैपादिकस्य परशास्त्रस्यासिद्धत्वं विधीयते [1]'पूर्वत्रासिद्धमित्यनेन। न तु बुद्धिप्रयोज्यव्यवहारे तस्य शास्त्रीय-कार्यत्वाभावात्।

अन्यथाऽप्लुतो सिद्धः इत्ययमपि व्यवहारः कथं स्याद् एवञ्च प्लुतशब्दस्य प्लुतभावीनि स्थानीनि लक्षणामाश्रित्य इदं समाहितं भगवता [2]'प्लुतभावी-प्रकृत्या इति।

**म० भा०--[3]एवं तर्हि किं न एतेन यत्नेन--"कार्यकालं संज्ञापरिभाषम्" इति। यथोद्देशमेव संज्ञा परिबाषम्। अत्र चासावसिद्धः। तस्यासिद्धत्वात्तत्काला एव भवन्ति।**

(प्रदीपः)—[4]यथोद्देशपक्षाश्रयेण परिहारः—कथं पुनरयं पक्षो यावता कार्यार्थत्वात्संज्ञापरिभाषस्य कार्यकालतैव न्याय्या। नैष दोषः। पदाऽनुद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमभिसन्धाय भविष्यति किञ्चिदनेन प्रयोजनमिति संज्ञापरिभाषं प्रणीयते, तदा संभवत्येवायं पक्षो यथाश्रुतग्राहिप्रतिपत्रपेक्षः। महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्रपेक्षस्तु कार्यकालपक्षः।

(उद्द्योतः)— [5]यथोद्देशेति। नन्वत्र पक्षेऽग्नी इ इत्यादि प्लुतस्यासिद्धत्वेन ततः प्रागेव प्लुताऽभावपक्षेऽनुनासिकप्रतिबन्धेन फलवत्यां संज्ञायां ततः प्लुते तं द्विमात्रत्वेन पश्यन्त्या अपि संज्ञायाः पुन. प्रवृत्तौ बीजाभावादलिविधित्वेन स्थानिवत्वाभावाच्चाप्रगृह्यत्वेनानुनासिकः स्यादिति चेन्न। संज्ञायाः कार्यार्थतया पुनः प्रवृत्तौ कार्यसिद्धिरूपबीजस्य सत्वेन पुनस्तस्याः सुलभत्वात्। एतदेव ध्वनयता प्लुतस्यासिद्धत्वात्तत्काला एव भवन्तीत्येवकारः प्रयुक्तः। प्लुतात्प्राक् संज्ञायां च तत्काला एवेति तदर्थं इत्यलम्। प्रणीयते बोध्यते।

समीक्षा—[6]"प्लुतप्रगृह्या अची"ति सूत्रे प्लुतस्य उद्देश्यत्वेन आश्रयण-सामर्थ्यात् स्वरसन्धौ कर्तव्ये प्लुतस्यासिद्धत्वमुक्तं भगवता भाष्यकृता।

---

१. पा० सू० २।१
२. म० भा० पृ० २१५
३. म० भा० आ० सू० १।१।५।१
४. प्र० पृ० २१५
५. उ० पृ० २१५
६. पा० सू० ६।१।१२५

तस्य फलमपि उक्तम्—[१]"अप्लुतादप्लुत" इत्येतद् न वक्तव्यं भवति, प्लुतस्यासिद्धत्वे अतो अति, इति तपरकरणादेव उक्तवारणात्। तदुपरि पुनः शङ्कितं भगवता यत् स्वरसन्धिविषये यद्यपि सिद्धत्वं ज्ञाप्यते, संज्ञावृत्तिविषये तु असिद्धत्वं तदस्थमेव, एवञ्च प्लुतस्यासिद्धत्वात् द्विमात्रिकादेव ईदादयो भविष्यन्ति अलमत्रसूत्रे तपरकरणेन, तत्र च समाहितं कार्यकालपक्षमाश्रित्य यत्र कार्यं तत्र उपस्थितं द्रष्टव्यम्। एवञ्च "प्लुतप्रगृह्या अचि नित्यमि"ति सूत्रे प्रगृह्यसंज्ञाविधायकसूत्रस्य उपस्थितिर्भविष्यति, एवञ्च तद्देशीयत्वमेव अस्य संज्ञा सूत्रस्य आयास्यति।

अत एवोक्तं भगवता भाष्यकृता "आयादिभ्यः पराप्रगृह्यसंज्ञा" इति।

अतश्च स्वरसन्धिप्रकरणमध्यपदकत्वाद् इदं संज्ञासूत्रमपि स्वरसन्धिप्रकरणीयं सूत्रं समपद्यत। एवमपि "अग्नी इ" इत्यत्र अप्रगृह्यस्येति अनुनासिकप्रतिषेधे क्रियमाणे प्लुतस्य असिद्धत्वात् प्रगृह्यसंज्ञा न प्राप्नोति, [२]इति अणोऽप्रगृह्यस्यानुनासिकः, इति अनुनासिकादेशः प्रसह्येत।

**अत्रोच्यते भगवता "एवं तर्हि किम्[३] एतेन यत्नेन" इत्यादिना।**

अयमभिप्रायः "कार्यकालं [४]संज्ञापरिभाषम्" इति पक्षं परिहार्य [५]यथोद्देशमेव संज्ञापरिभाषम् इत्येष पक्षो मन्तव्यः। यद्यपि संज्ञापरिभाषयोः कार्यार्थत्वात् कार्यविधायकसूत्रेण सह एकवाक्यतारूपा कार्यकालतैव स्वीकर्तुमुचिता, तथापि प्रयोजनविशेषमनुद्दिश्य यदा प्रयोजनसामान्यम् उपदिष्टं भवति [६]तदा "भविष्यत्यनेन किञ्चित् प्रयोजनमि" ति संभावनया अयमपि (यथोद्देशपक्षोऽपि) पक्षः सम्भवत्येव।

प्रदीपकृता अस्य पक्षस्य विशेषणमुक्तं यथा "[७]श्रुतग्राहिप्रतिपत्रपेक्ष" इति।

अयमाशयः—यथा श्रुतं गृह्णाति तच्छील इति श्रुतग्राही, गुरुमुखाद् यादृशं श्रुतं तादृशं श्रद्धाऽतिशयेन गृह्णात्येव, तत्र न शङ्कामुत्पादयति यद् "भो गुरो एतस्य संज्ञासूत्रस्य इदानीं का आवश्यकतेति।" एतादृशः यथा "श्रुतग्राही चाऽसौ प्रतिपत्ता च" इति कर्मधारयसमासे कृते यथा "श्रुत-

१. पा० सू० ६।१।१२५
२. पा० सू० ८।४।५७
३. म० भा० पृ० २१५
४. म० भा० पृ० २१५
५. म० भा० पृ० २१५
६. प० शे० प० २-३

ग्राहिप्रतिपत्ता" इति शब्दः साधुर्भवति, इति तादृशं प्रतिपत्तारमपेक्षते, इति कर्मण्यणि षष्ठीसमासे च समस्तस्य शब्दस्य साधुता बोद्धव्या, एवञ्च श्रद्धालुछात्राणां कृते श्रद्धाऽतिशयमूलकोऽयं पक्षः स्वीकृता भाष्यकृता, तद्-भिन्नानां छात्राणां कृते तु द्वितीयः [1]कार्यकालपक्षोऽभ्युपेतः तत्र विशेषणम् उपात्तं प्रदीपकृतैव महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्रपेक्षः इति।

महावाक्यार्थस्य विधिसूत्रीयस्य पर्यालोचने प्रवृत्तो यः प्रतिपत्ता तमपेक्षतेऽसौ।

अयमाशयः "[2]सिचि वृद्धिः परस्मैपदेषु" इत्यादि विधिसूत्रे "[3]अङ्गस्ये"ति सूत्रस्याधिकार आयाति ततश्चाङ्गस्य वृद्धिः स्यात् परस्मैपदपरे सिचि, इत्येव सूत्रार्थः स्यात्, ततश्च हलन्त्यस्यापि अङ्गस्य वृद्धिप्रसङ्गो भविष्यति तद्वारणाय "[4]इको गुणवृद्धी" इति परिभाषासूत्राद् इक्पदमुपस्थितं भवति तस्य च अङ्गे विशेषणत्वात् "येन [5]विधिस्तदन्तस्य" इत्यनेन तदन्तविधौ सति इगन्तस्य अङ्गस्येति अर्थः सम्पद्यते, पुनश्च "[6]अलोऽन्त्यस्ये"ति परि-भाषासूत्रतः अन्त्यस्य अलः इति पदद्वयमुपस्थाप्य तत्र इगन्तस्य अङ्गस्येति भेदेन विशेषणमभ्युपेत्य इगन्तस्य अङ्गस्य अन्त्यस्यालः इत्यर्थः सम्पद्यते।

पुनश्च [7]षष्ठी स्थाने योगा, इति परिभाषासूत्रबलेन "स्थाने" इति अनुयोगीपदमुपस्थापितं भवति, तदनु वृद्धिपदस्य परस्मैपदस्य च कोऽर्थः इति जिज्ञासायां "[8]वृद्धिरादैच्" "लः [9]परस्मैपदमि"ति च सूत्रद्वयं क्रमेण उपस्थितं भवति, ताभ्यां पदद्वयी संज्ञिनौ बोद्धव्येते। तथा हि "वृद्धिरादैच्" इत्यनेन आदैच्रूपः संज्ञी "लः [10]परस्मैपदम्" इत्यनेन च लादेशरूपश्च सः ज्ञायते, एवञ्च इगन्तस्याङ्गस्य अन्त्यस्यालःस्थानी "आदैज्"रूपो वृद्ध्यादेशः स्यात्, लादेशरूपपरस्मैपदपरके सिचि परे, इत्येवं रूपो महावाक्यार्थः सम्पद्यते।

पूर्वं तावत् प्रकृतसूत्रघटकपदैः निर्मितं वाक्यं लघुवाक्यं तदेव चानेक-परिभाषासूत्रसंज्ञासूत्राणां तत्तद्पदोपस्थित्या गुरुतरं जातमिति महावाक्य-

---

१. म० भा० पृ० २१५
२. पा० सू० ७।२।१
३, पा० सू० ६।४।१
४. पा० सू० १।१।३
५ पा० सू० १।१।७२
६. पा० सू० १।१।५२
७. पा० सू० १।१।४९
८. पा० सू० १।१।१
९. पा० सू० १।४।९९
१०. पा० सू० १।४।९९

मित्युच्यते, नानावाक्यानां एकवाक्यतया सम्पादितं यद्वाक्यं तद्महावाक्यमित्युच्यते।

इदमेव च मीमांसाशास्त्रे अङ्गाङ्गिभावापन्नं वाक्यं महावाक्यं कथ्यते, यथा—[1]"दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत्" इति विधिवाक्यम् आङ्गीवाक्यमुच्यते तदङ्गतया "बर्हिर्यजति" "इजो यजति" "तदनुपातं यजति" "समिधो यजति" इत्यादि रूपाणि प्रयाजवाक्यानि निर्दिशानि द्वयोः अङ्गाऽङ्गिभावापन्नत्वाद् एकवाक्यतायां महावाक्यं भवत्येव, एवमेव विधिवाक्यार्थवादवाक्ययोः एकवाक्यतायां महावाक्यताबोध्याः।

एकवाक्यता चात्र द्विविधा—पदैकवाक्यता, वाक्यैकवाक्यता च।

निरूप्यनिरूपकभावापन्नविषयताप्रयोजकपदघटितत्वरूपा आद्या।

उपजीव्योपजीवकभावापन्नबोधकप्रयोजकत्वरूपा द्वितीया।

तत्र संज्ञापरिभाषासूत्राभ्यां पदोपस्थितिपक्षे पदैकवाक्यता भवति, यथा [2]"सिचि वृद्धिरिति" सूत्रे अङ्गस्येत्यनेन सह "इकः" इत्यस्य या एकवाक्यता सा पदैकवाक्यता एव। तत्र अङ्गपद विशेषताप्रयोजकम् "इकः" इति पदञ्च विशेषणताप्रयोजकम्, अनयोर्द्वयोर्विषयतयोः नित्यसाकांक्षत्वात् निरूप्यनिरूपकभावोऽप्यस्त्येव, एवञ्च तादृशविषयताद्वयप्रयोजकपदद्वयघटिका एषा पदैकवाक्यता, एवमेव "इको [1]यणचि" इत्यत्राऽपि "अचि" इति सप्तम्यन्तं पदं दृष्ट्वा [3]"तस्मिन्निति" परिभाषासूत्रं तद्विशेषणतया "निर्दिष्टे" इति पदमुपस्थापयति, अतश्च निर्दिष्टेऽचि इत्यर्थः सम्पद्यते।

अत्राऽयमपि विशेषो बोद्धव्यः यत् यथोद्देशपक्षे विधिसूत्राणां संज्ञापरिभाषासूत्रदेशे बुद्धिः कर्तव्या भवति, संज्ञासूत्रं परिभाषासूत्रञ्च स्वदेशं न जहाति तत्र विधिसूत्रेण सह या एकवाक्यता भवति सा वाक्यैकवाक्यता बोद्धव्या, ततो हि संज्ञापरिभाषासूत्रजन्यो बोधः उपजीव्यः ( प्रयोजकः ) विधिसूत्रजन्यो बोधः उपजीवकः, द्वयोः एकवाक्यत्वे वाक्यैकवाक्यता इति उच्यते। वाक्यार्थबोधे कृते सति इयमेकवाक्यता सम्पन्ना भवति।

अथ च कार्यकालपक्षे संज्ञापरिभाषासूत्राभ्यां स्वस्वविधेयपदं विधिसूत्रे उपस्थाप्यते, इति कृत्वा तस्मिन् पक्षे पदैकवाक्यतैव भवति द्वयोः संज्ञापरिभाषासूत्रयोः, एषा सरणी प्राचीनानां कैयटादीनाम्।

---

१. वै० भू० सा० धा० नि० २. पा० सू० ७।२।१

३. पा० सू० १।२।६६

नव्यानां श्रीनागोजिभट्टानां मते तु पक्षद्वयेऽपि परिभाषासूत्राणां पदैक-वाक्यतैव, संज्ञासूत्राणां तु पक्षद्वयेऽपि वाक्यैकवाक्यतैव, इति विशेषः।

यतो हि संज्ञासूत्रं यदा विधिदेशे कार्यकालपक्षे गच्छति तदा तदीयः शक्तिग्रहो यावन्न स्यात्तावत् कथमेकवाक्यता भवेत्? तदर्थज्ञानाभावात्।

यथोद्देशपक्षे तु स्वदेशे तदीयः वाक्यार्थबोधः आवश्यक एव, अतश्च मतद्वयेऽपि अत्र पक्षे संज्ञासूत्राणां विधिसूत्रैः सह वाक्यैकवाक्यतैव भवति। परिभाषासूत्राणां तु कार्यकालपक्षे मतद्वयेऽपि तदैकवाक्यतैव।

किन्तु यथोद्देशपक्षे तु नव्यमते एषैव, तत्रैव भाष्योक्तप्रदीपदृष्टान्तः उक्तः परिभाषेन्दुशेखरे [1]श्रीनागेशभट्टेन दीपो यथा स्वप्रभाद्वारा सर्वगृह-प्रकाशकः, एवमेतद् स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम् (भाष्यतात्पर्यम्)। एतच्च पक्षद्वयसाधारणभाष्यम्, पक्षद्वयेऽपि प्रदेशैक-वाक्यतायाः इतः प्रतीतेः।

यद्यपि इयमाशङ्का अत्र भवति यदि पक्षद्वये एषा स्थितिः तर्हि को विशेषः द्वयोः पक्षयोः। अत्रेदं समाहितं श्रीनागेशभट्टेन यत् [2]यथोद्देशे परिभाषादेशे सकलविधसूत्राणां बुद्धिः क्रियते तस्यां चावस्थायां परि-भाषासूत्रं तदनुगुणं स्वविधेयभेदं परिकल्प्य तैः सह पदैकवाक्यतां सम्पादयतु, एतत् समर्थनं कैयटोक्तिरपि प्रमाणीक्रियते--"[3]यथोद्देशे प्रधानानि आत्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते" इति।

[4]कार्यकालपक्षे तु तत्तद् विधिसूत्रप्रदेशे परिभाषाशास्त्रघटकविधेय-पोपस्थित्या एकवाक्यता भवतीति विशेषो दर्शितः। संज्ञासूत्रविषयेऽपि यद्यपि पक्षद्वये वाक्यैकवाक्यता एव तथापि कार्यकालपक्षे तेषां त्रियाद्याम-प्युपस्थितिरित्यस्य विशेषः।

अथ च यथोद्देशपक्षे स्वस्वदेशस्थत्वम्, कार्यकालपक्षे तु यत्र विधिदेशे उपस्थितिः तद्देशस्थत्वम्, इत्यपि परिभाषाशास्त्रापेक्षया अस्ति विशेषः, यतो हि परिभाषाशास्त्राविषये उभयोरपि पक्षयोः स्वदेशस्थता एव, [5]व्यवहर्तृन्यायात्, यथा व्यवहर्ता कार्यार्थि तत्तद्देशान्तरं याति तत्र व्यवहारञ्च सम्पादयति किन्तु अभिजनदेशीयत्वव्यवहार एव तत्कृते,

---

१. प० शे० पृ० २-३ २. म० भा० पृ० २१५

३. म० भा० आ० पृ० १।१।५।१ ४. म० भा० पृ० २१५

५. प० शे० पृ० २-३

न तु निवासदेशीयत्वव्यवहारः, कश्चन मरुस्थलीयः बङ्गप्रदेशान्तर्गत-कलिकत्तानगरे व्यापारो विदधानो मरुस्थलीय एव उच्यते न बङ्गीयः एवमेव कश्चन बङ्गीयः मरुस्थलं गत्वा वृन्दावनं वा गत्वा व्यवहरति तदापि वङ्गीयः एव व्यवह्रियते न तु मरुस्थलीयः नाऽपि वृन्दावनीयः।

[1]अयञ्च व्यवहर्तृ न्यायः परिभाषाविषयक एव, भाष्ये तथैव दर्शनात्। तथा हि "इको [2]ह्रस्वादचि" इति सूत्रे पञ्चम्याः सप्तम्याश्च उभयोर्निदेशरूपलिङ्गेन "[3]तस्मादित्युत्तरस्य" "तस्मिन्निति निर्दिष्टे [4]पूर्वस्य" इत्युभयोः परिभाषासूत्रयोः युगपत् प्रवृत्तिमाशङ्क्य "उभयनिर्देशे [5]पञ्चमी निर्देशो बलीयान्" इति समाहितं भगवता भाष्यकृता। यदि अभिजनदेशीयत्वव्यवहारो न स्यात् तदा विधिदेशीयत्वेन पौर्वापर्यव्यवहारः कथं स्यात्। संज्ञासूत्रविषये तु कार्यकालपक्षे विधिदेशीयत्वमेव मतद्वयेऽपि।

तथा चोक्तं भगवता भाष्यकृता अयादिभ्यः परा प्रगृह्यसंज्ञा, इति।

अनेन ज्ञायते यत् कार्यकालपक्षं संज्ञासूत्राणां विधिदेशीयत्वव्यवहारः, अन्यथा प्रथमाध्यायस्थं प्रगृह्यसंज्ञासूत्रं षष्ठ्याध्यायस्थात् "[6]एचोऽयवायावः" इति सूत्रात् परं कथं स्यात्, विधिदेशीयत्वस्वीकारे तु "प्लुतप्रगृह्या [7]अचि नित्यम्" इत्यत्र उपस्थितौ सत्यां षष्ठ्याध्यायस्थं जातम्, इति परत्वं सम्पन्नम्, एवं रूपाः विशेषाः आलोचनीयाः।

वस्तुतस्तु एतत् पक्षद्वयमेकदेशिभाष्यानुमतमेव, न तु सिद्धान्तभाष्यानुमतं विनिगमकाभावात् विधिसूत्रादावपि एतत् पक्षद्वयं कथं न स्याद्, एवञ्च प्रकृतस्थले लक्ष्यानुरोधाद् इदमुक्तम्, अथवा किन्न एतेन यत्नेन कार्यकालं संज्ञापरिभाषमिति।

यथोद्देशमेव संज्ञापरिभाषमित्यादि।

अत्र समाधाने नैकं देशीयत्वं, यतो हि यथोद्देशपक्षः स्वारसिक एव तेनैव चेदं समाधानं विहितमस्ति, इति दिक्।

**म०भा०[8]—कथं पुनरिदं विज्ञायते—ईदादयो यद् द्विवचनम्, आहोस्विदीदाद्यन्तं यद् द्विवचनमिति।**

---

१. प० शे० पृ० २–३
२. पा० सू० ८।३।३२
३. पा० सू० १।१।६७
४. पा० सू० १।२।६६
५. भा० वा० ५४०
६. पा० सू० ६।१।७८
७. पा० सू० ६।१।१२५
८. म० भा० पृ० २१६

(प्रदीपः) – कथं पुनरिति[१]। ईदादयो यदि संज्ञिनस्तद्विशेषणं तु द्विवचनं तदा द्विवचनान्तत्वमीदादीनां न संभवतीति द्विवचनानामेवेदादीनां संज्ञया भाव्यम्। अथ द्विवचनं संज्ञि तद्विशेषणमीदादयस्तदा तदन्तविधिरप्रधानेन प्रधानस्येतीदाद्यन्तं द्विवचनमिति पक्षः। तत्रोभयोरपि पक्षयोर्दोषदर्शनात्प्रश्नः।

(उद्द्योतः)--ईदादय[२] इति। प्राथम्याददसो [३]मादित्यनेनैकरूप्याच्चेति भावः। तदेति। अन्तशब्दोऽवयववचनस्तदन्तस्येति बहुव्रीहिश्चेत्यर्थः।

अत्रेयं समीक्षा—"ईदूदेदि"ति[४] सूत्रे चत्वारः पक्षाः अर्थकोटौ संभवन्ति। तथा हि—ईकाररूपम्, अकाररूपम्, एकाररूपञ्च यद्द्विवचनं तत्प्रगृह्यसंज्ञं स्यात्। अथवा "येन विधिस्तदन्तस्ये"[५]ति सूत्रसहकारेण तदन्तविधिं सम्पाद्य ईदूदेदन्तं यद्द्विवचनं तत्प्रगृह्यसंज्ञं स्यात्। अथवा ईदूदेदन्तं यद्द्विवचनान्तं तत्प्रगृह्यसंज्ञं स्यात्, अथवा ईदाद्यन्तं यद्द्विवचनं तदन्तं यत् तदादि तत्प्रगृह्यसंज्ञं स्यात्।

अत्र प्रथमपक्षे प्राप्तः सन्नपि तदन्तविधिः कथन्न जातः, इति जिज्ञासाया-मुक्तं प्रदीपे-ईदादयो[६] यत् संज्ञिनः तद्विशेषणं तु द्विवचनं तदा तदन्तविधेः प्राप्त्याभावेऽयं पक्षः। यदि तु द्विवचनं संज्ञि ईदादयस्तद्विशेषणं तदा तदन्तविधेः प्राप्तौ सत्यां द्वितीयः पक्षः। अत्र प्रथमपक्षसंभवे ईदादीनां प्राथम्यम् "अदसो[७] मात्" इत्यनेन च ऐक्यरूपञ्चापि बीजमुक्तमुद्द्योतकृता।

ननु द्विवचनस्य अन्तः द्विवचनान्तः तस्य भावो द्विवचनान्तत्वमिति, तच्च ईदादीनां संभवत्येव इति कथमुक्तं प्रदीपकृता[८] द्विवचनान्तं ईदादीनां न संभवन्तीति तत्रोक्तम् उद्द्योतकृता "अन्त"शब्दोऽवयववचनः तदन्तस्येति बहुव्रीहिश्च इत्यर्थ इति। अत्रेमौ द्वावपि पक्षौ सदोषौ, अतः उक्तं भगवता प्रश्नवाचकशब्देन कथं पुनरिदमिति[९]।

ननु दोषानुवत्या कथं सदोषत्वं प्रतिपादयितुं शक्यते, इति चेदुच्यते- ईदादयो द्विवचनं प्रगृह्यमिति चेत्, अन्त्यस्य प्रगृह्यसंज्ञा विधेया पचेते इति" "पचेथे इति" इत्येवं रूपेण प्रथमपक्षे भगवता एव दोषोऽग्रे उक्तः। न ह्यत्र एकारः द्विवचनमपि तु तस्य अन्त्यः।

१. प्र० पृ० २१६
२. उ० पृ० २१९
३. पा० सू० १।१।१२
४. पा० सू० १।१।११
५. पा० सू० १।१।७२
६. प्र० पृ० २१५
७. पा० सू० १।१।१२
८. प्र० पृ० २१६
९. म० भा० पृ० २१६

द्वितीयपक्षेऽपि ईदाद्यन्तं द्विवचनमिति चेत्, एकस्य प्रगृह्यसंज्ञाविधेया– "खट्वे इति" "माले इति" एवं रूपेण दोषनिर्वचनं कृतं भाष्ये।

एतत् सजातीये तृतीयपक्षेऽपि ईदाद्यन्तं द्विवचनान्तमिति चेत् लुकि प्रतिषेधो वक्तव्यः, कुमार्योः अगारं कुमार्यागारमिति प्रगृह्यसंज्ञायां प्रकृतिभावरूपदोषोपन्यासः।

चतुर्थपक्षेऽपि अशुक्ले वस्त्रे शुक्ले सम्पद्येताम् "शुक्लायास्तां वस्त्रे' इत्यत्र प्रगृह्यत्वप्रयोज्यः प्रकृतिभावः प्राप्नोति। अत्र हि ईदादि यद्द्विवचनं तदन्तं च भवति प्रत्ययलक्षणेन[1], इत्युक्तं भाष्यकृता। अत्र प्रदीपकृता अस्य भाष्यस्य आशयः इत्थं लाप्यते–शुक्लशब्दात् द्विवचनम् "औ" तस्य "[2]नपुंसकाच्चे" ति शीभावः ततश्च्विप्रत्ययः। [3]शीशब्दस्य सुप्, इति लुकि "अस्य च्वौ[4]" इति इत्वं तद्धितान्तत्वात् सुप्। तस्य "अव्या[5]" दिति लुक्, अत्र हि शीशब्दमीकारान्तं द्विवचनम्, तदन्तश्च समुदायः प्रत्ययलक्षणेन इति प्रगृह्यसंज्ञा प्राप्नोति।

यद्यपि अस्मिन् पक्षे लुको नित्यत्वं, स्वीकृत्य दोषः उद्धृतः भाष्यकृता तथापि [6]शब्दान्तरस्य प्राप्नुवन् विधिरनित्यः इति नियमेन लुकोऽनित्यत्वम् इति कृत्वा उभयोरपि अनित्ययोः परत्वात् शीभावः इत्येव रीत्या दोषः दृढीकृतः, अन्ततश्च अस्तु तर्हि मध्यमः पक्षः, इति रीत्या ईदाद्यन्तं यद् द्विवचनमिति द्वितीयपक्षस्य "निर्दुष्टत्वं प्रतिपादितम्। "खट्वे इति" इत्यत्रतु आद्यन्तवद्भावेन एकारे तदन्तत्वं समाहितमिति दिक्।

**म० भा०--[7]वचनार्थो हि सिद्धे। नेदं वचनाल्लभ्यम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्। किम्? यत्सिद्धे प्रगृह्यसंज्ञाकार्यं तदर्थमेतत्स्यात्–"अणोऽप्रगृह्यस्यानुनासिकः[8]" इति।**

(प्रदीपः)–[9]कार्यंकालपक्षमाश्रित्याह--वचनार्थो हीति। वचनस्य प्रयोजनमित्यर्थः।

---

१. पा० सू० १।१।६२
२. पा० सू० ७।१।१९
३. पा० सू० १।४।१३०
४. पा० सू० ७।४।३२
५. पा० सू० २।४।८२
६. म० भा० पृ० २१८
७. म० भा० आ० सू० १।१।५।२
८. पा० सू० ८।४।५७
९. प्र० पृ० २२०

(उद्द्योत:)—[1]भाष्ये यत्सिद्धे इति न च तत्र पूर्वसूत्रेणैव सिद्धि: । अद्विवचने तदप्रवृत्ते: । पूर्वसूत्रविषये यथोद्देशस्यैव भाष्यकृताङ्गीकाराच्च ।

**अत्र समीक्षा**—"अदसो[2] मादि"ति सूत्रे शङ्कितं भगवता भाष्यकृता यद् **"अमी अत्र" "अमी आसाते"** इत्यादौ "अदसो[3] मादि" त्यनेन इकारोकारयो: प्रगृह्यसंज्ञा न प्राप्नोति तयो: असिद्धत्वात् । किन्तु "अदे अदौ" इति रूपं दृष्ट्वा "[4]एचोऽयवायाव:" इति अयादय: प्राप्नुवन्ति । यदि प्रगृह्यसंज्ञाविधानाद् अयादयो न भविष्यन्तीत्युच्यते तदा उक्तं भगवता "वचनार्थो[5] हि सिद्ध इति । अयमभिप्राय: सिद्धकाण्डे यत् प्रगृह्यसंज्ञा प्रयुक्तं कार्यमस्ति तदर्थम् एतत् चारितार्थ्य भविष्यति । यथा—[6]"अणोऽप्रगृह्यस्याऽनुनामिक:" एतत् सूत्रदृष्ट्या [7]"अदसोऽसेर्दादुदो म:" इति सूत्रपूर्वत्रिपादीस्थत्वात् सिद्धमेव, तत्र अनुनासिकत्वाभावाय प्रगृह्यसंज्ञाविधानं सफलम् ।

अतश्च-वचनसामर्थ्यात् "अयादय: प्रतिषेद्धुं न शक्यन्ते ।

ननु "[8]अदसो मादि"ति सूत्रं प्रथमाध्यायस्थं तस्मिन् कर्तव्ये तु "अद[9]सोऽसेरि"ति मुत्वम् असिद्धमेव इति कथं चारितार्थ्यमुक्तं भगवता इति चेत्, एतदेव समाहितं प्रदीपकृता कार्यकालपक्षमाश्रित्य आह—[10]वचनार्थो हीति ।

अयमाशय: कार्यकालपक्षे कार्यविधायकसूत्रप्रदेशे संज्ञासूत्राणामुपस्थित्या संज्ञासूत्राणि तदेकवाक्यतापन्नत्वात् तद्देशीयान्येव भवन्ति । अत: "[11]अणोऽप्रगृह्यस्यानुनासिक:" इत्येतत् सूत्रप्रदेशे उपस्थितम् "अदसो [12]मादि"ति सूत्रं तद्देशीयमेव जातम् ।

ननु "[13]ईदूदेद्द्विवचनं प्रगृह्यमि"ति पूर्वसूत्रेणैव प्रगृह्यसंज्ञासिद्धिर्भविष्यति, यतो हि—अमी अत्र इत्यत्र तद्दृष्ट्या ईकारस्य सिद्धत्वमस्तीति चेदुच्यते—

---

१. उ० पृ० २२०
२. पा० सू० १।१।१२
३. पा० सू० १।१।१२
४. पा० सू० ६।१।७८
५. भा० वा० १७५
६. पा० सू० ८।४।५७
७. पा० सू० ८।२।८०
८. पा० सू० १।१।१२
९. पा० सू० ८।२।८०
१०. भा० वा० १७५
११. पा० सू० ८।४।५७
१२. पा० सू० १।१।१२
१३. पा० सू० १।१।११

"एदन्ते द्विवचनम् एव तत्प्रवृत्तिः न तु बहुवचनेन" अत्र हि एदन्तं बहुवचनमस्ति, "अमौ आसाते" इत्यत्र तु यद्यपि अस्ति द्विवचनं किन्तु न तद् एकारान्तम् अपि तु औकारान्तम्। यदि तु नपुंसकलिङ्गे फले "अमू आसाते" इत्यत्र "अदे" इति द्विवचनान्तं लब्धुं शक्यं तथापि पुलिङ्गे दोषोऽस्त्येव। अत्र हि "अदो" इत्यस्यैव "अमू" इति रूपसत्त्वम्। [1]ईदूदेदिति सूत्रे यथोद्देशपक्षस्यैव भगवता अङ्गीकाराच्चेति दिक्।

**म० भा०—[2]विप्रतिषेधाद् वा (प्रगृह्यसंज्ञा) अथवा प्रगृह्यसंज्ञा क्रियताम् अयादयो वेति। प्रगृह्यसंज्ञा भविष्यति विप्रतिषेधेनेति।**

([3]प्रदीपः)—विप्रतिषेधाद्वेति। अयावेकादेशप्रतिषेधो वक्तव्यः "विप्रतिषेधाद्वा प्रगृह्यसंज्ञा" इति विकल्पार्थो वाशब्दः। नैकं प्रयोजनमित्यादिस्तु परिहारो भाष्यकारेणोक्तो न वार्तिककारेणेति न तदपेक्षो विकल्पः।

(उद्योतः)—[4]भाष्ये विप्रतिषेधाद्वेति। अन्तरङ्गत्वान्मूत्वादौ कृते पदान्तरसमभिव्याहारेऽयादिभयः परत्वात्संज्ञासिद्धौ तत्सामर्थ्यामूत्वादिकं प्रकृतिभावं प्रत्यपि नासिद्धम्। आश्रयाच्च संज्ञां प्रत्यपि नासिद्धमिति भावः।

अत्र समीक्षा—यद्यपि [5]अणोऽप्रगृह्यस्यानुनासिकं इति सूत्रमादाय प्रगृह्यसंज्ञायाः चारितार्थ्यं प्रत्यपादि भाष्यकृता। तथापि [6]नैकमुदाहरणं लोकारम्भं प्रयोजयतीत्येवं रीत्या तत्प्रयोजनम् अस्वीकृत्य उक्तं "[7]विप्रतिषेधाद्वाप्रगृह्यसंज्ञा" इति।

अयमाशयः अथादीन् बाधित्वा विप्रतिषेधसूत्रबलात् प्रगृह्यसंज्ञा भविष्यति। ननु कथं तावत् प्रगृह्यसंज्ञासूत्रस्य परत्वमिति जिज्ञासायाम् अग्रे उक्तं भगवता [8]कार्यकालं संज्ञापरिभाषमिति। पुनश्च द्विकार्ययोगो हि विप्रतिषेधो न ह्यत्र एकस्य स्थाने द्विकार्ययोगः इति कृत्वा कथं विप्रतिषेधविचारः इति शङ्कायां समाहितम्—[9]असम्भवोऽपि विप्रतिषेधप्रवृत्तिबीजम्, स च असम्भवः अत्र अस्त्येव, प्रगृह्यसंज्ञानिष्पद्यमाना सति अयादीन्

१. पा० सू० १।१।११ २. भा० वा० १७६
३. प्र० पृ० २२० ४. उ० पृ० २२०
५. पा० सू० ८।४।५७ ६. म० भा० पृ० २२०
७. भा० वा० १७६ ८. म० भा० पृ० २२१
९. म० भा० पृ० २११

बाधिष्यते, अयादयश्च निष्पद्यमानाः प्रगृह्यसंज्ञायाः निमित्तं विनाशयिष्यन्ति, अनेन रूपेण असम्भवं प्रतिपादनं कृता भगवता, एवञ्च असम्भवम् एव मुख्यं बीजं विप्रतिषेधसूत्रस्य प्रवृत्तौ। स च कदाचिद् द्विकार्ययोगे सति भवति कदाचिच्च केवलाऽवस्थायाम्, प्रकृते तु केवलासम्भवरूपः एव विप्रतिषेध-हेतुः, "रामाभ्यामि"त्यादौ दीर्घस्येत्वस्य च एकस्मिन् अकारे एव प्राप्ति-रिति एकस्य द्विकार्ययोगः तत्र स्पष्टं द्रष्टव्यः।

**म० भा०—[1]मार्थादीदाद्यर्थानां वा।**

**अथवाऽऽहायम् "[2]अदसो मा"दिति। न च ईत्वोत्वे स्तः। नाऽपि मकारः। त एवं विज्ञास्यामः—"मार्थादीदाद्यर्थानामिति।**

(प्रदीपः)—[3]एकयोगे परिहारान्तरमाह—अथ वेति मार्थादिति। मार्थ एव स्थानी "म"शब्देनोक्तः, ईदूदेदर्थश्चेदूदेदिति। न चास्यां कल्पनाया-मसिद्धत्वं भवति, बुद्धिपरिकल्पनायामसिद्धत्वाऽभावस्योक्तत्वात्।

(उद्द्योतः)—[4]भाष्ये—"मार्थादीदाद्यर्थानां वे"ति वार्तिकं व्याचष्टे अथवाऽऽहेति। ननु एवं सति "अदेऽदौ" इत्यस्यामवस्थायां प्रगृह्यत्वेऽपि मीत्वमूत्वयोः कृतयोरीकारादीना प्रगृह्यत्वादेतद्वैयर्थ्यमल्विधित्वेन प्रगृह्यत्वाभावादिति चेन्न। प्रदेशे प्रगृह्यस्थानिकस्यापि लक्षणया ग्रहणेनाऽदोषात्।

अत्र समीक्षा—"अदसो मादि"ति सूत्रं प्रति, [5]"अदसोऽसेरि"ति सूत्रेण विहितस्योत्वस्य मत्वस्य च असिद्धत्वात् कथं प्रगृह्यसंज्ञा इति पूर्वपक्षे आश्रयत्वात् सिद्धत्वं यथा रोरुत्वे। अयमाशयः यथा रोरुत्वे कर्तव्ये "[6]अतो रोरि"ति दृष्ट्या रुत्वं सामर्थ्यात् सिद्धमिति, अन्यथा उद्देश्याप्रसिद्ध्या सूत्रमेतद् व्यर्थं स्यात्, तथैव अत्रापि "अदसो[7]मा"दिति सूत्रदृष्टया मूत्वादेः आश्रयात् सिद्धिर्भविष्यति, इति समाधाय वचनसामर्थ्याद्वा इति द्वितीयमपि समाधानमुक्तम्, तदनु [8]"मार्थादीदाद्यर्थानां वे"ति तृतीयः समाधिः उपस्थापितः।

---

१. भा० वा० १८१
२. म० भा० आ० सू० १।१।५।२
३. प्र० पृ० २२४
४. उ० पृ० २२४
५. पा० सू० १।१।१२
६. पा० सू० ८।२।८०
७. पा० सू० १।१।१२
८. भा० वा० १८१

अयमाशयः [1]"अदसो मा"दित्येतद् दृष्ट्या उत्वमत्वयोरसिद्धत्वेऽपि मार्थो यो वर्णः स्थानिभूतो दकारः ईदाद्यर्थस्य यः ईकारादिः स एव लक्षणया अत्र ग्राह्यः, न तु साक्षात्मकार ईकारो वा उद्देश्यतया ग्रहीतुं शक्येत्, अयमेवाभिप्रायः प्रदीपकृदुक्तः "[2]मार्थः" एव स्थानीमशब्देन उक्तः, ईदूदेदर्थश्च ईदूदेदिति । न चास्यां कल्पनायाम् असिद्धत्वं भवितुमर्हति, बुद्धिपरिकल्पनायाम् असिद्धत्वाभावस्य उक्तत्वात् । चतुर्थमपि समाधानमग्रे उक्तं भगवता अदसः ईत्वोत्वे [3]स्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये, एवञ्च असिद्धत्वमेवात्र प्रतिसिद्धम्, द्वितीयपदस्थितेऽचि परे सिद्धत्वमेवेति भावः । तेन एकपदस्थितेऽचि असिद्धत्वं भवत्येव । अमूया, अमूयोरित्यादौ यथा । अत्र भाष्योक्तपक्षचतुष्टये प्रथमपक्षः एव साधुतमः प्रतिभाति, यतश्च द्वितीयपक्षे वचनसामर्थ्यस्य आश्रयणं कर्तव्यं भविष्यति, यच्च सर्वविध-समाधानाभावे एव गृह्यते, तृतीयपक्षस्तु लक्षणा दोषग्रस्तः, चतुर्थपक्षे अपूर्ववचनकल्पना कर्तव्या स्यादिति दिक् ।

**म० [4]भा० - शेऽर्थवद्ग्रहणात् । अर्थवतः शशब्दस्य ग्रहणम् । न चैषोऽर्थवान् ।**

(प्रदीपः)—[5]शेऽर्थवद् ग्रहणादिति । स्वंशब्दस्येत्येवान्तरङ्गत्वादहेयत्वा-दसाधारणत्वाच्च रूपपरिग्रहे सिद्धे रूपवदर्थस्याप्यङ्गीकरणार्थं रूपग्रहणं कृतम् । अत्र च शशब्दोऽनर्थकः सप्तम्येकवचनं त्वर्थवत्, तयोः समुदायो-ऽर्थान्तराप्रादुर्भावादनर्थकः ।

(उद्द्योतः)—[6]शेश्चासावर्थवांश्च तस्य ग्रहणादित्यर्थः । शक्तिग्रहनिरपेक्षप्रती-तिकत्वेन नान्तरङ्गत्वम् । अर्थप्रतीतावपि प्रतीयमानत्वमहेयत्वम् । शब्दान्तरैर-प्रत्यायनादसाधारणत्वात् अप्रादुर्भावो प्रतीतिः ।

अत्र समीक्षा—"[7]शे" इति सूत्रं प्रगृह्यसंज्ञाविधानार्थं कुत्र प्रवर्तते, इत्याशङ्कायामुक्तं भगवता काशे, कुशे, वंशे, इति ।

अत्र हि प्रत्यक्षमेव "[8]शे" इति रूपं श्रूयते, एवञ्च सूत्रप्रवृत्तिरत्र

१. पा० सू० १।१।१२
२. प्र. पृ. २२४
३. म० भा० पृ० २२४
४. म० भा० आ. सू. १।१।५।३
५ प्र० पृ० २२५
६. उ० पृ० २२५
७. म० भा० आ० सू० १।१।५।३
८. पा० सू० १।१।१३

भवितुमर्हतीति चेत्, तत्समाधानाय उक्तं भगवता [1]शेऽर्थवद्ग्रहणादिति । "[2]शे" इति सूत्रे "शे"शब्दः अर्थवान् ग्राह्यः । अत्र च "काशे" इत्यादि लक्ष्ये "शे"शब्दो न ह्यर्थवान् एवञ्च "[3]अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमि"-ति परिभाषयोऽत्र [4]समाधानम् उक्तं भगवता । एषा च परिभाषा न हि ज्ञापकसिद्धा अपितु, "स्वं रूपमि" ति सूत्रे रूपग्रहणाल्लब्धाः । तत्प्रकारश्च प्रदीपकृता स्फुटीकृता [5]तथा हि स्वंशब्दस्य इत्येव सिद्धेः रूपग्रहणं किमर्थम् ? स्वमित्यनेन अन्तरङ्गत्वाद् अहेयत्वाद् असाधारणत्वाच्च रूपस्यैव स्यात्, पुनः रूपग्रहणम् अर्थस्यापि परिग्रहार्थम्, एवञ्च अर्थविशिष्टं रूपं शब्दस्य संज्ञि इति सूत्रार्थः सम्पद्यते, "काशे" इत्यादौ यद्यपि सप्तम्यैकवचनम् अर्थवत् तथापि शशब्दस्य अनर्थकत्वात् "[6]शे" इति समुदायस्य आनर्थक्यमेव, तत्समुदायात् तस्याप्यर्थस्य अप्रतीतेः । पुनरपि "हरि"शब्दात् मत्वर्थीयं लोमादित्वात् शप्रत्ययं विधाय ततः सप्तम्यैकवचने "हरिश्ये" इति भवति, तत्र हि शप्रत्ययोऽपि अर्थवान् सप्तम्यपि अर्थवती, इति कृत्वा अवयवधर्मानुविधानात् समुदायस्यापि अर्थवत्वशङ्का स्यात्, तत्रोच्यते-स्वयमेव भगवता [7]"लक्षणप्रतिपदो[2]क्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति तत्रापि न दोषः, यतो हि प्रतिपदोक्ते झटिति प्रतिपत्तिर्भवति, लाक्षणिके तु लक्षणानुसन्धानद्वारेण विलम्बिता इति कृत्वा लाक्षणिकस्य ग्रहणं न भवति, वस्तुतः [8]अर्थवद्ग्रहणपरिभाषया एव समाधानं सैद्धान्तिकं बोध्यम् । [9]प्रत्यक्षानुमानिकन्यायापेक्षया रूपग्रहणानुगता [10]अर्थवद्परिभाषा प्रबला तस्य न्यायस्य गुणीभूतशब्दसम्बन्धित्वात् दुर्बलत्वम्, अर्थवद्ग्रहण-परिभाषया आसु प्रधानभूतार्थसम्बन्धित्वात् वचनसिद्धत्वाच्च प्राबल्य-मित्यभिप्रायः ।

**म० भा०-एवं [10]र्तीह-सिद्धे सति यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति, तज्ज्ञापयत्याचार्यः-"अन्यथा वर्णग्रहणे जातिग्रहणं भवति" इति । किमेतस्य ज्ञापने प्रयोजनम् "दम्भे-**

---

१. भा० वा० १८४
२. पा० सू० १।१।१३
३. म० भा० २२६
४. पा० सू० १।१।६८
५. म० भा० आ० सू० १।१।९।८
६. पा० सू० १।१।१३
७. म० भा० पृ० २२६
८. म० भा० पृ० २२६
९. म० पृ० २२६
१०. म० भा० आ० सू० १।१।५।४

**हंल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्, इति यदुक्तं, तदुपपन्नं भवति ।**

([1]प्रदीपः)—एवं तर्हीति । संज्ञाया विधीयमानत्वात् प्राधान्यात् संज्ञिनो गुणत्वात् पशुना यजेतेतिवत् संख्यायाविवक्षायां सिद्धायामेकग्रहणमन्यत्र जातिसंप्रत्ययार्थम् अच्समुदायग्रहणाशङ्काया निरासार्थं ह्येकग्रहणं ज्ञापनफलं संपद्यते । किं पुनः स्याद् यद्यत्राच्समुदायस्य ग्रहणं स्यात्? उच्यते—इह अइउ अपेहीति समुदायस्यैका संज्ञा स्याद्, नावयवानाम् । समुदायैकाज्द्विर्वचनवदित्यन्त्यस्यैव प्रकृतिभावाद्यणादेशो न स्यात् । पूर्वयोस्तु स्वरसन्धिः स्यात् । अच्समुदायपरिग्रहानुरोधित्वाच्च निपातसमुदायो गृह्येत, एकनिपातस्याच्समुदायस्याभावात् ।

अत्र समीक्षा—"निपात एकाजनाङ्[2]" इति सूत्रे अज्ग्रहणेनैव एकस्य अचो लाभे सिद्धे पुनः एकग्रहणं किमर्थमित्याशङ्क्य उक्तं भगवता "एकग्रहणं ज्ञापयति, अन्यत्र वर्णग्रहणे जातिग्रहणं भवतीति, एतत् फलमुक्तं दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धमि"ति । अत्र प्रदीपकारः—अच्समुदायस्य[3] ग्रहणं माभूद् एतदर्थमेकग्रहणं कृतमस्ति अन्यथा "अ इ उ अपेहि" सति वाक्ये "अ इ उ" इति वर्णत्रयघटितसमुदायस्य एका संज्ञा स्याद् एकाच्द्विर्वचनवद् अवयवानां न स्यात्, इति कृत्वा अन्त्यस्योकारस्य प्रकृतिभावे सति यणादेशो न भविष्यति पूर्वयोस्तु गुणादिरूपस्वरसन्धिकार्यं स्यादेव । अच्समुदायपरिग्रहानुरोधेन निपातसमुदायो गृह्येत, इति नियतस्य अच्समुदायस्य अभावात् । अत्रोच्यते उद्द्योतकृता [4]प्रदीपोक्तिश्चिन्त्या । तथा हि समुदायसंज्ञा अवयवानामननुग्रहात् नात्र द्विर्वचनन्यायः । नापि निपातसमुदायस्य स्वाङ्गग्रहणेन इव एकैकत्र सूत्रचारितार्थ्याद् इति । तस्मात् तत उशब्दैकदेश[5] अ उ शब्दानुकरणे उक्तसमुदायानुकरणे वानीतिपरे निपातसंज्ञके अ उ अकरोदित्यादौ प्रगृह्यत्वं स्यात्तद्वारणायैकग्रहणमिति तत्त्वम् । अस्योद्द्योतग्रन्थस्य अयमाशयः स्पष्टं प्रतिभाति यत् प्रदीपग्रन्थ एकग्रहणज्ञापितपरिभाषयोः यत् फलमुक्तम् "अइउ अपेहि" इति तन्न साधुतरम् अपितु अ उ अकरोदिति फलं समीचीनमिति, अत्र युक्तायुक्तत्वविचारोऽवश्यं कर्तव्यः इति कृत्वा प्रयतते—

---

१. प्र० पृ० २२८ २. पा० सू० १।१।१४
३. प्र० पृ० २२८ ४. उ० पृ० २२८
५. उ० पृ० २२८

प्रथमतः श्रीनागोजिभट्टेन यदिदमुक्तं समुदायस्य[1] संज्ञाया अवयवानामननुग्रहाद् एकाच्द्विर्वचनं न्यायप्रवृत्तिः प्रदीपोक्ता चिन्त्या इति तन्न समीचीनं प्रतीयते, यतो हि—समुदायस्य अवयवस्य चोभयोरपि कार्यं प्राप्नोति तत्र समुदायस्यैव कार्यं कर्तव्यं सति सम्भवे समुदाये प्रवर्तमानं तत्कार्यं यदि अवयवेऽपि सम्भाव्यते तर्हि भवत्येव, यत्र न सम्भाव्यते तत्र न भवति, यथा—निजौ चत्वार एकाचः इत्यत्र "निज" इति समुदायस्य द्विरुच्चारणे कृते "नि इरज्" इति तदीया अवयवत्रयस्यापि द्विरुच्चारणं स्वतः[2]सिध्यति, वृक्षे प्रचलति सति अवयवानां प्रचलनं सुतरां भवति, किन्तु सर्वेऽवयवाः एकरूपेणैव प्रचलिता भवन्ति इति नियमो नावलोक्यते, कश्चन अधिकं चलति कश्चन अवयवः ईषद् चलति कश्चन नैव चलति। "निज" इत्यत्रापि समेषामवयवानां द्विरुच्चारणं सहैव न भवति किन्तु क्रमिकमित्यादिकं वैषम्यं तु वर्तत एव, तथैव प्रकृते "अ इ उ" इति समुदायस्य तदवयवानाञ्च युगपत् प्रगृह्यत्वप्राप्तौ समुदायस्यैव तद्विधेयं न तु अवयवानामित्यत्रैव न्यायतात्पर्यं न तु सर्वांशे कोऽपि न्यायो दृष्टान्ती कर्तुं शक्यते।

पुनश्च यदुक्तमुद्द्योतकृता[3] निपातसमुदाये निपातत्वाभावात् कथं तादृशस्याच्समुदायस्य प्रगृह्यत्वप्राप्तिरिति ? तदपि न मनोरमं प्रतिभाति, तथा हि—यथा ब्राह्मणसमुदाये ब्राह्मणत्वं यदि न स्यात्तर्हि तत्समुदायहत्यायां ब्रह्महत्याजनितः प्रत्यवायो न भवेत्, स्वीक्रियते च सर्वैः मूर्खैर्विद्वद्भिश्च तत्रत्यः प्रत्यवायः, एवञ्च ब्राह्मणसमुदायो न ब्राह्मणः, तण्डुलराशिर्न तण्डलः इत्येवं भेदावगाहिव्यवहारस्य अप्रामाणिकत्वमेव प्रसिद्धम् आबालवृद्धम्। इदं तु अवश्यं मन्तव्यं प्रत्येकं पर्याप्तं ब्राह्मणत्वं प्रत्येकवृत्तिधर्मावच्छेदेनैव समुदाये वर्तते, न तु समुदायत्वावच्छेदेन, एवञ्च "अ इ उ" इति निपातसमुदाये प्रत्येकं निपातत्वम् अक्षतमेवेदानीम् एकग्रहणाभावे [4]वर्णग्रहणे जातिग्रहणमिति परिभाषया इदृश अच्समुदायस्य अज्ग्रहणेन ग्रहणात् निपातसमुदायस्य प्रत्येकवृत्तिधर्मावच्छेदेन निपातत्ववैशिष्ट्या प्रगृह्यसंज्ञाप्रसक्तिः स्यादेव इति रीत्या प्रदीपग्रन्थः सुयोज एव।

यत्तु अग्रे पुनरुक्तं [5]स्वाङ्गसमुदायस्य स्वाङ्गग्रहणेनैव एकैकत्र सूत्र-

१. उ० पृ० २२८
२. ल० श० शे०
३. उ० पृ० २२८
४. म० भा० पृ० २२८
५. उ० पृ० २२८

चारितार्थ्यादिति। तदपि नातिशोभनं यतो हि इवशब्देन वैधर्म्ये दृष्टान्तः उक्तः स्वाङ्गसमुदायस्य स्वाङ्गत्वं नास्तीति स्वाङ्गग्रहणेन ग्रहणमपि तस्य न भवति, अतः एकैकस्मिन्नेव निपाते सूत्रचारितार्थ्यं भविष्यति, अत्रेदं विचारणीयं यत् स्वाङ्गत्वधर्मो न जातिरूपः अपितु सखण्डोपाधिः पारिभाषिको धर्मः, अच्त्वं वर्णत्वं निपातत्वं तु जातिरूपम् अखण्डोपाधिरूपं वा इत्यस्ति महान् भेदः किञ्च तत्रापि एकविधस्वाङ्गसमुदाये स्वाङ्गत्वजातिधर्मस्तिष्ठत्येव, यथा हस्तसमुदाये हस्तत्वं, पादसमुदाये पादत्वं हस्तपाद उभयसमुदाये हस्तत्वमात्रं पादत्वमात्रं वा न समवेतुं प्रभवति, ब्राह्मणत्वादिवत् सखण्डोपाधिरपि स्वाङ्गत्वधर्मः यदि प्रत्येकवृत्तिधर्मावच्छेदेन तिष्ठेत्तर्हि का क्षतिः, किञ्च यथा "अ उ" इत्यस्य अनुकरणत्वात् निपातसंज्ञा भवद्भिः स्वीक्रियते तथैव "अ उ इ" इति निपातसमुदायस्य वर्णसमुदायस्य वा अनुकरणावस्थायाम् "[1]अनुकरणञ्चानीतिपरमि"ति सूत्रेण निपातसंज्ञा केन वारयितुं शक्येत्, एवञ्च प्रदीपोक्तं फलं सम्यगेव प्रतिपद्यते उद्द्योक्तदुक्तं फलमपि साधुः वर्तत एव प्रदीपकृदुक्तेश्चिन्त्योक्त्वोक्तिरेव चिन्त्या प्रतीयते। [2]वर्णग्रहणे जातिग्रहणमित्यस्य अर्थस्तु एवं बोद्धव्यः, यस्मिन् सूत्रे वर्णबोधकं परमुपात्तमस्ति तत्र तेन पदेन वर्णत्वव्याप्यजात्यवच्छिन्नसमुदायस्य बोधः कर्तव्यः। यथा प्रकृतसूत्रे यदि एकग्रहणाभावे अच्पदमुच्चारितमस्ति तेन वर्णत्वव्याप्याच्त्वावच्छिन्नसमुदायस्य ग्रहणे सति उक्तस्थले दोषः प्रसक्तः इति कृत्वा एकग्रहणं चारितार्थ्यम्, फलमन्यत्र भवतीति रीत्या भाष्यकृता [3]"दम्भ इच्च" इत्यत्र फलं प्रदर्शितम्, तथा हि "दम्भ"धातोः सन्प्रत्यये "दम्भ इच्चे"त्यनेन दकारोत्तरस्याकारस्य इकारादेशे "दम्भ स्" इत्यवस्थायां द्वित्वेऽभ्यासलोपे [4]हलन्ताच्चेत्यनेन सनः कित्वे "अनिदितामि[5]"ति उपधाभूतनलोपे "एकाचो[6] बशो भष् झषन्तस्य स्ध्वोः" इति भष्भावे चर्त्वे तिबादौ च कृते सति "धिप्सती"ति सिध्यति।

अत्रेदमालोच्यते यत् "हलन्ताच्चे[7]" ति सूत्रस्य कथमत्र प्रवृत्तिः, यतो हि इक्समीपाद्धलः परो झलादेः सन् कित्स्यादिति हि तस्यार्थः, अत्र तु

---

१. पा० सू० १।४।६२ २. म० भा० २२८
३. पा० सू० ७।४।५६ ४. पा० सू० १।२।१०
५. पा० सू० ६।४।२४ ६. पा० सू० ८।२।३७
७. पा० सू० १।२।१०

दकारोत्तरः इकारः इक्पदेन ग्राह्यः तत्समीपवर्ती मकारः हल्पदेन ग्राह्यः, तदव्यवहितोत्तरत्वविशिष्टः सन्प्रत्ययो नास्ति भकारेण व्यवधानात् ।

तर्हि कथं "हलन्ताच्चे[१]"त्यस्यात्र प्रवृत्तिरिति जिज्ञासायामेव उक्तं भगवता दम्भेर्हल्ग्रहणेत्यादि ।

अयमाशयः [२]"हलन्ताच्चे"ति सूत्रे हल्पदं वर्णमात्रबोधकमस्ति, इति कृत्वा तेन वर्णत्वव्याप्यहल्त्वजात्यवच्छिन्नवर्णानां समुदायोऽपि ग्रहीतुं शक्यः, अतः हल्त्वजात्यवच्छिन्नयोः समुदायं हल्पदेन गृहीत्वा सूत्रस्य प्रवृत्तिः करणीया ।

नन्वत्र "दम्भ" इति उपधाभूतो मकारो वर्तते [३]अनिदितामित्यनेन उपधाभूतस्य नस्य ( नकारस्य ) लोपः विधीयते तर्हि कथमत्र लोपः उपधाभूतनकाराभावादिति न शङ्कनीयम्—

**नकारजावनुस्वारः पञ्चमौ झलि धातुसु[४] ।**

**सकारजः शकारश्चेत् स्याट्टवर्गस्तवर्गजः ॥**

इत्युक्तोक्त्या अत्रत्य मकारस्य नकार्यत्वादिति दिक् ।

**म० भा०—"एवं तर्हि" गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय[५]" इति । तद्यथा—"गौरनुबन्ध्योऽजो ग्नऽरीसोमीयः" इति न बहिकोऽनुबध्यते ।**

(प्रदीपः)—एवं तर्हीति । गुणादागतो—गौणः । यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः । मुखमिव प्रधानत्वान्मुख्यः । तत्र[६] "स्वंरूप"मित्यत्र रूपग्रहणेनार्थपरिग्रहस्य ज्ञापितत्वादर्थवतः कार्येण भवितव्यम् । स चार्थः प्राथम्यान्मुख्य एव गृह्यते । गौणे ह्यर्थे शब्दः प्रवर्त्तमानो मुख्यार्थारोपेणैव प्रवर्तते । अनियतश्च गौणोऽर्थः । तस्माल्लौकिकोयं न्यायः "गौणमुख्ययो[७]" रिति । गोऽभवदित्यत्र च जाड्यादिना धर्मेण गोत्वमारोपितमिति गौणत्वमर्थस्य । गोऽभवदित्यत्र च वृत्तौ प्रकृतेः

१. पा० सू० १।२।१०
२. पा० सू० १।२।१०
३. पा० सू० ६।४।२४
४. अभियुक्तोक्तिः
५. म० भा० आ० सू० १।१।५।४
६. प्र० पृ० २३१
७. पा० सू० १।१।६८

कर्तृत्वं, सङ्घी भवन्ति ब्राह्मणा, इति बहुवचनदर्शनात्। प्रकृतौ च गोत्व-मारोपितं, न तु मुख्यमिति प्रगृह्यत्वाभावः।

(उद्द्योतः[१])—प्रधानत्वात्। अर्थान्तरप्रतीतिनिरपेक्षतया प्रतीयमानत्वात्। तादृशाऽर्थबोधकत्वाच्छब्दस्यापि गौणत्वं मुख्यत्वं च बोध्यम्। [२]गौणमुख्यन्यायबीजं दर्शयितुमाह—तत्र स्वरूपमिति। प्राथम्यमेवोपपादयति गौणे हीति। आरोपाय हि पूर्वं तदुपस्थितिरावश्यकीति भावः। मुख्यार्थारोपेणेति। आरोपितसिंहत्ववान् माणवकादिसमभिव्याहारे सिंहशब्दार्थ इति भावः। मुख्यस्यैव ग्रहणे युक्त्यन्तरमाह—अनियतश्चेति। सिंहशब्दस्य माणवकबलीवर्दादिषु प्रयोगादिति भावः। एतेन वर्णग्रहणे [३]"लक्षणप्रतिपदोक्त"परिभाषा प्रवृत्तेरोकारस्य लाक्षणिकत्वमित्यादि चिन्त्यमित्यपास्तम्। अनयैव तस्यापि वारणात्।

समीक्षा—[४]"ओदि[५]"ति सूत्रे नदः अदः अभवत् अदो भवतीत्यत्र च्व्यन्ते प्रगृह्यसंज्ञावारणाय [६]ओतश्च्विप्रतिषेध" इति वार्तिकमुक्तम् तत्प्रत्याख्यानं कुर्वता भगवता भाष्यकृता [७]लक्षणप्रतिपदोक्तपरिभाषा स्मारिता पुनरपि गो भवति इत्यत्र प्रगृह्यत्ववारणाय गौणमुख्यन्यायः उक्तः, तत्र गुणादागतः गौणः यथा "गौर्वाहीकः"[८] इत्यत्र गोशब्दस्य जाड्यमान्द्यादिगुणनिमित्तको वाहीकरूपो अर्थो गौणः, मुखमिव प्रधानत्वात् मुख्यः गौणे ह्यर्थे यदा शब्दः प्रवर्तते तदा मुख्यार्थवृत्तिधर्मारोपेणैव प्रवर्तते। आरोपित-प्रवृत्तिनिनिमित्तकत्वात् सोऽर्थो गौणः अनियतः सर्वेष्वङ्गेषु यथा मुखं प्रधानं तथैव सर्वेष्वर्थेषु नियतः प्रसिद्धश्चार्थः स एव मुख्य उच्यते, अतः प्रथमोपस्थितत्वात्तु तस्मिन्नेवार्थे कार्येण भवितव्यम् यथा [९]"अग्नेर्ढक्" इत्यत्र अङ्गाररूपे प्रसिद्धेऽर्थे वर्तमानादेवाग्निशब्दात् ढक्प्रत्ययो विधीयते न तु माणवकाद्यर्थे वर्तमानात्।

एवञ्च प्रकृते "ओदि[१०]"ति सूत्रस्य मुख्यार्थे वर्तमानः एव ओदन्तो निपातः उद्देश्यतया ग्रहीतुं शक्यः न तु गौणेऽर्थे वर्तमानः।

अतः गोऽभवदित्यत्र[११] ओदित्यनेन प्रगृह्यसंज्ञाया अभावः, गोऽभवदित्यत्र

---

१. म० भा० २३१ 
२. उ० पृ० २३१
३. म० भा० २३१ 
४. म० भा० २३०
५. म० भा आ० सू० १।१।५।५ 
६. भा० वा० १८५
७. म० भा० पृ० २३० 
८. म० भा० पा० २३१
९. पा० सू० ४।२।३२ 
१०. पा० सू० १।१।१५
११. पा० सू० १।१।१५

च्विप्रत्यये कृते सति अगोरूपायाः प्रकृतेः भवनक्रियायाः कर्तृत्वं न तु विकृतभूतायाः गोः।

सङ्घीभवन्ति ब्राह्मणा इत्यत्र यथा असङ्गभूतायाः प्रकृतेरेव कर्तृत्वेन बहुवचनमुपपद्यते, अन्यथा विकृतभूतसङ्घस्य एकत्वाद् एकवचनमेव स्यात्। यत्तु अदो भवतीत्यत्र [1]लक्षणप्रतिपदोक्तपरिभाषया प्रगृह्यत्ववारणं कृतं भगवता तत्तु एकदेशोक्तत्वात् न विरुद्धम् अन्यथा वर्णग्रहणे तस्या परिभाषायाः अप्रवृत्तौ एतत्कथनम् असङ्गतमेव स्यात्, अत एव चोक्तम् उद्द्योतकृता अनयैव [2]गौणमुख्यपरिभाषाया स्यापि वातरणादिति।

अग्रे च यदि वर्णग्रहणे सर्वत्र तस्या अप्रवृत्तिः स्यात्तदा [3]ह्वावामश्चेत्यादेः तज्ज्ञापकता कथं स्यादित्युक्तम्, पुनश्च [4]अर्थवद्परिभाषामूलिका [5]गौणमुख्यपरिभाषाऽपि कथमत्र प्रवर्तेत, विशिष्टरूपोपादानविषयत्वाभावादित्याशङ्क्य निपातसंज्ञा हि चादिपदोपस्थित - चादीनां सति संभवे अर्थवतामेव इति ये सार्थकाः तेषां निपातपदेनापि तत्तदर्थविशिष्टानामेव उपस्थितिरिति प्रकृतसूत्रीयनिपातपदेन मुख्यार्थकनिपातानामेव ग्रहणं न तु गौणार्थकानामपि इति समाहितमुद्द्योतकृता इति दिक्।

**[6]म० भा०—अर्थाश्रय एतदेवं भवति। यद्धि शब्दाश्रयम्, शब्दमात्रे तद्भवति। शब्दाश्रये च वृद्ध्यात्वे।**

([7]प्रदीपः)--शब्दाश्रये चेति। स्वार्थे वृत्तात् प्रातिपदिकाद्विभक्तावुत्पन्नायां कार्येषु कृतेषु शब्दान्तरसन्निधानाद् गौणत्वं प्रतीयते। तस्य च स्वार्थस्य मुख्यव्यपदेशो नास्ति, गौणापेक्षया सम्बन्धिशब्दत्वान् मुख्यव्यपदेशस्य गौणाभावेऽभावाच्छब्दाश्रये चेत्युक्तं, न त्वत्रार्थो नापेक्ष्यते। तत्र यथा श्वेतं छागमालभेतेति गुणद्रव्ययोः श्रौतः क्रियासम्बन्धो वाक्यीयात्तु न्यायात् पश्चात् परस्परेण। एवं गां वाहीकमानयेति पूर्वं क्रियाभिसम्बन्धापेक्षया विभक्तावुत्पन्नायां वाक्यीयात्तु न्यायात् सामानाधिकरण्याद् गौणार्थप्रादुर्भावो भवतीति पदकार्येष्वेवायं न्यायो न प्रातिपदिककार्येष्वित्युक्तम् शब्दाश्रये चेति।

---

१. म० भा० पृ० २३०
२. म० भा० पृ० २३१
३. पा० सू० ३।२।२
४. म० भा० पृ० २२६
५. म० भा० पृ० २३१
६. म० भा० आ० सू० १।१।५।५
७. प्र० पृ० २३१

([1]उद्द्योतः)--ननु शब्दाश्रये चेति भाष्यस्यार्थरहितवर्णमात्राश्रये इत्यर्थः प्रतीयते, स चायुक्तः सर्वनामस्थानाम् शशाक्षित प्रातिपदिकस्यौत इत्थन विशेषणादनयोरपि विशिष्टशब्दाश्रयत्वादत आह–स्वार्थे इति।

अत्र समीक्षा - "[2]ओदिति" सूत्रे उक्तं भगवता भाष्यकृता यद् [3]वाहीकेऽर्थे वर्तमानो गोशब्दः वृद्ध्यात्वे कथं लभते गौस्तिष्ठति, गां वाहीकं पश्य इत्यादि तत्र समाधानमपि उक्तम् अर्थाश्रय एवमेव भवतीत्यादि।

अयमाशयः अर्थाश्रय एतदेव भवति अर्थात् [4]गौणमुख्यन्यायः अर्थमाश्रित्य प्रवर्तते न तु शब्दमात्रमुद्दिश्य, एवञ्च अर्थः गौणो वा मुख्यो वेति परीक्षा कर्तव्या भवति गौणश्चार्थः विभक्त्युत्तरं पदत्वसम्पत्तौ सत्यां पदान्तरं सन्निधाने सति प्रतीयते। मुख्यस्त्वर्थः पदान्तरसन्निधानमनपेक्ष्यमाणः प्रतीयते इति कृत्वा तस्य मुख्यत्वम्, यथा श्वेतं छागमालभेदित्यत्र गुणद्रव्ययोः क्रियासम्बन्धः श्रौतः, परस्परं सम्बन्धस्तु पारष्ठिकः एवं गां वाहीकं पश्य इत्यत्र विभक्त्युत्पत्यनन्तरम् अकांक्षादिमूलकाद् वाक्यीयात् न्यायात् सामानाधिकरण्यसम्बन्धेन गौणार्थप्रतीतिर्भवति, इति कृत्वा यदोद्देश्यककार्येष्वेवायं न्यायः प्रवर्तते न तु प्रातिपदिकोद्देश्यककार्येषु।

अत्रोद्द्योतकारः श्रीनागोजिभट्ट इत्थं व्याचष्टे यत् केचन आचार्याः कैयटमतं प्रत्याख्यानाय प्रयतन्ते, तथा हि विभक्त्यर्थस्य क्रियाकारकसम्बन्धरूपत्वेन तयोः [5]सम्बन्धबोधः श्रुतिकृतः इति श्रुतेः वाक्योपेक्षया शीघ्रम् प्रवृत्त्या प्रथमं तयोः 'क्रियाकारकयोः' अन्वयबोधः, गुणद्रव्ययोस्तु पश्चात् परस्परमन्वयबोधः। अनयैव रीत्या गां वाहीकमानय, इत्यादावपि क्रियाकारकयोरेव अन्वयबोध इति रीत्या सिद्धान्तोऽभ्युपेयः। श्रीकैयटस्तु गां वाहीकं पाठय, इत्यादौ यत्र गौणार्थस्य प्रतीतिं विना क्रियासम्बन्ध एव असंभवेत्, तत्र पूर्वमेव गौणत्वज्ञानाद् अत्वादि न स्यादिति सिद्धान्तो व्याचष्टे, तत्सर्वम् एवं गां वाहीकमानय इत्यादि कैयटोक्त्या पराकृतं वेदितव्यम्, यतो हि "अपदं न प्रयुञ्जीत"[6] इति सिद्धान्तेन विभक्त्यन्त्यस्यैव प्रयोगः समुचितः, अतः तदुपस्थितानाम् इतरपदार्थान्वियेन प्रातिपदिकमात्रार्थेन पूर्वमन्वय इत्यस्य वक्तुमप्यशक्यत्वाच्च तादृशबोधद्वये कल्पने गौरवाच्च।

---

१. उ० प्र० २३२ २. पा० सू० १।१।१५

३. म० भा० पृ० २३१ ४. म० भा० प० २३१

५. ल० शे० शे० "परश्च" ६. म० भा० पृ० २३।१

किञ्च अपदस्थाप्रयोगेण श्रोतृभिः सर्वत्र पदस्यैव गौणार्थज्ञानेन अत्वं त्वं सम्पद्यतेऽमहान् महान् भूतः तद्भवतीत्यादौ भाष्यप्रयोगे त्वाद्यादेश-दीर्घादीनां करणेन चास्य [1]गौणमुख्यन्यायस्य पदकार्यमात्रविषयत्वं सिद्धान्तितम्। अत एव श्वसुरसदृशस्य अपत्यमित्यर्थे "राजश्वशुराद्यत्" इत्यस्य न प्रवृत्तिः अपितु [2]"अत इञ्" इत्यनेन "इञ्"प्रत्ययस्य प्रवृत्तिः "श्वासुरिः" इत्येवं रूपं न तु श्वासुर्य इति। किञ्च गामित्युक्ते सति सर्वाः क्रियाः प्रसक्ताः इति भाष्यबलेन पदसंस्कारपक्षः प्रमीयते, तत्स्वरूपश्च पदानि संस्कृतवाक्यं संस्क्रियते यत्रासौ पदसंस्कारपक्षः, एतदनुगुणं वृद्धि-सूत्रस्थं भाष्यमपि।

अतः सामान्यतया क्रियाजन्यफलाश्रयत्वादेव द्वितीयादि-विभक्तिनियाम-कता इति कृत्वा उद्द्योतकारीयव्याख्यानमेव उचितं प्रतिभाति, प्रयोक्ताऽपि प्रथमं पदान्येव मुख्ये गौणे वाऽर्थे प्रयोक्तुमिच्छति प्रातिपदिकक्रमेण तु प्रयोक्तुं न वाञ्छति, एतावता सप्रमाणमिदमुक्तं यद् [3]गौणमुख्यन्यायः पदकार्ये एव न तु प्रातिपदिकार्थे एवञ्च [4]गौणमुख्यन्यायस्य पदकार्यविषयकत्वमुभयमत-सिद्धमिति राद्धान्तः।

**म० भा०[5] – आचार्यप्रवृत्तिर्ज्ञापयति—"नोञ्ञ एकादेश उञ् ग्रहणेन गृह्यते" इति। यदयम् "ओत्" इत्योदन्तस्य निपा-तस्य प्रगृह्यसंज्ञां शास्ति।**

(प्रदीपः)– [6]यदयमिति। एकादेशे कृते आदिवद्भावात् संज्ञासिद्धिः।

([7]उद्द्योतः) संज्ञासिद्धिरिति। निपात एकाजित्यनेनेत्यर्थः। स्थानिवद्भावेन तु नैतल्लभ्यम्। एकादेशस्थान्यल्वृत्तिधर्मत्वात्। एकादेशस्थान्यल्मात्रवृत्तिधर्मस्तु नायम्। उञिति समुदायेऽपि सत्वात्। तेनान्तादिवद्भावेन ताद्रूप्यानतिदेशेऽपि न दोषः।

अत्र समीक्षा—"उञ[8] ऊँ" इति सूत्रे "आहो इति" "उताहो इति" इत्यादि लक्ष्येषु अतिव्याप्तिमाशङ्क्य उक्तं नायम् "उञ्"शब्दः इति पुनरा-क्षेपं परिपोषयता उक्तम् अकारेण सह उञः एकादेशे "ओ" इति रूपं तत्र

१. पा० सू० ४।१।१३७
२. पा० सू० ४।१।९५
३. म० भा० पृ० २३१
४. म० भा० पृ० २३१
५. म० भा० आ० सू० १।१।५।६
६, प्र० पृ० २३३
७. उ० पृ० २३३
८. पा० सू० १।१।१७

परादिवद्भावेन सूत्रप्रवृत्तिर्भविष्यति । तदुपर्याक्षेपं परिहरति भाष्यकारः– आचार्यप्रवृत्तिर्ज्ञापयती[१]त्यादिना । अयमभिप्रायः एकादेशे कृते परादिवद्भावेन प्रगृह्यत्वं साधयितुं शक्यते, अत्र[२]निपात एकाजनाङिति सूत्रं प्रगृह्यत्वप्रापकं मन्तव्यम्, स्थानिवद्भावस्तु एकादेशस्थान्यल्वृत्तिधर्मत्वात्प्रतिसिद्धिरिति । पुनश्चाग्रे उद्द्योतकारः प्रदीपकारोक्तिं खण्डयनाह— [३]एकादेशस्थान्यल्मात्रवृत्तिधर्मस्तु नायम् उञिति समुदायेऽपि सत्वात्, तेन अन्तादिवद्भावस्य तादरूप्यातिदेशस्थले प्रवृत्तिभावेऽपि न क्षतिः, यतो हि न वा अतादरूप्यातिदेशादित्युक्त्या भगवता भाष्यकृता अन्तादिवद्भावस्य प्रवृत्त्यभावः उक्तः ।

तादरूप्यं तु वर्णमात्रवृत्तिधर्मः, अयं तु न तादृशः, पुनश्च यद्यपि "ओत्[४]" सूत्रस्य ज्ञापकता खण्डिता तथा हि "प्रतिसिद्धार्थोऽयमारम्भ इत्युक्त्या "अनङि"ति प्रतिषेधस्थले "निपात[५] एकाजि"त्यस्याप्राप्त्या [६]"ओदि"त्यस्य चारितार्थ्यं भविष्यति, अथ च ज्ञापने कृते सति "जानु उ अस्य रुजति" जनु अस्य रुजति, जान्वस्य रुजतीत्यत्र "मय उञो[७] वो वे"ति नत्वं न स्यादित्यादिना स्पष्टीकृतं महाभाष्ये ।

**इति महाभाष्य-समीक्षणे तृतीयाध्यायस्य प्रथमपादः ।**

---

१. म० भा० पृ० २३३
२. पा० सू० १।१।१४
३. उ० पृ० २३३
४. पा० सू० १।१।१५
५. पा० सू० १।१।१४
६. पा० सू० १।१।१५
७. पा० सू० ८।३।३३

# अथ द्वितीयः पादः

**म० भा०[1] – ज्ञापकं स्यात् तदन्तत्वे। एवं तर्हि ज्ञापयत्याचार्यो "न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवति" इति। किमेतस्य ज्ञापने प्रयोजनम्? कुमार्योरगारं कुमार्यगारं बध्वोरगारं बध्वगारम्। प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति।**

([2]प्रदीपः)—ज्ञापकमिति। ईदूदेदित्यत्र तृतीयचतुर्थपक्षयोरित्यर्थः। इह प्रगृह्यसंज्ञा प्रकरणे यदि प्रत्ययलक्षणं स्यात् तदेदूतौ च सप्तमीत्येव सप्तमीसहचरितं सप्तम्यां वा परतो यदीदूदन्तं तत् प्रगृह्यसंज्ञमिति प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां संज्ञा भविष्यतीति किमर्थग्रहणेन, तत् क्रियमाणं प्रत्ययलक्षणाभावं सूचयति।

([3]उद्द्योतः) – सप्तमीसहचरितत्वं च प्रत्ययलक्षणेन बोध्यम्।

अत्र समीक्षा—"ईदूतौ [4]सप्तम्यर्थे" इति सूत्रेऽर्थग्रहणाभावे "सोमो गौरी अधिश्रितः" इत्यत्र सप्तम्या लुकि सति "न [5]लुमते"ति प्रत्ययलक्षणनिषेधेन सप्तम्यन्तत्वाभावे गौरी इत्यस्य प्रगृह्यसंज्ञा न स्यात्। न च वचनसामर्थ्यात् सप्तमी सह चरितस्य ग्रहणेन इष्टं सेत्स्यति, पुनश्च "सरसी" इति स्थले इदन्तसप्तम्याः प्राप्त्या ज्ञापकता [6]निराकृता, तदनु ज्ञापकं स्यात्तदन्तत्वे, इति भाष्यवार्तिकमुपन्यस्तम्, एतत्प्रयोजनं तु कुमार्योरगारं कुमार्यगारमित्यत्र प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति। यदि [7]"ईदूदेदि"ति सूत्रे ईदन्तं यद्द्विवचनान्तमिति पक्षः स्यात्तदा प्रकृतलक्ष्ये ईदन्तत्वं साक्षाद् वर्तते द्विवचनान्तत्वं च भवति प्रत्ययलक्षणेन, एवञ्च प्रगृह्यसंज्ञायाः प्रवृत्तिर्दुर्वारः स्याद्, अत्र अर्थग्रहणेन तु ज्ञाप्यते यत्प्रगृह्यसंज्ञा प्रत्ययलक्षणेन च न भवति, अतः अर्थग्रणं चरितार्थम्।

---

1. म० भा० आ० सू० १।१।५।७
2. प्र० पृ० २३६
3. उ० पृ० २३६
4. म० भा० आ० सू० १।१।५।७
5. पा० सू० १।१।६२
6. भा० वा० १९३
7. पा० सू० १।१।११

अत्र [1]"ईदूदेदि"ति सूत्रीयौ तदन्तविधिघटितपक्षौ गृह्येते। यदि प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं स्यात्तदा "[2]ईदूतौ सप्तमी"त्येव सप्तमीसहचरितं सप्तम्याः वा परतो यदिदन्तमुदन्तं तत्प्रगृह्यमिति प्रयलक्षणेन लुप्तायामपि सप्तम्यां प्रत्ययलक्षणेन संज्ञा भविष्यतीति कृत्वाऽर्थग्रहणं व्यर्थीभूय प्रत्ययलक्षणाभावं ज्ञापयतीत्यादि सर्वं स्पष्टीकृतमस्ति प्रदीपादिग्रन्थे।

**म० भा०—[3]समानशब्दप्रतिषेधः। समानशब्दानां प्रतिषेधो वक्तव्यः। प्रनिदारयति, प्रनिधारयति। दाधाघुसंज्ञा भवन्तीति घुसंज्ञा प्राप्नोति।**

(प्रदीपः)—[4]समानशब्दानामिति। समानश्रुतीनामित्यर्थः। प्रनिदारयति, प्रनिधारयतीति। दृङ्धृङोर्णिचि वृद्धावाकारे कृते दाधाशब्दौ संपद्येते तौ चार्थवन्तौ। पश्चात्तु रपरत्वं क्रियमाणमागमभूतत्वादन्यत्वं न करोतीति प्राप्तिः।

(उद्द्योतः)—[5]समानत्वं नार्थत इत्याह—श्रुतीनामिति। तौ चेति। एतेनानर्थकत्वात्तयोर्घुत्वं नेत्यपास्तम्। पश्चादिति। प्रणिदापयतीत्यत्र पुगिवेति भावः। आगमभूतत्वात्। आगमत्वरूपत्वात्।

समीक्षा—[6]"दाधाघ्वदाप्" इति सूत्रे समानानुपूर्वीशब्दानां घुसंज्ञयोः प्रतिषेधः क्रियते भाष्यकृता तेन प्रणिदारयति प्रणिधारयतीत्यादिषु दाधाशब्दयोः घुसंज्ञा न भवति, प्रनिपूर्वकाभ्यां दृधृधातुभ्यां णिचि लटि चैते रूपे। अत्र दाधाशब्दयोर्नार्थवत्वमिति कृत्वा अत्र न भविष्यति घुसंज्ञा, यतो हि—[7]अर्थवद्ग्रहणे नार्थकस्य ग्रहणमिति परिभाषा उक्ता एव पूर्वम्। तर्हि अस्यापूर्ववचनस्य कावश्यकतेति जिज्ञासायामुक्तं प्रदीपकृता "[8]दृङ्धृङोर्णिचि" वृद्धौ आकारे कृते दाधाशब्दौ सम्पद्येते तयोश्चार्थवत्वमेव, रपरत्वं तु आगमरूपत्वात् पश्चात् जायमानम् अन्यत्वं न सम्पादयते इति। अत्र उद्द्योतकारः प्रणिदापयतीत्यस्य दृष्टान्तत्वमपि उपपादयति।

अथ च अनर्थकत्वाद् उक्तलक्ष्यघटकयोः दाधाशब्दयोः युक्तत्वं न स्यादिति

---

१. पा० सू० १।१।११ २. पा० सू० १।१।१९
३. म० भा० पृ० २४० ४. प्र० पृ० २४०
५. उ० पृ० २४० ६. म० भा० आ० सू० १।१।५।८
७. म० भा० २२६ ८. प्र० पृ० २४०

कस्यचिद् विदुषः प्रदीपकृद्विरुद्धं मतं निरासयति। वस्तुतस्तु [1]अर्थवद्ग्रहण-परिभाषया एव कार्यं निर्वाह्यं दार्धार्घटकयोर्दाधाशब्दयोर् आनर्थक्यमेव यतो हि वृद्धिसंज्ञकः आकारः क्रियमाणसन्योरपि भवति, अतः दारधारयो-रेवार्थवत्वं न तु दाधाशब्दयोः, यदि अकारे कृते "दा" इति शब्दमुद्दिश्य आगमभूतो रेफः आगच्छेत्तदा स्यादेव दाधाशब्दयोः कथञ्चिद् अर्थवत्वम्, यथा—"प्रणिदापयती"त्यत्र पुकः प्राग् दाशब्दस्यार्थवत्वमस्त्येव। प्रकृते तु न तादृशी स्थितिरिति दिक्।

**म० भा०—"[2]न वार्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते यथान्यत्र। न वा एष दोषः। किं कारणम्? अर्थवत आगमस्तद्गुणीभूतोऽर्थवद्ग्रहणेन गृह्यते। यथान्यत्र। तद्यथा--अन्यत्रापि अर्थवत आगमोऽर्थवद्ग्रहणेन गृह्यते। क्वान्यत्र? लविता चिकीर्षितेति।**

([3]प्रदीपः)--न वाऽर्थवत इति। लब्धात्मकस्य भावस्य निमित्तवशा-दुपचयापचयौ व्यपदेशहानिं न कुरुतः, यथा देवदत्तस्याङ्गाधिक्याङ्गच्छेदो इहाप्यन्तरङ्गत्वात् कृतायां दाधोर्घुसंज्ञायां पश्चादुत्पन्नः पुगागमो घुव्यपदेशं न निवर्तयति नाप्यर्थवत्वमित्यदोषः। अनर्थकस्याप्यागमो व्यपदेशहानिं न करोति, यथा सत्यपि रेफे आकाराकारयोर्गुणवृद्धिव्यपदेशहानिः। इह त्वर्थवतो ग्रहणादर्थवत इत्युक्तम्। यदा च प्रकृत्यर्थः प्रेण विशेष्यते तथाऽयं परिहारः, ण्यर्थविशेषणत्वे तु प्रस्य दाधौ प्रत्यनुपसर्गत्वाद् णत्वं न भवत्येव। तद्गुणीभूत इति। प्रयोगसंपादन उपकारक इत्यर्थः।

[4](उद्द्योतः)—भाष्ये तद्गुणीभूत इति। यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन। तद्ग्राहकेण तद्बोधकेन गृह्यते बोध्यते आगमविशिष्ट इति परिभाषार्थः। तदाह—लब्धात्मकस्येति। तेन दार्धारोर्व्यावृत्तिः सूचिता। अपचय इति दृष्टान्तार्थम्। अन्तरङ्गत्वादिति। इदं यथोद्देशे, कार्यकाले तु णत्वदेशा संज्ञाऽसिद्धा स्यादिति बोध्यम्। वस्तुतः कार्यकालपक्षे पूर्वं पुक्प्रवृत्ता-वपि दापो दाशब्देन ग्रहणाद् घुत्वं सुलभमेवेति चिन्त्यम्। घुव्यपदेशं न निवर्तयति नाप्यर्थवत्वमितीति। स्वाविशिष्टे तयोरानयनादिति भावः। अकाराकारयोरिति।

---

१. म० भा० पृ० २२६ २. भा० वा० २००
३. प्र० पृ० २४१ ४. उ० पृ० २४१

रेफविशिष्टयोरित्यर्थः। इह त्विति। घुसंज्ञा सूत्रे इत्यर्थः। अत्रेदं बोध्यम्। अङ्गावयवाकारस्य मुग्विधायकाने मुगिति सूत्रारम्भसामर्थ्येन क्वचिद्वर्णग्रहणे नास्याः प्रवृत्तिः। तेन दिदीये इत्यादौ यणादिकं न। अयमेवार्थो भाष्येऽर्थवद्ग्रहणेन ध्वन्यत इत्याहुः। प्रयोगेति। इदं चिन्त्यम्। आगमवत्प्रत्ययादेरपि प्रयोगसंपादने उपकारकत्वेन तेषामपि प्रकृतिग्रहणेन ग्रहणापत्तिः मूलयुक्तेस्तुल्यत्वात्। अस्य मूलयुक्तित्वाभावे तु तत्कथनवैयर्थ्यापत्तिः। तस्मान्मदुक्तव्याख्यैव ज्यायसी।

अत्र समीक्षा—"प्रणिदापयती"त्यत्र पुकि कृते सति पकारान्त एव अर्थवान् न केवलो दाशब्दः, पुगन्तार्थे निरूपितमेव उपसर्गत्वं प्रनिशब्दयोः अस्यां परिस्थितौ यदि पुगन्तस्य घुसंज्ञा न स्यात्तदा "[1]नेर्गदनद"--इति सूत्रेण णत्वं न स्यादिति जिज्ञासायां समाधीयते भगवता भाष्यकृता—अर्थवत [2]आगमस्तद्गुणीभूतोऽर्थवद्ग्रहणेत गृह्यते।

अयमाशयः अर्थवच्छब्दमुद्दिश्य जायमान आगमः तद्गुणीभूत आगमिगुणीभूतः आगमिनिरूपिता अवयववान् इत्यर्थः। गुणशब्दस्य अवयवपरत्वात्। एवञ्च आगमविशिष्टस्य तद्ग्रहणेन आगमिग्राहकेण शब्देन ग्रहणं भवति, यथा लविता, पविता, इत्यादौ लूञ् पूञ् धातुभ्यां [3]ण्वुल्तृचाविति तृचि, [4]तस्यार्धधातुकस्येड्बलादेरिति इडागमे इकारविशिष्टस्य "इत्रि" शब्दस्य तृच्ग्राहकेन आर्धधातुकशब्देन ग्रहणे कृते सति "[5]सार्वधातुकार्धधातुकयो"रित्यनेन आर्धधातुकपरत्वमादाय गुणो भवति, यदि इड्विशिष्टस्य तृचः तद्ग्रहणेन ग्रहणं न स्यात्तदा आर्धधातुकत्वाभावात् गुणो न स्यादिति भाष्याक्षरार्थः।

अत्र प्रदीपकृद्भिरुच्यते स्वरूपे प्रतिष्ठितस्य पदार्थस्य केनचित् कारणेन कश्चन अङ्गस्य वृद्धिर्भवेत् ह्रासो वा भवेत् तेन तस्य पदार्थस्य आत्मव्यपदेशो न ह्रियते यथा—देवदत्तस्य किञ्चिदङ्गं वर्द्धते ह्रसति वा। अवस्थाद्वयेऽपि देवदत्तो देवदत्त एव न हि तद्भिन्नो व्यपदिश्यते। एवमिहाडापि तृचः इडागमरूपावयववृद्धिः तदीयमार्धधातुकत्वमर्थवत्वं वा निवर्तयितुं न शक्नोति। तथा "दा"धातोः अन्तावयवरूपा पुगागमवृद्धिः तदीयं धातुत्वम्, अर्थवत्वञ्च निराकर्तुं न क्षम्येत्, किं बहुना अनर्थकमपि उद्दिश्यजातः आगमः तद्व्यपदेशं न, निरसयति, यथा—अकाराकारौ उद्दिश्य

---

१. पा० सू० ८।४।१७
२. म० भा० पृ० २४१
३. पा० सू० ३।१।३३
४. पा० सू० ७।२।३५
५. पा० सू० ७।३।८४

विहितः रेफागमः तदीयगुणवृद्धिव्यपशं न हापयति, एवञ्च आगम-विशिष्ट इक आगमिग्रहणेन ग्राह्यता सुतरां सिध्यति, प्रकृते त्वस्त्येव तादृशी परिस्थितिः।

यदा दारूपधात्वर्थं प्रति उपसर्गसंज्ञा तदा अनेन न्यायेन परिहारः समुचितः, यदा तु णिजन्तार्थं प्रति प्रतिशब्दयोरुपसर्गत्वे तु णत्वं नैव भवति, दाधाधात्वर्थौ प्रति उपसर्गत्वाभावात्, एवञ्च णत्वघटितं प्रणिदापयते इति, णत्वाघटितं प्रणिदापयते इति च रूपद्वयम् अर्थभेदात् भवत्येव, प्रथमपक्षे प्रकर्षेण नितरां दानमित्यर्थबोधः प्रनिपूर्वकात् दाधातोः, द्वितीयपक्षे तु प्रकर्षेण नितरां दापनं ( दानप्रेरणा ) प्रयोजकवृत्तिः व्यापार इति बोधः प्रनि-पूर्वकस्य दापिधातोः।

ननु गुणशब्दः न्यायनये रूपरसगन्धस्पर्शादिषु प्रसिद्धः, सांख्यमते सत्व-रजस्तमःसु प्रसिद्धः, भक्तिदर्शने दयादाक्षिण्यसौशिल्यनैपुण्यादिषु प्रसिद्धः, व्याकरणदर्शने तु—सत्वे [1]निविशिते पयः पृथक्जातिषु दृश्यते। आधेयश्चा-क्रियाजश्च सोऽसत्वप्रकृतिर्गुणः। [2]इजि वोतो गुणवचनादिति, सूत्री-यभाष्योक्तलक्षणेन लक्षितः अद्रव्यस्वभावः कदाचिद् द्रव्ये निविश्यमानः कदाचिच्च द्रव्यं निरयमाणः जातिभिन्नः आधेयात्मा अक्रियाजश्च पदार्थः गुणपदेनोच्यते, एतेषु कतमोऽयं गुणपदार्थः परिभाषायामस्यां प्रविष्टः इति जिज्ञासायामुक्तं प्रदीपकृतैव [3]तद्गुणीभूत इति प्रयोगसम्पादने उपकारकः इत्यर्थः। अयं भावः यथा लोकप्रसिद्धो रूपरसादिगुणः दयादाक्षिण्यादिगुणो वा गुणिनः पदार्थस्य उपकारं विदधाति, तथैव व्याकरणशास्त्रे प्रख्यातो गुणोऽपि ( विशेषणीभूतधर्मः आगमादिर्वा ) उद्देश्यभूतस्य गुणिनः ( आगमिनः ) उपकारं सम्पादयति। अत एव तद्ग्रहणेन तद्विशिष्टस्य ग्रहणं भवति, आगमोऽपि अवयवोऽस्ति अवयविनमागमिनम् उपकरोति, तदीयं व्यपदेशं स्वविशिष्टे स्थापयन् तन्नाम वर्द्धयति, लोकेऽपि कर्णनेत्रनासिका-हस्तपादाद्यवयवाः अवयविनं शरीरमुपकुर्वन्ति, यदि तेन स्युः किं वा एकस्यापि न्यूनता स्यात्तर्हि अवयवि देवदत्तादिः बधिरः, काणः, विग्रः, लुण्येकः, खञ्जः इत्यादि शब्दैर्व्यपदिश्यते, लोके निन्दाश्चानुभवति, अतः गुणरूपस्यावयवस्य सर्वतोभावेन उपकारकता प्रसिध्यति।

यद्यप्यत्र "आद्यन्तौ टकितौ"[4] इति शास्त्रबलाद् अवयवत्वं साध्यते तर्हि

---

१. वै० भू० सा० सी० नि०　　२. पा० सू० ४।१।४४
३. प्र० पृ० २४१　　४. पा० सू० १।१।४६

तत्साधनेनैव कार्यनिर्वाहः सम्पाद्यताम् अलम् अनया परिभाषया इति वक्तुं शक्यते, तथापि, आद्यन्तौ[1] टकितौ" इत्यादि शास्त्रप्रामाण्येन आरोपितम् अवयवत्वम् आगमिनिरूपितं कामं भवेन्नाम तेन आगमिना आरोपितावयवभूतः तदागमविशिष्टस्य ग्रहणं कुतः स्यात्, यदि तत्र किञ्चिद् प्रमाणं न स्यात्, लोकेऽपि देवदत्तस्य हरदत्तः 'भ्राता वा पुत्रो वा भवेन्नाम किन्तु कस्मिश्चिद् निमन्त्रणादिकार्ये यदि तद् मात्रादिसहितः न निमिन्त्रितो भवेत् तर्हि कथं तत्सहितः आगन्तुं क्षमेत्, अतः तन्निरूपितमातृत्वादिज्ञानमन्यत्, तन्निरूपितभ्रातृत्वादिविशिष्टस्य तद् ग्रहणेन ग्रहणमन्यद् उभयोरपि पक्षयोः प्रमाणापेक्षा अस्त्येव, एवञ्च परिभाषेयम् आगमविशिष्टय आगमिग्रहणेन ग्रहणाय आवश्यकी ।

इममेवाशयमुद्द्योतकारः श्रीनागोजिभट्टोऽपि प्रकाशयति, यमुद्दश्यागमो[2] विहितः सः तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधकः, तद्ग्रहणेन तद्ग्राहकेन तद्बोधकेन गृह्यते बोध्यते इति परिभाषार्थः । प्रदीपकारीयं ( लब्धात्मकस्य भावस्य ) इत्यंशं व्याचष्टे उद्द्योतकारः लब्धात्मकस्येति । तेन दार्धारोर्व्यावृत्तिः सूचिता, इति ।

अयमाशयः दार्धारोर्घटिकौ दाधाशब्दौ न लब्धात्मकौ यतो हि "समुदायो ह्यर्थवान् तस्यैकदेशोऽनर्थक" इतिरीत्या दार्धारोर्घटिकौ दाधाशब्दौ अनर्थकौ, लब्धात्मकस्य पदार्थः स एव भवति यः स्वरूपे भूतया आनुपूर्व्या स्वार्थबोधकशक्त्या च शब्दो यदा पर्याप्तो भवति तदैव लब्धात्मक इत्युच्यते । दार्धारोर्घटकौ दाधाशब्दौ तु नार्थवन्तौ ( न हि अर्थबोधकशक्त्या पर्याप्तौ ) आगमसमभिव्याहारे आगमिविशिष्टस्यैव अर्थवत्वात् । लोकेऽपि शरीरेऽङ्गाधिक्ये सति तद्विशिष्टस्यैव शरीरवृत्तिचलनादिक्रिया प्रतीयतेऽनुभूयते न तदाधिक्यवेलाया' तद्रहिते शरीरे । यत्तु प्रदीपकृता [3]उक्तमङ्गापचयोऽपि व्यपदेशहानिं न कुरुत इति । तत्तु एतत् परिभाषायाः अतनुरूप्यं न हि आदधाति, यतो हि—आगमो न ह्यपचयात्मा अपितु उपचयात्मैव, तदुपरि उद्द्योतकारः व्याख्याति [4]अपचय इति दृष्टान्तार्थम्, एवञ्च यथा "नेमौ रहौ कार्यिणौ" किं तर्हि निमित्तौ इमौ द्विर्वचनस्येत्युक्तं भाष्यकृता तत्र हकारस्य यर्प्रत्याहारे अनन्तर्गतत्वात् कथं "नेमौ रहौ कार्यिणौ"

१. पा० सू० १।१।४६ २. उ० पृ० २४१

३ प्र० पृ० २४१ ४. उ० पृ० २४१

इति भाष्योक्तिः सङ्गच्छेदिति आशङ्क्योक्ति प्रदीपग्रन्थे हकारोपादानं दृष्टान्तार्थमिति। अयंभावः यथा हकारस्य स्वत एव कार्यित्वं नास्ति तथैव रेफस्य यर्प्रत्याहारे वर्तमानत्वेऽपि कार्यित्वं नास्ति निमित्ततया तद्बाधात्। यतो हि निमित्तता प्रत्यक्षतो रहाभ्यामित्यनेन बोधिता, कार्यिता (स्थानिता) तु यर्प्रत्याहारान्ततया आनुमानिकी, अनुमानतो बोद्धुं शक्या, अनुमानाकारश्च [1]"अचोरहाभ्यामि"ति सूत्रीयो रेफः स्थानिवत्वाऽऽक्रान्तः यर्प्रत्याहारबोध्यत्वात् यन्नैवं तन्नैवं यथा—घटादिः। एवञ्च प्रत्यक्षप्रमाणस्य अनुमानप्रमाणोऽपि उपजीव्यत्वेन प्राबल्यात् तद्बोधिता रेफनिष्ठा निमित्तता प्रबलाः अतः तादृशनिमित्ततया आनुमानिकी तदीया स्थानिता बाधिता भवति।

यत्तु प्रदीपकृता उक्तम् अन्तरङ्गत्वात् कृतायां दाधोर्घुसंज्ञायां पश्चादुत्पन्नः पुगागमो घुव्यपदेशं न निवर्तयति नाप्यर्थवत्वमिति अदोष इति, तत्रोक्तमुद्द्योतकृता—अन्तरङ्गत्वादिति। इदं यथोद्देशे, कार्यकाले तु णत्वादेशसंज्ञा असिद्धा स्यादिति बोध्यम्।

वस्तुतः कार्यकालपक्षे पूर्वं पुकः प्रवृत्तावपि दापो दाशब्देन ग्रहणात् घुत्वं सुलभमेवेति चिन्त्यमिति। अस्यायमाशयः यद् यथौद्देशपक्षे एव संज्ञाया अन्तरङ्गत्वं पुगपेक्षया पूर्वं प्रवृत्तौ बीजं भविष्यति, तस्मिन् पक्षे स्वदेशे एव संज्ञाशास्त्रीयबोधः। कार्यकालपक्षे तु णत्वरूपकार्यविधायकतिबादिदेशे [1](नेर्गदनदेति सूत्रदेशे) एतद् घुसंज्ञा सूत्रमुपस्थितं भविष्यति, एवञ्च तद्देशस्थतया पुगागमदृष्ट्या असिद्धा भविष्यति तर्हि कथं तस्यापूर्वं प्रवृत्तिरिति आक्षेपरूपः उद्द्योतग्रन्थाशयः। तत्रोच्यते [2]एकतरेण पक्षेण लक्ष्यसिद्धिः पक्षान्तरेण दोषदानमनुचितमिति भाष्योक्तसिद्धान्तेन अत्र यथोद्देशपक्ष एव समाश्रयणीयः, न तु दोषदानाय कार्यकालपक्षः, दोषं निराकर्तुमेव उपायो विधीयते न तु तमाधातुम्।

अग्रे च पुनः उद्द्योतकृता उच्यते—[3]वस्तुतः कार्यकालपक्षे—इत्यादि तेनापि इदं ज्ञायते यत् यथा यथोद्देशपक्षेऽन्तरङ्गत्वात्पुगः पूर्वं प्रवृत्तिः, तथैव कार्यकालपक्षे सिद्धात्वापेक्षया सिद्धत्वात्पुगः पूर्वं प्रवृत्तिरति पक्षद्वयेऽपि णत्वसिद्धिरिति, तदपि प्रदीपानुरूपमेव। यतो हि प्रदीपकारः कस्यचनपक्षस्य उल्लेखं कृत्वा स्वीयं मतं न साधयति प्रत्युत कार्यकालपक्षेऽपि यदि

---

१. पा० सू० ८।४।४६ २. पा० सू० १।१।५८
३. उ० पृ० २४१

पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन तदा पुगागमात्पूर्वमेव दा-धातुगतं घुत्वमादाय णत्वप्रवृत्तिर्सुलभा, यदि तु पूर्वं धातुः साधनेन युज्यते तदा कार्यकालपक्षे घुसंज्ञायाः णत्वविधायकशास्त्रीयनिमित्तनिमित्तकतया समाननिमित्तकत्वमायाति, तत्रापि घुसंज्ञके धातौ परतः णेर्नकारस्य णत्वं भवति इत्यर्थेन घुसंज्ञाया एव णत्वनिमित्ततया अन्तरङ्गत्वात् पूर्वं प्रकृति-रुचिता, इत्येवं विमर्शे तस्मिन् पक्षेऽपि पूर्वोपस्थितत्वरूपमन्तरङ्गत्वं घुसंज्ञायामस्त्येव। प्राचीनमते त्रिपाद्यामपि कार्यकालपक्षेऽन्तरङ्गपरिभाषा प्रवर्तत एव, इति रीत्या पक्षद्वयेऽपि अन्तरङ्गत्वादेव घुसंज्ञा एवं दापोग्रहणेन ग्रहणात् घुत्वं सुलभमिति कार्यकालपक्षीया उद्द्योतग्रन्थोक्तिरेव चिन्तनीया प्रतिभाति।

पुनश्चाग्रे रेफविशिष्टयोः अकाराकारयोः गुणवृद्धिव्यपदेशयोः न हानि-रिति प्रदीपाशयं प्रकाशयन् उद्द्योतकारः क्वचिद् वर्णग्रहणेऽस्याः न प्रवृत्तिरिति बोधयति, तत्र च "आने [1]मुगि"ति मुग्विधानसामर्थ्यादिति प्रमाणयति। "दिदीये" इत्यत्र यणाद्यभावरूपं फलं च दर्शयति। अयमेवार्थो भाष्येऽर्थवद्ग्रहणेन ध्वन्यते इति च व्याचष्टे। अत्रेदमुच्यते यत् मुग्विधान-सामर्थ्येन वर्णग्रहणे ( वर्णमात्रबोधकपदघटितसूत्रे ) यदि आगमनिरूपि-तोद्देश्यता वर्णत्वव्याप्यधर्मावच्छिन्ना स्यात्तदा अस्याः परिभाषायाः सर्वथैव अप्रवृत्तिरिति प्राचीनानामाचार्याणाम् ( कैयटादीनाम् ) एव सिद्धान्तः समीचीनः प्रतिभाति। तेनापि "दिदीये" इत्यत्र यणभावः जहार इत्यादौ च णलः औकारादेशाभावः सुतरां सिध्यति। प्रथमे प्रयोगे दीङः परस्य अजादेः क्ङितः युडागमः [2]विहितः "दीङो युडची"ति सूत्रेण। तत्र युडागम-निरूपिता उद्देश्यता अजादित्वविशिष्टकित्वाद्यवच्छिन्ना यद्यपि सा साक्षात् वर्णत्वव्याप्यधर्मावच्छिन्ना नास्ति तथापि परम्परया त्वस्त्येव, अथवा वर्णत्वव्याप्यधर्मावच्छिन्ना वर्णत्वव्याप्यधर्मघटितधर्मावच्छिन्ना वा उभय-विधापि सा उद्देश्यता ग्रहीतुं शक्यते।

वर्णग्रहणे क्वचिन्नास्याः प्रवृत्तिरिति वाच्यकत्वकल्पनया संकोचकरणे समीचीनं बीजं न लक्ष्यते, परिभाषायाम् अर्थवद्ग्रहणरूपं बीजं तु मदीये सामान्यापेक्षपक्षेऽपि भवत्येव, यतो हि वर्णमात्रवृत्तिविषयताप्रयोजकं पदं प्रायोऽनर्थकमेव भवति। जहार इति द्वितीये प्रयोगे आकारस्य रेफागमः स

---

१. पा० सू० ७।२।८२ २. पा० सू० ६।४।६३

तु सर्वथा अनर्थकाकारवृत्तिः अत्त्वव्याप्यत्वधर्मावच्छिन्न एव, अत एव, दिवीमानः इत्यत्र [1]''तास्यनुदात्तेदि'ति सूत्रेण अनुदात्तस्वरसिध्यर्थम्, [2]''आने मुगि''ति सूत्रस्य अङ्गावयवस्य अकारस्य मुक् स्याद् आने परे, इत्यर्थं विहाय अङ्गावयवस्य अदन्तस्य मुगागमः इत्याद्यर्थः कृतो महाभाष्ये, तेन अदन्तत्वावच्छिन्ना उद्देश्यता तत्सम्पन्नः न तु अत्वावच्छिन्ना ।

अतः यद्वृत्ति अदन्तोपदिश्यमानत्वं मुग्विशिष्टेऽनया परिभाषया आनीय अनुदात्तो भवत्येव, अदन्तोपदिश्यमानत्वं न वर्णमात्रवृत्तिधर्मः, नापि वर्णत्वव्याप्यधर्मघटितधर्मः, स्फोटस्य अखण्डत्वात् ''दिदीये'' इत्यत्र तु अजादित्वविशिष्टं कित्वमपि यद्यपि स्फोटाखण्डत्वपक्षे न वर्णत्वव्याप्यधर्मघटितः तथापि तत्र स्फोटस्य सखण्डत्वपक्षः आदर्तव्या लक्ष्यानुरोधात् । अत्र एवमुच्यते एकतरेण पक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानं नोचितम् ।

यत्तु अग्रे प्रयोग इति प्रतीकमादाय प्रदीपग्रन्थे व्याचक्षाणः उद्द्योतकृद् ब्रवीति यदिदं चिन्त्यं प्रत्ययादेरपि प्रयोगसम्पादने उपकारकत्वेन तेषामपि प्रकृतिग्रहणेन ग्रहणापत्तिरिति । एतद् कथनमपि प्रदीपग्रन्थस्य ईषदपि क्षतिं न विदधाति, यतो हि आगम अपूर्वः शब्दोपजनः, इति भाष्योक्त्या आगमस्य शब्दस्य रूपमात्रसम्पादकत्वं न तु तस्यार्थबोधकत्वमपि । प्रत्ययस्तु अर्थबोधकः सन् क्वचित् सर्वतोभावेन लुप्यत इति । इति कृत्वा न तस्य स्वरूपमात्रसम्पादकता, यथा—लिट् लिड् इत्यादौ लिह् धातोः कर्तरि क्विपि तस्य सर्वापहारिलोपे प्रकृतमात्रमवशिष्यते तर्हि कथं तत्र प्रयोगसम्पादकता स्यात्, अर्थबोधकताऽपि ''यः शिष्यते सः लुप्यमानार्थाभिधायी'' इति न्यायेन प्रकृतेरेव आगमस्य तु न क्वापि इदृशी लोपावस्था याति, यद्यपि [3]सम्परिभ्यां करोतौ भूषणे, इत्यनेन संस्कारादिशब्दे विहितस्य सुडः भूषणाद्यर्थकता प्रतीयते तथापि तत्र सुटो द्योतकत्वमात्रप्रकृतेरेव तद्वाचकत्वात्, प्रत्ययास्तु नार्थस्य द्योतका अपितु वाचकाः, एवञ्च आगमानां प्राधान्येन प्रयोगस्वरूपसम्पादकत्वमेव न तु अर्थबोधकाः, एवञ्च प्रत्ययानां प्रयोगमात्रोपकारकत्वाभावाद् न प्रकृतग्रहणेन ग्रहणापत्तिः । एवञ्च आगमस्य आगमिगुणीभूतत्वे कैयटोक्ता युक्तिः मूलयुक्तिरस्त्येव, शास्त्रेण तदवयवत्वेन बोधिरिति उद्द्योतग्रन्थिरपि समीचीना एव । मन्ये तावत् प्रदीपकारः एनां युक्तिं बुद्धिस्थकृत्यैव स्वीया' युक्तिं दर्शितवान् । यतः

---

१. पा० सू० ६।१।१८६ २. पा० सू० ७।२।८२

३. पा० सू० ६।१।१३७

आगमोऽवयवो भूत्वा आयाति, प्रत्ययस्तु परो भूत्वा, लोकेऽपि यः कश्चन आगत्य कञ्चित् प्रतिवदति यदहं भवताम् अङ्गमस्मि तर्हि नूनं सः तस्य स्वरूपं वर्द्धयति। यश्चागत्य वदति यदहं सर्वथैव भवतां सन्निधिं विधास्यामि तदा सः कथञ्चित् सहायको भवेन्नाम स्वरूपवर्द्धकस्तु न भवति, एवञ्च तयोरिव आगमप्रत्यययोरपि महान् भेदः, अतः प्रदीपकारोक्तेश्चिन्त्यत्वकथनम् अस्याः युक्तेश्च अनर्थकत्वकथने न समीचीनम्।

प्रदीपकारीययुक्तेः मूलयुक्तित्वं नास्तीति कथनम् उद्द्योतकारस्य लुग्त्वविषये कथञ्चित् युज्यते, यतो हि-[1]"आद्यन्तावि"त्यादि शास्त्रेण अवयवत्वेन बोधद्वयं सर्वतो भावेन अत्रापि मूलम्। आश्चर्यं तु इदमेव यत् प्रदीपकारः स्वीययुक्तेः मूलयुक्तित्वं न प्रतिजानीते। उद्द्योतकारः स्वकल्पना तस्यां मूलयुक्तित्वमारोप्य आक्षिपति।

**म० भा-[2]आदेशास्तर्हीमे भविष्यन्ति अनागमकानां सागमकाः। तत् कथम्?**

**सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।**
**एकदेशविकारे हि नित्यत्वं नोपपद्यते॥**

([3]प्रदीपः)--आदेशस्तर्हीति। इड्भवतीत्यनेन द्वारेण तव्यस्येतव्यादेशः क्रियते। सर्वे इति। आगमा अपीत्यर्थः। सर्वपदादेशा इति। पदशब्देन न सुप्तिङन्तं गृह्यतेऽपि तु कार्यं प्रतिपद्यमानं—प्रतीयमानं ( यत् ) प्रकृतिप्रत्ययादि तत् सर्वं पदम्। एकदेशविकारे हीति। यद्यपि सर्वविकारेऽप्यनित्यत्वं यथा पिठरस्थस्य पयसः पाकादिषु, तथापि विकाराभावप्रतिपादनपरमेतत्। बुद्धिविपरिणाममात्रं स्थान्यादेशागमागमिभावद्वारेण क्रियत इत्यर्थः।

([4]उद्द्योत)—आदेशास्तर्हीम इति। इमे आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि आदेशास्तत्सदृशाः भविष्यन्तीत्यर्थः। आद्यान्तावित्याद्येकवाक्यतया आर्धधातुकस्याद्यावयव इडित्यर्थे वृत्ते नित्यत्वानुपपत्तिमूलकवाक्यान्तरकल्पनेन केवलतव्यबुद्धौ प्रसक्तायामिकारादिः साधुरिति बोधः। तेनात्रापि बुद्धितिपरिणाममात्रस्यैव सत्वेन न नित्यत्वहानिरिति भावः।

---

१. पा० सू० १।१।४६ २. म० भा० पृ० २४२
३. प्र० पृ० २४२ ४. उ० पृ० २४२

अत्र समीक्षा--[1]शब्दनित्यत्वपक्षे आगमविधानं नोपपद्यते इति कृत्वा-आदेशास्तर्हीमे भविष्यन्ति, अनागमकानां सागमकाः आदेशाः। तथा हि--

**सर्वे सर्वपदादेशा: दाक्षीपुत्रस्य पाणिनेः।**
**एकदेशविकारे हि नित्यत्वं नोपपद्यते[2] ॥ इति।**

एवञ्च भवितव्यमित्यादौ भूधातोः तव्यप्रत्ययः तस्य च आद्यवयवरूप इडागमः न, अपितु तव्यस्य स्थाने इतव्यादेशः, ततश्च "भू इतव्य" इत्यस्य स्थाने गुणादि द्वारेण भवितव्यादेशः, अत्र कारिकायां पदशब्देन [3]"सुप्तिङन्तं पदमि" ति न ग्राह्यम्, अपितु पद्यते गम्यतेऽर्थो अनेनेति रीत्या शक्तं पद-मिति पारिभाषिकं पदं ग्राह्यम्।

एवञ्च प्रकृतिप्रत्ययादि सर्वमत्र पदशब्देन ग्रहीतुं शक्यते, [4]एकदेश-विकारे नित्यत्वं नोपपद्यते, अनया भाष्योक्त्या इदं ध्वन्यते यत् सर्वविकारे तु तदुपपद्यत इति, तत्तु न आदर्तव्यम्, विकारमात्रस्य उपलक्षणपरमेतद् भाष्यं सर्वविकारेऽपि नित्यत्वम् अनुपपन्नमेव, यतो हि नित्यं वस्तु कदापि न विक्रियते नापि एकदेशात्मना नापि सर्वात्मना, अवयवचर्चायाः तत्राभावात् कथञ्चिदपि विकारे सति अनित्यत्वोपातात्च। एवञ्च बुद्धिविपरिणाममात्रं क्रियते, शब्दस्तु साधुर्भवेद् असाधुर्वा भवेत्, स्वरूपेण नित्य एव।

ननु अनया रीत्या प्रकृते दाशब्दस्य स्थाने "दाप्"आदेशः क्रियते तर्हि दाशब्दस्य आनर्थक्यं प्राप्नोति इति चेदुच्यते शब्दनित्यत्वसमर्थनाय, अयं पक्षः समाश्रियते, प्रक्रियापक्षे तु आगमागमिभाव एव। अत एव आगमा-देशयोः भेदोऽपि सङ्गच्छते। इमं प्रदीपाभिप्रायं व्याचक्षाणः उद्द्योतकारः ब्रवीति यत् कारिकायाः पूर्वार्द्धे [5]सर्वे सर्वपदादेशा इत्युक्तम्, उत्तरार्द्धे तु एकदेशविकारे इत्याद्युक्तम्, तच्च वाक्यशेषानुगुणं नास्ति, यतो हि विकार-व्यापकीभूतं यदभावप्रतियोगित्वं तद्रूपानित्यत्वाननुपत्तिः, आगमस्य आदेशत्वमुपपादयति, यदि एकदेशस्यैव विकारः संकीर्त्यते तर्हि तादृश-नित्यत्वानुपपत्तिरूपहेतुः सकलपक्षावृतत्वेन सर्वेषु विकारेषु आदेशत्वं साधयितुं न शक्नुयात्। अतः विकाराभावोपपादनपरमेतदिति प्रदीपग्रन्थः सङ्गच्छत एव।

---

१. उ० पृ० २४२
२. म० भा० पृ० २४२
३. पा० सू० १।४।१४
४. म० भा० पृ० २४२
५. म० भा० पृ० २४२

**म० भा०—[1]तत्र व्यपदेशिवद्वचनम्। तत्र व्यपदेशिवद्भावो वक्तव्यः। व्यपदेशिवदेकस्मिन् कार्यं भवतीति वक्तव्यम्। किं प्रयोजनम्?**

प्र०—[2]तत्र व्यपदेशिद्वचनमिति। सर्वकार्यसिद्ध्यर्थं व्यापकं कर्त्तव्यमित्यर्थः। यत्र निमित्तसद्भावान्मुख्यो व्यपदेशो यस्यास्ति स व्यापदेशी, यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशः स देन तुल्यं वर्तते कार्यं प्रतीति "व्यपदेशिवद्भवती" त्युच्यते।

(उद्द्योतः)—[3]सर्वकार्येति। आद्यन्तापदिष्टाद्यन्तानपदिष्टसर्वकार्यसिद्धार्थं गुर्वपि "व्यवदेशिवदि"ति "आद्यन्तव"दित्यस्य स्थाने कार्यमिति भावः स तेनेति। "[4]तेन तुल्यमिति तृतीयायां सर्वविभक्त्यर्थान्तर्भावात्तृतीयान्ताद्वतिरुक्त इति बोध्यम्।

अत्र समीक्षा—"आभ्यामि"त्यादौ अकारस्य दीर्घो न स्यात् तदन्तत्वाभावादित्याशङ्कायां सूत्रकृता उच्यते [5]आद्यन्तवदेकस्मिन्निति। तत्र वार्तिककारः "[6]अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन्नि"ति वचनं रचितवान्। **अयमाशयः** परस्मिन् सति यस्मात् पूर्वं नास्ति स आदिः इत्याकारके आदिलक्षणे परस्मिन् सतीत्यंशस्य प्रवेशो न कार्यः, यस्मात् पूर्वो नास्ति इत्येतावन् मात्रमेव आदेर्लक्षणे विधातव्यम्, तच्च एकस्मिन्नपि भविष्यति। एवमेव पूर्वस्मिन् सति यस्मात् परो नास्ति सोऽन्तः, इति अन्तलक्षणे पूर्वस्मिन् सतीत्यंशो न देयः, यस्मात्परो नास्ति, एतावन् मात्रमेव लक्षणं कर्तव्यं तच्च एकस्मिन्नपि संगतं भविष्यति, अतः आभ्यामित्यत्र आकारस्य दीर्घः सिद्धः। किन्तु एवमपि धुक्-धुग् इत्यादौ स्वस्मिन्, स्वावयवत्वाभावात् "[7]एकाचो वशो भष्" इति भष्भावो न स्यादतः "सूत्रं कार्यं नापि वार्तिकं कार्यं किन्तु [8]व्यपदेशिवदेकस्मिन्निति परिभाषा मन्तव्याः तया च सर्वत्रेष्टसिद्धिर्भविष्यति। तदेवोच्यते भाष्यकृता व्यपदेशिवद्भावो वक्तव्यो [9]व्यपदेशिवदेकस्मिन् कार्यं भवतीति वक्तव्यम्।

अत्र प्रदीपकारः निमित्तसद्भावात् मुख्यो व्यपदेशो यस्यास्ति स

---

१. भा० वा० २०६
२. प्र० पृ० २४७
३. उ० पृ० २४७
४. पा० सू० ५।१।११५
५. म० सू० भा० आ० सू० १।१।५।९
६. का० वा० २१०
७. पा० सू० ८।३।३७
८. म० भा० पृ० २४८
९. म० भा० पृ० २४७

व्यपदेशी, यस्तु व्यपदेशहेत्वभावाद् अविद्यमानव्यपदेशः स तेन तुल्यं वर्तते कार्यं प्रतीति व्यपदेशिवद् भवतीति उच्यते।

ननु एकस्मिन्निति उपमेयांशे सप्तम्यन्तता अस्ति तर्हि उपमावाचकाद् व्यपदेशिशब्दादपि सप्तम्यन्तादेव "तत्र [1]तस्येव" इति सूत्रेण वतिप्रत्ययः कर्तव्यः यथा मथुरायामिव इति मथुरावत्, स्रुघ्ने प्राकार इत्यादौ सप्तम्यन्ताद् वतिप्रत्ययो भवति, इत्याशङ्कायां प्रदीपाशयं विवृणोति उद्द्योतकारः [2]तेन तुल्यमिति तृतीयायां सर्वविभक्त्यर्थान्तरभावात् तृतीयान्ताद् वतिः युक्तः, एवञ्च तृतीयायाः उपपदविभक्तित्वात् षष्ठ्यर्थत्वम्, फलतः सप्तम्यर्थत्वमपि इत्यभिप्रायः। लोकन्यायसिद्धा इयं परिभाषा यथा [3]देवदत्तस्य एक एव पुत्रः स एव ज्येष्ठः स एव कनिष्ठः स एव मध्यमः, यस्य त्रयः पुत्राः तत्र ज्येष्ठत्वादिव्यवहारः सुसंगत एव, यस्य तु एक एव तत्र इयं परिभाषा ज्येष्ठ्यत्वादिव्यवहारः सम्पादयति, भगवता भाष्यकृता यासूतायाम् अशोष्यमाणायाञ्च भवत्ययं व्यवहारः [4]प्रथमगर्भेण हता इति एवम् अनेत्य अनाजिगमिषु कश्चन वदति, इदं मे प्रथममागमनम्, इत्यादयो व्यवहारोऽपि एतद् परिभाषा मूलत्वेन प्रदर्शिता।

[5]"एकाचो द्वे प्रथमस्ये"त्यत्र इयाय, आर इत्यादि सिद्धिरपि फलत्वेन निर्दिष्टा। अन्यथा "एकाचो द्वे" इति सूत्रं ब्रहुव्रीहिबलात् पपाच इत्यादावेव स्याद्, "इयाय" इत्यादौ तु न स्यात्।

**[6]म भा०—"तरब्ग्रहणं ह्यौपदेशिकम्" औपदेशिकस्य तरपो ग्रहणम्। न चैष उपदेशे तरप्शब्दः।**

[7](प्रदीपः)—औपदेशिकमिति। उपदेशः प्रयोजनमस्य, तत्र वा भवमौपदेशिकम्।

[8](उद्द्योतः)—तरप्ग्रहणं-तरप्शब्दः। औपदेशिकमुपदेशप्रयोजक इत्यर्थो भाष्यस्य। तदाह—उपदेशः प्रयोजनमिति प्रयोजक इत्यर्थः। न चैष उपदेशे तरप्शब्द इति भाष्यस्वरसादाह—तत्र वा भव इति। उपदेशे इति भाष्ये भव इति शेषः।

---

१. पा० सू० ५।१।११६
२. पा० सू० ५।१।११५
३. म० भा० पृ० २४९
४. म० भा० पृ० २४९
५. पा० सू० ६।१।१
६. म० भा० आ० सू० १।१।५।१०
७. प्र० पृ० २५३
८. उ० पृ० २५३

अत्र समीक्षा[१]—"तरप्तमपौ घः" इति सूत्रे तरणतरः नद्यास्तरः नदीतरः, इत्यत्र प्रकृतसूत्रेण घसंज्ञा कस्मान्न भवति, यतो हि तृधातोः अप्प्रत्ययः तर्हि तरप्शब्दो वर्तते एव इति जिज्ञासायामुच्यते भगवता [२]तरब्ग्रहणं ह्यौपदेशिकमित्ययं भावः, उपदेशावस्थायां यः तरप्शब्दः उक्तस्तस्यैव घसंज्ञा भवति। अत्र भाष्ये औपदेशिकशब्दस्य व्युत्पत्तिः प्रदर्शयति प्रदीपकारः उपदेशः प्रयोजनमस्य तत्र भवमिति वा। तत्र प्रथमपक्षे [३]तदस्य प्रयोजनमिति ठञ्, द्वितीयपक्षे अध्यात्मादित्वात् ठञ् तस्येकादेशो आदिवृद्धौ च सत्याम् अयं शब्दः सिध्यति। तत्र प्रथमपक्षे उपदेशः प्रयोजक इत्यर्थः।

एवञ्च उपदेशप्रयोजक इत्यर्थः, तत्रोपदेशशब्दः उच्चारणमात्रवचनः, उपदेशनमुपदेश इति विग्रहात्, किन्तु अस्मिन् पक्षे न भाष्यस्वारस्यम्, यतश्चाग्रे उच्यते न चैष उपदेशे तरप्शब्दः, एतत् कथनेन उपदेशे भवः, इति विग्रहे स्वारस्यं प्रतीयते, तदेतत् सर्वं टीकाद्वये स्पष्टीकृतमस्ति, एवञ्च [४]"औपदेशिकप्रायोगिकयोः औपदेशिकस्यैव ग्रहणं कर्तव्यमित्येषा परिभाषा सूचिता, किन्तु अग्रिमे भाष्ये प्रायोगिकस्यैव प्राधान्यमुक्तमित्यन्यत्।

**[५]म० भा०—नैष दोषः। अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति। अर्थो वाऽस्यैवं सञ्ज्ञकेन भवति। प्रकृतं वा तत्र भवति इदमेवं संज्ञकेन कर्तव्यमिति। आतश्चार्थात् प्रकारणाद् वा। अङ्ग हि भवान् ग्राम्यं पांशुरपादमप्रकरणज्ञमागतं ब्रवीतु—गोपालकमानय, कटजकमानयेति। उभयगतिस्तस्य भवति। साधीयो वा यष्टिहस्तं गमिष्यति।**

अत्र समीक्षा—भाष्यमिदं प्रदीपकृता इत्थं व्याख्यायते यत् [६]"बहुगणवतुडदि"ति सूत्रे संख्याग्रहणं न कर्तव्यम्, पुनस्तत्र शङ्कितम्–ननु चोक्तमितरथा हि असंप्रत्ययोऽकृत्रिमत्वात् यथा लोके इति, अस्याः शङ्कायाः निरासाय उच्यते भगवता नैष दोषः, अर्थात् प्रकरणाद्वा - इत्यादि।

अस्य भाष्यस्याभिप्रायं प्रकाशयति प्रदीपकारः [७]"आतश्चे"त्यस्य

१. म० भा० आ० सू० १।१।५।१० २. का० वा० २२२
३. पा० सू० ४।४।५१ ४. प्र० एवम्० उ० पृ २५३
५. म० भा० आ० सू० १।१।५।११ ६. पा० सू० १।१।२३
७ प्र० पृ० २५७

इतश्चेत्यर्थः, अर्थात् इत्यस्य सामर्थ्यादित्यर्थः । यथा—गोपालकमानय माणवकमध्यापयिष्यति, इत्यत्र हस्ते दण्डं गृहीत्वा यो गाश्चारयति तस्य गोपालकपदेन न ग्रहणम्, अध्यापनकार्यासम्भवात्, अतः संज्ञिभूतो रूढोऽर्थः गृह्यते येन अध्यापनकार्यं सुसम्पाद्यते । एवञ्च सामर्थ्येन हेतुना अत्र रूढस्य ग्रहणं न तु यौगिकार्थस्य । एवमेव प्रकरणेनाऽपि अर्थविशेष्यस्य प्रतीतिर्भवति यथा भोजनप्रकरणे "सैन्धवमानये"ति कथनेन लवणस्य प्रतीतिः यात्राप्रकरणे तु अश्वस्य ।

यश्च गोपालकमानय इत्युक्तः सन् सामर्थ्यं प्रकरणं वा न जानाति तस्य मनसि उभयगतिर्भवति किम् एभिरुक्तः गोपालकशब्दः संज्ञापक्षे रूढः अथवा गृहीतदण्डपरो यौगिकः, तत्रेत्थं शब्दे संज्ञिपरत्वमनादृत्य क्रियापरत्वम् आद्रीयते तुग्जातीयविषयस्य सर्वैराद्रीयमानत्वात् ।

अत्रोद्द्योतकारो विशेषमाह––यत् "यद्यपि [1]रूढियोगापहारिणी योगाद् रूढिर्बलीयसी" इति सिद्धान्तेनात्र गोपालकादेन गृहीतदण्डः ग्रहीतुं नोचितः तथापि सामर्थ्यबलेन प्रकरणादिबलेन वा सहकृतो योगोऽपि बलवान् भवतीति, उक्तञ्च कविवरेण माघेनापि—

**[2]बृहद् सहायकार्यान्तं क्षोदीयानपि गच्छति ।**
**सम्भूयाम्भोधिमभ्येति महानद्यानगापगा ॥**

अत्रेऽपि पुनः शङ्कितं यथैव अर्थात् प्रकरणाद्वा लोके [3]कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति, एवमत्र शास्त्रेऽपि प्राप्नोति, यतोऽसौ जानाति बह्वादीनां संख्यासंज्ञा कृताऽस्ति । पुनश्च समाहितं लोकवद्व्याकरणे सर्वत्र न वर्तितव्यं, किन्तु संख्याप्रदेशे उभयगतिर्भवत्येव [4]"संख्यायाः अतिशदन्तायाः कन्" इत्यत्रात्यन्तशदन्तप्रतिषेधेन लौकिक्याः संख्यायाः ग्रहणं, शास्त्रे बह्वादीनां संख्यासंज्ञाकरणाच्च तासां ग्रहणम् ।

अनेन व्यवहारेण ज्ञायते यद् व्याकरणशास्त्रं समन्वयं करोति, येन केनाऽपि रूपेण सर्वस्यापि सम्मानो विधीयते ।

**इति महाभाष्य समीक्षणे तृतीयाध्यायस्य द्वितीयपादः ।**



१. उ० प्र० २५७ २. शि० व० २।१००
३. म० भा० पृ० २५७ ४. पा० सू० ५।१।२२

# अथ तृतीयः पादः

**[1]म० भा०—शताद्यष्टनोर्नुम्नुडर्थम् । शतानि सहस्राणि । नुमि कृते [2]"ष्णान्ता षडि"ति षट्संज्ञा प्राप्नोति । उपदेशग्रहणान्न भवति । अष्टानामित्यत्राऽऽत्वे कृते षट्संज्ञा न प्राप्नोति । उपदेशग्रहणाद् भवति ।**

(प्रदीपः)—[3]ष्णान्ता० । षट्संज्ञायामिति । प्रकृतिप्रत्ययविभागेन प्रतिपादनं गुणैः प्रापणमुपदेशः । तेन प्रकृतिप्रत्ययाद्युपदेशे षकारनकारान्ता या सङ्ख्या षट्संज्ञेत्यर्थः । नुम्नुडर्थमिति । अर्थशब्दः प्रयोजनवाची । तत्र नुमि "शतानी"त्यादौ षट्संज्ञानिवृत्तिः प्रयोजनं, नुटि तु विधीयमाने षट्संज्ञाप्रवृत्तिः प्रयोजनम् । अष्टानामिति । परत्वान्नित्यत्वाच्चात्वे कृते नुटोऽप्राप्तिः । कार्यकालत्वात्संज्ञायाः प्रवृत्तेर्नास्त्यन्तरङ्गत्वम् ।

अत्र समीक्षा—[4]"ष्णान्ता षडि"ति सूत्रे उपदेशग्रहणं कर्तव्यम् । उपदेशे षकारान्तं संख्यावाचकं षट्संज्ञकं भवतीति वक्तव्यं, तत्फलञ्च शतानि शहस्राणी"त्यादौ नुमि कृते [5]"ष्णान्ता षडि"ति षट्संज्ञा प्राप्नोति । उपदेशग्रहणसामर्थ्यात् न भवति। "अष्टानामि"त्यत्र च आत्वे कृते सति नान्तत्वाभावात् षट्संज्ञा न प्राप्नोतीति उपदेशग्रहणं तदर्थं भविष्यति ।

अत्र प्रदीपग्रन्थः [6]प्रकृतप्रत्ययादिविभागेन शब्दस्य प्रतिपादनमुपदेशपदेनात्र ग्राह्यम्, इदमेव हि **गुणैः** प्रापणमित्यप्युच्यते, प्रत्यक्षमाख्यानमुपदेशपदेन अत्र न गृहीतं तेन प्रकृतप्रत्ययाद्युच्चारणकाले यत्षकारान्तं नकारान्तं वा संख्यावाचकं शब्दस्वरूपं तत्षट्संज्ञकं भवतीति भाष्यतात्पर्यम् । इदमेव विशदीकृतमुद्द्योतकृता [7]स्वरूपप्रतिपत्तिकरणाय यदाद्योच्चारणं पाणिन्यादिभिः मुनिभिः कृतं तत्रैव उपदेशपदं व्याकरणशास्त्रे प्रसिद्धं तद्विषयता

१. भा० वा० २३३
२. म० भा० आ० सू० १।१।५।१२
३. प्र० पृ० २६३
४. म० भा० आ० सू० १।१।५।१२
५. पा० सू० १ १।२३
६. प्र० पृ० २६३
७. उ० पृ० २६३-६४

च पश्चादिशब्दे नास्तीति कृत्वा अत्रत्यमुपदेशपदमर्थविशेषबोधकम् । स एवार्थः प्रदीपकृता प्रतिपादितः, अन्यत्र गुणैः प्रापणमुद्देशपदेनोक्तं भाष्यकृताऽपि उक्तं कः पुनर् उद्देशोपदेशयोर्विशेषः गुणैः प्रापणमुद्देशः, प्रत्यक्षमाख्यानमुपदेश इति । एवञ्च शतानि सहस्राणीत्यादौ नुमि कृते सति यद्यपि प्रकृतेर्नान्तत्वमायाति तथापि प्रकृतिप्रत्यययोर्विभागकाले "शत जश्" इत्येव रूपं न तु शतं न जश् इति । नुमि कृते सति आगतं नान्तत्वं तु न औपदेशिकं नुटि कृते तु आम्‌विभक्तिर्नकारादित्वं न तु प्रकृतेर्नान्तत्वमिति सर्वथैव तत्रोद्देश्यतावच्छेदकधर्मानाक्रान्तिः । "अष्टानामि"त्यत्र तु परत्वात् नित्यत्वादात्वे कृते नुडागमो न प्राप्नोति, संज्ञाविषये कार्यकालपक्षस्य अभ्युपगमात् अन्तरङ्गत्वमपि नास्ति संज्ञा शास्त्रस्य विधिशास्त्रनिमित्तनिमित्तकत्वात् ।

वस्तुतः [1]"सन्निपातलक्षणो विधिरनिमित्तं तद् विघातस्य" इति न्यायेन नुम्नुटोर्विषये दोषो निराकृतः, यतो हि जश्‌विभक्तिं निमित्तीकृत्य जातो नुमागमः षट्संज्ञान् द्वारीकृत्य [2]"षड्भ्यो लुगि"ति सूत्रप्रवृत्त्या जशं विहन्तुं न शक्नोति, सन्निपातो द्वयोः सम्बन्धः सः लक्षणं निमित्तं यस्य स सन्निपातलक्षणः तादृशो यो विधिः स तादृशं सन्निपातं यो विहन्ति तस्य विधेः निमित्तं न भवति, एवञ्च जश् विघातकलुकः निमित्तं नान्तं षट्संज्ञां द्वारीकृत्या न भवति । "अष्टानामि"त्यत्राऽपि न फलं यतो हि [3]"अष्टनो दीर्घादि"ति सूत्रे दीर्घग्रहणम् आकारान्तस्य षट्संज्ञा भवत्येवेति ज्ञापनार्थम् । अतश्च [4]"अष्टन आ विभक्तौ" इति आत्वे कृतेऽपि ज्ञापकबलात् षट्त्वेन नुड्भवत्येवेति न दोषः ।

**म० भा०—[5]सिद्धविपर्यासश्च ( यथाऽन्यत्र ) । सिद्धश्च विपर्यासः । यद्यपि जानाति सन्देहस्तु तस्य भवति अयं स तशब्दो लोतो गतं इति, अयं स तशब्दो लूनः गीर्णं इति ? । तद्यथा--इतरत्रापि "कतरद्देवदत्तस्य गृहम् ? अदौ यत्राऽसौ काकः" इति । उत्पतिते काके यद्यपि तमुद्देशं जानाति सन्देहस्तु तस्य भवति--इदं तद्‌गृहमिदं तद् गृहमिति ।**

१. भा० वा० २६८
२. पा० सू० ७।१।२२
३. पा० सू० ६।१।१७२
४. पा० सू० ७।२।८४
५. म० भा० आ० सू० १।१।५।१४

(प्रदीपः)—[1]सिद्धविपर्यास इति। सिद्धो विपर्यासः संशय इत्यर्थः। इदं तद्गृह (मिदं तद्गृह) मिति। बुद्धेरनवस्थिततत्त्वमनेन प्रतिपाद्यते, न त्वेतद्-द्विर्वचनं, वीप्साद्यर्थाऽभावात्।

(उद्द्योतः)—[2]सिद्धविपर्यासश्चेति। चस्त्वर्थे। सिद्धस्तु विपर्यास इत्यर्थः। यद्यपि विपर्यासो भ्रमात्मकनिश्चयस्तथाप्ययथार्थत्वसाम्यादिह संशयोऽभिप्रेत इत्याह—संशय इति। बुद्धेरनवस्थिततत्त्वमिति। सन्देहाऽभिनय इत्यर्थः। वीप्सादीति। पदार्थविषयव्याप्तीच्छाप्रयोक्तृधर्मा हि वीप्सेति भावः।

अत्र समीक्षा—[3]"क्तक्तवतू निष्ठा" इति सूत्रे समानशब्दानां तादीनां प्रतिषेधः कर्तव्य इत्युक्त्या तस्य नैरर्थ्यं प्रतिपादितम्, क्तवटकस्य ककारानुबन्धस्य भेदकत्वात्।

पुनरपि तत्र शङ्कितं भगवता यद्यप्यनुबन्धो भेदकः, तथापि स इदानीं प्रक्रियावेलायामनुक्तः तर्हि कथं भेदको [4]भविष्यति, यथा काकवति देवदत्तगृहे यदा काकः उत्पतितो भवति तदा तद्गृहं नष्टं भवति, एवमिहापि अनुबन्धे लुप्ते सति प्रत्यय अज्ञातानुबन्धो भविष्यति, तदुपरि पुन आक्षिप्तं सिद्धविपर्यासश्चेति। अयमाशयः यद्यप्यनुबन्धोऽनुक्तः तथापि विपर्यासः (सन्देहः) अवश्यं भविष्यति। यदयं स एव तशब्दो यश्च लोतो गर्त, इत्यत्र वर्तते, अथवा यः लूनः, गीर्णः, इत्यादौ वर्तते, सोऽस्तीति। लोकेऽपि यथा कतरद्देवदत्तस्य गृहमिति पृष्ट आचष्टे अद एव गृहं यत्राऽसौ काकोऽस्ति। यदा काकः उड्डीयते तदा यद्यपि तं देशं जानाति तथापि संशयस्तु तस्य भवत्येवेदं तद्गृहमिदं वा तद्गृहमिति।

अत्र प्रदीपकारो ब्रवीति—बुद्धेरनवस्थिततत्वम्। एतत् कथनेन बोध्यते न त्विदं द्विर्वचनं वीप्साद्यर्थाभावात्।

अत्रोद्द्योतकारः व्याचष्टे [5]बुद्धेरनवस्थिततत्वमिति प्रदीपग्रन्थेन संशयस्य अभिनयः क्रियते, वीप्सापदेन पदार्थविषयकव्याप्तेः इच्छा उच्यते, प्रयोक्तुधर्मो हि वीप्सा, अनया रीत्या व्याख्याने जाते सति अन्ततः कारककालविशेषात् सिद्धम्, इत्येवं समाहितं भगवता तस्यायमाशयः भूतेऽर्थे यस्तशब्दः कर्मणि कर्तरि भावे च स एवात्र ग्राह्यः न तु लोतो गर्त, इत्याद्यस्थः,

१. प्र० पृ० २६७-६८
२. उ० पृ० २६८
३. म० भा० आ० सू० १।१।५।१४
४. म० भा० पृ० २६७
५. उ० पृ० २६८

लोकेऽपि यो विचारशीलमनुष्यो वर्तते सो ध्रुवेण निमित्तं जानाति पुण्डरीकादिकमिति दिक्।

**म० भा०—[1]सर्वनामसंज्ञायां निपातनाण्णत्वाऽभावः। सर्वनामसंज्ञायां निपातनाण्णत्वं न भविष्यति।**

(प्रदीपः)—[2]निपातनादिति। लोकेऽप्ययं णत्वरहित एव प्रयुज्यते, तस्याऽत्र प्रसङ्गेन साधुत्वं प्रतिपाद्यते।

(उद्द्योतः)—[3]सौत्रत्वादित्येव कुतो नोक्तमत आह—लोक इति।

अत्र समीक्षा—[4]"सर्वादीनि सर्वनामानी" ति सूत्रे [5]सर्वनामपदे पूर्वपदात्संज्ञायामग इति णत्वमाशङ्क्य निपातनात् णत्वं न भवतीति समाहितम्, अत्र प्रदीपकारो व्याचष्टे लुकेऽपि अयं सर्वनामशब्दः णत्वरहित एव प्रयुज्यते प्रसङ्गादत्र शास्त्रे तस्य साधुत्वं विज्ञाप्यते, अत एव सौत्रत्वाद् हेतोः णत्वाभावो न समाहित इत्याशयः उद्द्योतग्रन्थे स्पष्टीकृतोऽस्ति।

निपातनं नाम अन्यादृश्ये प्रयोगेऽप्राप्तेऽन्यादृश्यप्रयोगकरणरूपम्, एवञ्च शास्त्रेण णत्वं प्राप्तो निपातनेन तत्प्रतिषेधो भविष्यति। वस्तुतस्तु "पूर्वपदादि[6]"त्यनेन णत्वं तत्रैव भवति यत्र णकारघटितेन प्रयोगेण संज्ञात्वं गम्यते, यत्र तु णकारयुक्तेन प्रयोगेण संज्ञात्वमङ्गः सम्भाव्यते तत्र णत्वं न भवति, यथा—रामनाथ रामनगरादि संज्ञा शब्देषु। तत्र यदि णत्वं विधीयते तर्हि तदीयं संज्ञात्वमेव भज्येत्। अक्षौहिणी, सूर्पणखा, इत्यादिप्रयोगेषु च णकारसहितेनैव संज्ञात्वं प्रत्ययायते, अतस्तत्र णत्वं सुलभम्, परन्तु इदृश्यामपि स्थितौ अत्र कथं भाष्यकृता निपातनं णत्वाभावे निमित्तत्वेनाश्रितम्, अयमेवोपायः कथं नोक्तः यतो हि अत्रापि स णकारेण संज्ञात्वं भज्यत एवेति चेदत्रोच्यते—लोके प्रयुज्यमानसर्वनामशब्दे तु अयमुपाय अवश्यं वक्तुं शक्यते, परन्तु शास्त्रे संज्ञाशब्दस्य यादृक्षकत्वात् टिघुभादिवत् णत्वघटितोऽपि शब्दः संज्ञाशब्दत्वेन प्रयोक्तुं शक्य इति कृत्वा निपातनरूपेण हेतुनैव तद्वारणं कृतम्।

---

१. भा० वा० २४२
२. प्र० पृ० २७१
३. उ० पृ० २७१
४. म० भा० आ० सू० १।१।६।१
५. पा० सू० ८।३।१०६
६. पा० सू० ८।३।१०६

सौत्रत्वेन हेतुना यदि वार्यते तदा लोके कथं न णत्वमिति[1] जिज्ञासायां संज्ञास्वरूपभङ्गभयात् न णत्वमित्युत्तरं दातव्यं स्यात्तदपेक्षया एकेनैव निपातनोपायेन लोकशास्त्रयोरुभयोरपि णत्वाशङ्कानिवारणं कृतम्, लोकपदेन वृत्तिवाक्ये प्रयुज्यमानः अस्मदाभिश्च सर्वनामशब्दो ग्राह्यः।

**म० भा०[2]—संज्ञोपसर्जनप्रतिषेधः। संज्ञोपसर्जनीभूतानां सर्वादीनां प्रतिषेधो वक्तव्यः। सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिसर्वाय देहि।**

अत्र समीक्षा—प्रदीपकृता अत्रोच्यते—[3]समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गाजातिरेकद्रव्योपनिवेशिनी संज्ञा इत्येतदनपेक्ष्य संज्ञाप्रतिषेधः। तत्र ह्यपेक्षते परया पूर्वा संज्ञा बाध्यत इति संज्ञा प्रतिज्ञया सर्वनामसंज्ञायाः बाधनात् प्रसङ्गाभाव इति। एतद्विषये उद्द्योतकारः व्याचष्टे—यदेकद्रव्योपनिवेशेन इति लौकिकसंज्ञालक्षणाम्। एतेन सर्वनामादिसंज्ञासु अनेकविषयाषु इदमव्याप्तमिति परास्तम्।

अत्रेदं विचारणीयमस्ति यत् कैयटोक्तं लक्षणं लौकिकसंज्ञालक्षणम्,[4] लोके ह्येकद्रव्यवृत्तय एव संज्ञाः भवन्ति, शास्त्रे तु अनेकविषयाः अपि संज्ञाः भवन्ति। यथा एषा सर्वनामसंज्ञा, एवञ्च लौकिकसंज्ञालक्षणस्य अत्र अव्याप्तत्वेऽपि नास्ति कश्चन दोषः। घटपटादिद्रव्ये या संज्ञा साऽपि यद्यप्यनेकद्रव्यविषयाः तथापि देवदत्तयज्ञदत्तप्रभृतयः संज्ञाः एकद्रव्यनिवेशिन्य एव अभिधीयन्ते, घटपटादयस्तु न तादृशसंज्ञाः अपितु जातिशब्दाः, एवञ्च यादृशस्य संज्ञाशब्दस्यात्र ग्रहणं तादृशस्तु जात्यादिशब्देभ्यो भिन्नेव इत्यभिप्रायः।

**म० भा०—[5]अथवा अङ्गाधिकारे यदुच्यते, गृह्यमाणविभक्तेस्तद् भवति।**

(प्रदीपः)—[6]गृह्यमाणविभक्तेरिति। गृह्यमाणानां त्यदादीनाम् उत्तरादीनां च स्वार्थद्वारेण सम्बन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी तस्या इत्यर्थः।

---

१. म० भा० पृ० २७४ २. भा० वा० २४३
३. प्र० पृ० २७५ ४. उ० प्र० २७५
५. म० भा० आ० सू० १।१।६।१ ६. प्र० पृ० २७९

(उद्द्योतः)—[1]स्वार्थद्वारेणेत्यादेर्विवरणं तदर्थगतेत्यादि। गृह्यमाणविभक्तेरिति संबन्धसामान्ये षष्ठी। तेन विभक्तौ विधीयमानत्यदाद्यत्वस्यापि संग्रह इति भावः।

अत्र समीक्षा—"[2]सर्वादीनि सर्वनामानी"ति सूत्रे "[3]संज्ञोपसर्जनीभूतानां प्रतिषेधो वक्तव्य इत्युक्तम्। तत्र उपसर्जनप्रतिषेधः न वक्तव्यः "अनुपसर्जनादि[4]" ति सूत्रे योगविभागः करिष्यते। "अनुपसर्जन अ अ अद् इति। अकारादाकारतकारौ विधीयमानौ अनुपसर्जनस्य भवति इति चार्थो भविष्यति। तेन युष्मान् अतिक्रान्तेभ्यः अतियुष्मदित्यत्र अकारान्तात् न अदादेशविधानं "पञ्चम्या[5] अत्" इत्यनेन। किन्तु "युष्मद्" इति दकारान्त अदादेशो विधीयत, अतः उपसर्जनमवस्थायामपि अत्र तद्भविष्यतीदं समाधानं कुर्वन्नपि भाष्यकारः अन्यदपि समाधानं विदधाति। अथवा—अङ्गाधिकारे यदुच्यते गृह्यमाणविभक्तिस्तद् भवतीति।

अयमाशयः अङ्गाधिकारीयं यत्कार्यं गृह्यमाणानां सूत्रे उच्चार्यमाणानां त्यदादीनां उत्तरादीनां च स्वार्थद्वारेण सम्बन्धिनी या विभक्तिस्तदर्थगत-संख्याकर्मादिवाचिनी तस्यास्तद् भवतीति प्रदीपकारः।

अत्रोद्द्योतकार इत्थं व्याचष्टे [6]स्वार्थद्वारेण इत्यस्येदं विवरणं तदर्थगतेत्यादि। गृह्यमाणविभक्तेरिति संबन्धसामान्ये षष्ठी, तेन विभक्तौ विधीयमान-तदाद्यत्वस्यापि संग्रह इति प्रदीपाशय इति। अत्र अङ्गाधिकारीयं यत् कार्यं तस्य द्विविधां स्थितिं प्रदर्शयति भाष्यकारः अथवा इति। प्रथमा तु गृह्यमाणप्रकृतिकविभक्तौ परतः, द्वितीया तु तादृशविभक्त्युद्देश्यकं भवतीति भाष्यतात्पर्यम्।

उद्द्योतकारः स्वार्थद्वारेणेत्यादेः विवरणं यद्दर्शयति तदर्थगत इत्यादि तत्तु पौन्यरुक्तदोषनिवारकतया योजनीयम्। गृह्यमाणविभक्तेरित्यत्र तु षष्ठ्याः सम्बन्धसामान्यमर्थं इति व्याख्यानेन भाष्याशयं विशदयति, न्यूनताञ्च परिहरति। [7]विभक्तौ इत्यनेन गृह्यमाणप्रकृतिकविभक्तौ परतः इत्यर्थोऽभ्युपेतः अपिशब्देन तादृशविभक्त्युद्देश्यकत्वेन विधीयमानस्य अदादेशस्य संग्रहः, इदं तु समाधानम् एकदेशीभाष्यसंमतम्। उद्द्योतकारस्तु

---

१. उ० पृ० २७९
२. पा० सू० १।१।२७
३. का० वा० २४३
४. पा० सू० ४।१।१४
५. पा० सू० ७।१।३१
६. उ० पृ० २७९
७. उ० पृ० २७९

परे त्वित्यादिना अस्य भाष्यस्य अभिप्रायमित्थं वक्ति, गृह्यमाणविभक्तेरित्यस्य गृह्यमाणादिविहितविभक्तेरित्यर्थः। अदड्विषयकमेतत् कतरान्तस्य अनभिधानमभिप्रेत्य तत्र अदड्भाव एवेष्टः इत्यभिप्रेत्य वा इदं भाष्यं प्रवृत्तम्, तुल्यन्यायाः [1]"षड्भ्यो लुक्" इत्यत्रापि विहितविशेषणमेव स्वीकर्तव्यं भविष्यति ततश्च अतिव्याप्तिर्दुर्वारा, तामेव वारयितुं पुनः भाष्यकारः [2]व्याचष्टे—नैष दोषः। षट्प्रधान एषः समासः। एवञ्च परं पञ्च, इत्यादि समुदायोऽपि षड्प्रधानतया षट्संज्ञक इति जश्शसोर्लुक् भविष्यत्येवेति दिक्।

**म० भा०—[3]कथं पुनरेकेन यत्नेनोभयं लभ्यम्?। लभ्यमित्याह। (कथम्?) एकशेषनिर्देशात्। एकशेषनिर्देशोऽयम् सर्वादीनि च सर्वादीनि च सर्वादीनि। सर्वनामानि च सर्वनामानि च सर्वनामानि। सर्वादीनि सर्वनामसंज्ञानि भवन्ति। सर्वेषां यानि च नामानि तानि सर्वादीनि। संज्ञोपसर्जने च विशेषेऽवतिष्ठते।**

(प्रदीपः)–[4]एकशेषनिर्देश इति। ननु सहविवक्षाया अभावात् कथमेकशेषः। एकशेषफलत्वात्तन्त्रन्याय आवृत्तिर्वैकशेषशब्देनोच्यते। अथवा—आकृत्यभिधानपक्षे एकस्यैव प्रयोगे सिद्धे प्रत्याख्यातमेकशेषशास्त्रं संज्ञापरिभाषावच्छास्त्रप्रक्रियासंपादनार्थं भवतीति सहविवक्षामन्तरेणापि भवत्येकशेषः।

(उद्द्योतः)–[5]सहेति। एकैकस्यौद्देश्यत्वविधेयत्वसत्वात्सहविवक्षाऽभावः इत्यर्थः। अर्थद्वयबोधेच्छया एकस्य सकृदुच्चारणमिह तन्त्रम्। अत्रोच्चारणं तन्त्रेण बोद्धृबोधस्तु पुनरनुसन्धानेनेत्याशयेनाह—आवृत्तिर्वेति। आवृत्तिश्चेत्यर्थः। प्रत्याख्यातमिति। लौकिकप्रयोगाङ्गत्वेन निराकृतमित्यर्थः।

अत्र समीक्षा—"[6]सर्वादीनि सर्वनामानी"ति सूत्रे महाभाष्ये शङ्कितं सकलं कृत्स्नं जगत् इत्यादि शब्दानामपि सर्वार्थवाचकतया कथं न सर्वनामसंज्ञा प्राप्नोतीत्याशङ्क्य भाष्यकृता समाहितम्—अस्यामवस्थायां

१. पा० सू० ७।१।२२
२. म० भा० पृ० २७९
३. म० भा० पृ० २८३
४. प्र० पृ० २८३
५. उ० पृ० २८३
६. पा० सू० १।१।२७

प्रकृतसूत्रेण सर्वादिगणोऽपि विशेष्यते संज्ञापि क्रियते, अर्थात् सर्वादिगणे पठिता एव शब्दाः सर्वनामसंज्ञका एव भवन्तु। एवञ्च सकलकृत्स्नादि-शब्दानां सर्वार्थवाचकत्वेऽपि न भविष्यति सर्वनामसंज्ञा। तदनु पुनः शङ्कितं यदेकेन यत्नेन कथमुभयसम्पादयितुं शक्यत इति जिज्ञासायाम् उच्यते एकशेषनिर्देशात्। अयं भावः सर्वादीनि च सर्वादीनि च सर्वादीनि, सर्व-नामानि च सर्वनामानि च सर्वनामानि, सर्वेषां यानि नामानि ( सर्वार्थ-वाचकानि यानि शब्दस्वरूपाणि ) तानि सर्वादीनि भवन्तु। एतादृशाश्च सर्वादीनि सर्वनामसंज्ञकानि भवन्तु। यदा च सर्वादयः संज्ञाभूताः उपसर्जनी-भूताः तदा प्रसिद्धसर्वार्थकत्वाभावेन न सर्वादयः नाऽपि सर्वनामसंज्ञकाः।

अत्र प्रदीपकारः शङ्कते ननु सह विवक्षाया अभावेन कथमेकशेषः। एकशेषफलत्वात् तत्र न्यायः आवृत्तिर्वा एकशेषशब्देनोच्यते भाष्ये। अथवा जातिपक्षे एकस्यैव प्रयोगेण कार्यसिद्धौ एकशेषशास्त्रं प्रत्याख्यात-मिति कृत्वा असहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगी एकशेषो भव-त्येवेति व्याचष्टे। तत्रोद्द्योतकारः सहविवक्षाया अभावे प्रमाणं दर्शयति [1]एकैकस्योद्देश्यत्वविधेयत्वसत्वादिति। अयं भावः सर्वादीनि च सर्वादीनि चेति एकशेषप्रसङ्गे एकः सर्वादिशब्दः उद्देश्यतापरः सर्वनामसंज्ञायाम्। अपरश्च विधेयतापरः सर्वनामपदार्थप्रतीतिः कृत्वा सहविवक्षाया अभावः सा [2]तु एकधर्मावच्छिन्नस्य एकधर्मावच्छिन्नसंसर्गेण एकधर्मावच्छिन्ने अन्वयित्वरूपा। यथा "धवखदिरौ छिन्धि" इत्यत्र धवखदिरयोः उभयत्वेन रूपेण कर्मतत्वावच्छिन्नकर्मत्वसंसर्गेण छेदनत्वावच्छिन्ने छेदनेऽन्वयरूपं साहित्यम्, तस्मिन् साहित्ये इतरेतरयोगः द्वन्द्वः, प्रकृतस्थले तु न तादृशं साहित्यम् अपितु तन्त्रम् आवृत्तिर्वा उपायतया ग्राह्यं तत्तु प्रदीपोद्द्योतयो-र्ग्रन्थयोः लिखितमेव, वस्तुतस्तु महासंज्ञाकरणसामर्थ्याद् अवयवार्थविज्ञानं भविष्यति, स च अवयवार्थः, सर्वादित्युद्देश्यदले विशेषणीयः। अयमेव सिद्धान्तः भगवता भाष्यकृता स्थिरीकृत इति द्रष्टव्यम्।

**म० भा०—[3]येन नाप्राप्ते तस्य बाधनं भवति। न चाप्राप्ते [4]"न बहुव्रीहौ" इत्येतस्मिन् प्रतिषेधे इयं विभाषा आरभ्यते। [5]"द्वन्द्वे च" एत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च।**

---

१. उ० पृ० २८३
२. ल० श० शे०
३. म० भा० आ० सू० १।१।६।२
४. पा० सू० १।१।२८
५. पा० सू० १।१।३१

(प्रदीपः)—[1]येन नाप्राप्त इति। अयमत्रार्थः—न बहुव्रीहावित्यनेन सर्वः स्वविषयो व्याप्तः। द्वन्द्वे चेत्यनेन तु न व्याप्तः। [2]"विभाषा जसी" ति जसि विकल्पविधानात्। यदि चानेन द्वन्द्वे विभाषा स्याद् जह्यनुवाददोषः प्रसज्येत। बहुव्रीहौ त्वनुवाददोषमलभमाना कृतार्था सती परत्वादियं विभाषा द्वन्द्वे चेत्यनेन बाध्यते।

(उद्द्योतः)—[3]ननु यथा बहुव्रीहौ द्वन्द्वे चेत्यप्राप्तावेवीयं प्रवर्तते, तथा द्वन्द्वे न बहुव्रीहावित्यप्राप्तेऽपीति, किमुच्यते न चाप्राप्ते इतीत्यत आह—अयमत्रार्थ इति।

अत्र समीक्षा—"विभाषा दिक् समासे बहुव्रीहावि"[4]ति सूत्रे बहुव्रीहिग्रहणस्य प्रयोजनं भाष्यकृत उक्तं—द्वन्द्वे मा भूदिति। पुनस्तस्य निराकरणं कृतं द्वन्द्वे चेति प्रतिषेधो भविष्यतीत्यनेन। पुनः उक्तं नाप्राप्ते प्रतिषेधे इयं विभाषा आरभ्यमाणा सति बाधसामान्यचिन्तया [5]"न बहुव्रीहौ" [6]"द्वन्द्वे चे" त्युभयमपि बाधयिष्यते। तदनु उक्तं येन नाप्राप्तेः तस्य बाधनं भवति, न चाऽप्राप्ते न बहुव्रीहौ "इत्येतस्मिन् प्रतिषेधे इयं विभावा आरभ्यते। द्वन्द्वे च" इत्येतस्मिन् पुनः प्राप्ते च अप्राप्ते च। अयमाशयः न प्राप्तमप्राप्तं न अप्राप्तं नाप्राप्तं न ञ्समासं कृत्वा [7]"सुप्सुपा" इत्यनेन पुनः केवलसमासः, प्राप्त इत्यत्र तु भावेक्तः।

ननु [8]कर्तृकर्मणोः कृति, इति षष्ठी, तद्योगे यच्छब्दात् कथं नेति शङ्कायामुच्यते "[9]न लोकाव्ययनिष्ठे" ति निषेधात्। यद्यपि पुनरपि नपुंसके भावे क्तस्य च योगे [10]षष्ठ्या उपसंख्यानमिति वचनेन षष्ठी स्यादिति चेदत्रोच्यते प्राप्तशब्दे "[11]निष्ठा" इति सूत्रेण अकर्मकत्वात् भावे क्तः, अकर्मकत्वञ्च कर्मकत्वाविवक्षायां कृतपूर्वीकटमितिवद् बोध्यम्, एवञ्च मात्रनपुंसके भावे क्तः, अतो न तद्वार्तिकेन षष्ठ्याः प्रसक्तिः। अयमाशयः येन [12]नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवतीति भाष्यतात्पर्यम्, येनेति अनुक्ते कर्तरि तृतीया अतः यत्कर्तृकाऽवश्यप्राप्तौ सत्यां यस्य शास्त्रस्य प्राप्तिर्भवति तेन अवश्यप्राप्तस्य बाधो भवति, अवश्यप्राप्तं शास्त्रं व्यापकं,

---

१. प्र० पृ० २८९
२. पा० सू० १।१।३१
३. उ० पृ० २८९
४. भ० भा० आ० सू० १।१।६।२
५. पा० सू० १।१।२९
६. पा० सू० १।१।३१
७. पा० सू० २।२।४
८. पा० सू० २।३।६५
९. पा० सू० २।३।७९
१०. पा० सू० ३।३।११४
११. पा० सू० ३।२।१०२
१२. म० भा० पृ० २८९

बाध्यशास्त्रं तु व्याप्यं भवति, एवञ्च व्याप्यधर्मावच्छिन्नोद्देश्यताकशास्त्रेण व्यापकधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य बाध इति पर्यवस्यति। प्रकृते च "विभाषा दिक् [1]समासे बहुव्रीहौ" इति शास्त्रं प्रति "न [2]बहुव्रीहौ" इति शास्त्रमवश्यं प्राप्तमिति कृत्वा व्यापकं (व्यापकधर्मावच्छिन्नोद्देश्यताकम्)। अतः अनेन "न [3]बहुव्रीहौ" इत्यस्य बाधः सुलभः। "द्वन्द्वे चे"त्येतच्छास्त्रे तु एतत्प्रति न व्यापकं "[4]विभाषा जसि" इत्यनेन जसि परतः विकल्प-विधानात्।

न च "[5]विभाषा दिक्समासे बहुव्रीहौ" इत्यनेन द्वन्द्वेऽपि विभाषा स्यादिति वाच्यं तदा "[6]विभाषा जसि" इति सूत्रमनुवाददोषग्रस्तं स्यादतश्च व्यर्थं स्यात् बहुव्रीहिविषयेऽस्य प्रवृत्तौ तु कस्याप्यनुवाददोषाभावादियं विभाषा-परत्वात् द्वन्द्वविषये "द्वन्द्वे चे"[7]त्यनेन बाधने। अयमेवाशयः प्रदीपोद्द्योतयोः स्पष्टीकृतोऽस्ति, अतः इयं विभाषा "न बहुव्रीहौ[8]" इत्येतं प्रतिषेधं बाधते तस्य व्यापकत्वाद् "द्वन्द्वे चे[9]"त्येतत्सूत्रं च न बाधते तस्याव्यापकत्वात्।

एतदग्रे [10]पुरस्तादपवादन्यायस्य चर्चा उत्थापिता भगवता तस्यायं भावः "पुरस्तादपवादा[11] अन्तरान् विधीन् बाधन्ते नोत्तरान्" इति रीत्या इदं सूत्रं "न बहुव्रीहौ[12]" इत्यस्य बाधकं भविष्यति अनन्तरत्वात्, "[13]द्वन्द्वे चे"-ति तु नानन्तरम् अपि तु मध्यपातिसूत्रद्वयेन व्यवहितम्, पुनश्च "[14]लक्षण-प्रतिपदोक्तपरिभाषया दिक्समासे इति व्यवहारः "दिङ्नामान्यन्तराले[15]" इति सूत्रविहितसमासे एवोचितः तस्य दिक्शब्दघटितत्वादिति दिक्।

**म० भा०—गोनर्दीयस्त्वाह—**

**"अकच्स्वरौ[16] तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ।**
**त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिति ॥**

---

१. पा० सू० १।१।२८ २. पा० सू० १।१।२९
३. पा० सू० १।१।२९ ४. पा० सू० १।१।३१
५. पा० सू० १।१।३२ ६. पा० सू० १।१।२८
७. पा० सू० १।१।३२ ८. पा० सू० १।१।३१
९. पा० सू० १।१।२९ १०. पा० सू० १।१।३१
११. म० भा० पृ० २८९ १२. म० भा० पृ० २८९
१३. म० भा० आ० सू० १।१।६।३ १४. पा० सू० १।१।३१
१५. म० भा० पृ० २२६ १६. पा० सू० २।२।२६

(प्रदीपः)—[1] गोनर्दीयस्त्वाहेति। सूत्रप्रत्याख्यानमेतद्। यथोत्तरं हि मुनित्रयस्य प्रामाण्यम्। स्वरः। स्वाङ्गशिटामदन्तानामित्याद्युदात्तत्वम्।

[2] (उद्द्योतः)—तदेतद्वृत्तिकारोक्तं दूषयति—अकच्स्वरौ त्विति। एषा स्मृतिरविशेषात्सर्वप्रकरणविषया। सूत्रप्रत्याख्यानेति। समुदाये निषेधस्य महासंज्ञया उपसर्जनप्रतिषेधेन वा सिद्धत्वादिति भावः। एवं च महासंज्ञासिद्धार्थानुवादकं प्रपञ्चार्थं सूत्रम्। एवं [3] द्वन्द्वे चेत्यपि सूत्रमिति सूत्रकृतो हृदयम्। यथोत्तरमिति। उत्तरोत्तरस्य बहुलक्ष्यदर्शित्वात्। स्पष्टं चेदं धिन्विकृण्व्योरिति[4] सूत्रे भाष्ये। एतेन सूत्रसार्थक्याय वृत्तिकारोक्तं व्याख्यानमेव प्रबलमित्यपास्तम्। शिडिति सर्वनाम। स्वरोदाहरणं विश्वप्रियायेति।

अत्र समीक्षा—"[5] न बहुव्रीहावि" ति सूत्रं प्रत्याचक्षाणेन भगवता भाष्यकृता उच्यते गोनर्दीयस्त्वाह—"[6] अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ" इत्ययमाशयः त्वं पिता यस्य असौ त्वकत्पितृकः इत्यत्र, "युष्मद् सु पितृ सु" इत्यलौकिके विग्रहे "न [7] बहुव्रीहावि"त्यनेन युष्मच्छब्दस्य सर्वनामसंज्ञायाः अभावात्, अकच्प्रत्ययो न भविष्यतीति कृत्वा [8] 'प्रत्ययोत्तरपदयोश्चेत्यनेन त्वादेशे कृते स्वार्थे कप्रत्ययं विधाय पुनः "नद्यृतश्चे[9]" ति समासान्तं कपं विधाय त्वत्कपितृकमिति रूपं सूत्रकृन्मते भवति। भाष्यकारस्तु तत्सूत्रं प्रत्याचष्टे, एवञ्च सर्वनामत्वाद् "अव्ययसर्वनाम्नामकच्प्राक्टेः[10]" "स्वाङ्गशिटामदन्तानामि"ति आद्युदात्तः स्वरमपि विश्वप्रियाय इत्यादौ विश्वशब्दे साधर्मी। अत्रेदमालोचनीयं यद् महासंज्ञा एवं उपसर्जनप्रतिषेधेन वा संज्ञानिषेधसिद्धौ सूत्रं प्रपञ्चार्थमेव, एवं "द्वन्द्वे चे[11]" त्यपि प्रत्याख्येयमेव।

नन्वेवं सूत्रकृन्मतापेक्षया भाष्यकारीयं मतमतीवविरुद्धं प्रतिभाति तर्हि ऋषिद्वयमध्ये कस्य मतं ग्राह्यं कस्य न ग्राह्यमिति जिज्ञासायामुक्तं प्रदीपकृता[12] यथोत्तरं हि मुनित्रयस्य प्रामाण्यमिति। अयं भावः "धिन्वि-

---

१. म० भा० आ० सू० १।१।६।३
२. उ० पृ० २९३
३. पा० सू० १।१।३१
४. पा० सू० ३।१।८०
५. पा० सू० १।१।२९
६. म० भा० पृ० २९३
७. पा० सू० १।१।२९
८. पा० सू० ७।२।९८
९. पा० सू० ५।४।१५३
१०. पा० सू० ५।३।७१
११. पा० सू० १।१।४१
१२. प० शे० प० १–भूतिटीका

कृण्व्यो[1]रच्" इति सूत्रेऽच् इत्यस्य स्थाने लच् इति वक्तव्यं स्यात् ल इत्यनेन लोपोऽर्थो बोध्यः स्यात् नामैकदेशन्यायेन। यथा—"जेप्रोष्ठपदानामि[2]"-ति सूत्रे जेत्यनेन जातार्थस्य ग्राह्यम्, "राजा से" इति वार्तिके स इत्यनेन समासस्य ग्रहणं किरातार्जुनीये श्रीभारविणाऽपि अयं संकेतः कृतोऽस्ति यत् "तवाभिधानात्[3] व्यथते नतानन:" इति श्लोके तपदेन तार्क्ष्यस्य वपदेन वासुकेः ग्रहणं नामैकदेशेन नाममात्रग्रहणमिति न्यायेनैव कृतमस्ति। एवञ्च प्रकृतेऽपि लपदेन लोपार्थं गृहीत्वा "धिन्विकृण्व्योः[4]" अन्तस्य वकारस्य लोपः स्यात्, उप्रत्ययश्च स्यादित्येव सूत्रार्थो विधीयताम् अकारादेशविधानेन "अतो[5] लोपः" इत्यनेन तल्लोपे सति स्थानिवद्भावेन गुणवारणे गौरवं दृढं भविष्यति, अस्मदुक्तन्यासे तु वकारस्य लोपे, "न [6]धातुलोप" इत्यनेन लघूपधगुणनिषेधे लाघवं स्यात् तादृशं लाघवं च अकृत्वा कथं भगवान् पाणिनिः प्रत्यक्षं गौरवं कृतवान् अतः ज्ञायते यत्[7] यथोत्तरं मुनीनां प्रामाण्यमिति। यतो हि त्रिकालदर्शित्वात् सूत्रकारः इदं जानाति स्म यद् भगवान् भाष्यकारः अवतरिष्यति "न धातुलोप"[8] इति सूत्रं च प्रत्याख्यास्यति। अतः प्रामाणिकं गौरवं न दोषावहमिति मत्वा तादृशम् आचरितं सूत्रकृता। एवञ्च त्वकत्पितृकः इति रूपे एव प्रामाणिकी इष्टिरिति दिक्।

**म० [9]भा०—समास इति वर्तमाने पुनः समासग्रहणं किमर्थम्? अयं तृतीयासमासोऽस्त्येव प्राथमकल्पिको यस्मिन्नैपद्यमैकस्वर्यमेकविभक्तिकत्वं चेति। अस्ति च साहचर्यात्ताच्छब्द्यं तृतीयासमासार्थानि पदानि तृतीयासमास इति। तद्यत्ताच्छब्द्यात्तच्छब्द्यं तस्येदं ग्रहणम्।**

अत्र समीक्षा—अयमाशयः "तृतीया[10] समास" इति सूत्रे विभाषा[11] दिक्समासे बहुव्रीहौ इत्यतः समासग्रहणमनुवर्त्य अस्मिन् सूत्रे समासग्रहणं न कार्यमिति कृत्वा प्रश्नः।

---

१. पा० सू० ३।१।८०
२. पा० सू० ७।३।१८
३. कि० १।२४
४. पा० सू० ३।१।८०
५. पा० सू० ६।४।४८
६. पा० सू० १।१।४
७. प० शे० प० १—भूतिटीका
८. पा० सू० १।१।४
९. म० भा० आ० सू० १।१।६।४
१०. पा० सू० १।१।३०
११. पा० सू० १।१।२८

अस्मिन् भाष्यवाक्ये वर्तमाने इत्यस्य अनुवर्तमाने इत्यर्थः । [1]विनाऽपि प्रत्ययं पूर्वोत्तरपदयोः लोपो वाच्य, इति वार्तिकेन अनुशब्दस्य लोपः, अन्यथा अत्रत्यमेव समासपदं यदि वर्तमानपदार्थस्य विशेष्यं स्यात्तर्हि पुनः समास-ग्रहणं किमर्थं इति प्रश्नः अनुपपन्नः स्यात्, यतो हि अत्रत्यं समासपदं इहार्थमेव स्यात्तेन स्वेन स्वस्य वैयर्थ्यं कथमापादयितुं शक्येत, तृतीयामात्रं यदुच्यते तर्हि तेन तृतीयान्तं पदं विगृहीतमेव ग्रहीतुं शक्येत, ततश्च तृतीयान्तं सर्वादि एव ग्रहीतुं शक्येत तस्यैव च सर्वनामता निषिद्धा भविष्यति ततश्च महदनिष्टं प्रसज्येत, यदि तु लुप्ततृतीयान्तं तृतीयापदं स्वीकृत्य युक्त पदश्चाध्याहृत्य तृतीयान्तं युक्तं सर्वादि सर्वनामसंज्ञां न स्यादित्यर्थः, क्रियते तदा मासेन पूर्वाय देहि, इत्यादावेव निषेधः स्यान्नतु "माषपूर्वाय देहि" स इत्यत्र । एवञ्च पूर्वसूत्रात् क्वचिद् [2]एकदेशोऽप्यनुवर्तते इति रीत्या समास-पदम् अनुवर्तेव, समासग्रहणस्य वैयर्थ्यं शङ्कनीयम्, भगवता चात्र तादर्थ्या-त्ताच्छब्दं स्वीकृत्य लौकिकस्य वाक्यस्य ग्रहणं कृत्वा मासेन पूर्वाय इति प्रयोगः साधितः वाक्यभेदेन च मासपूर्वाय इति मुख्ये समासे निषेधः कृतः ।

**इति महाभाष्य-समीक्षणे तृतीयाध्यायस्य तृतीयपादः ।**

❖

१. का० वा० २७६ २. प० शे० प० १८

# अथ चतुर्थः पादः

**म० भा० – [1]कथं पुनर्ज्ञायते–स पूर्वः पाठोऽयं पुनः पाठ इति ।**

(प्रदीपः)—[2]कथं पुनरिति । पूर्वं गणपाठो नियतसन्निवेशो व्यवस्थितः । पश्चात्तु सूत्रपाठ इत्यत्र प्रमाणाभावात् आदिशब्दः प्रकारवाची दृष्टो व्यवस्थावाची च । तत्र [3]सर्वादीनीत्यत्रादिशब्दस्य प्रकारार्थताऽपि सम्भवति । प्रकारार्थता प्रदर्शनाय पश्चादभियुक्ता गणान् पठन्ति । यदुक्तं श्रेण्यादयः पठ्यन्ते कृतादिराकृतिगण, इति कृतादयश्च वृत्तिकारैर्निदर्शनार्थं पठिताः । तत्र वेदे "मध्यमस्याम्, अवमस्याम्" इति प्रयोगदर्शनात्प्रकारार्थताऽऽदि-शब्दस्य "सर्वादीनी"त्यत्र सम्भाव्यत इति प्रश्नः ।

(उद्द्योतः)—[4]ननु "सर्वादीनी"ति व्यवहाराद् गणपाठस्य पूर्वता निश्चीयते तः आह—आदिशब्द इति । ननु गणपाठस्य निदर्शनार्थत्वे आदिपदस्य प्रकारार्थता स्यात्, तदेव कुत इत्यत आह—तत्र वेद इति । प्रकारेणेति । सर्वनामकार्यवत्वमेव सादृश्यमिति भावः ।

अत्र समीक्षा—[5]"पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायां च संज्ञायाम्" इति सूत्रे भगवता शङ्कितं यत्पूर्वं गणपाठः पश्चात् सूत्रपाठः, इति कथं ज्ञातुं शक्यं, यतो हि आदिशब्दः प्रकारेऽर्थे व्यवस्थाऽर्थे च दृष्टः, सर्वादीनीत्यत्र आदिशब्दः प्रकारोऽर्थोऽपि सम्भाव्यते, तद्द्योतयितुम् अभियुक्तैः पश्चात् गणपाठः क्रियते, तथा हि उच्यते—श्रेष्ठादयः पठ्यन्ते कृतादिः आकृतिगणैरिति । अर्थात् श्रेणीशब्दमारभ्य परिमितानां शब्दानां गणः (समुदायः) पठितोऽस्ति, कृतादिशब्दमारभ्य तु न कोऽपि गणः पठित अपितु आदिशब्दस्य प्रकारवाच्यत्वं स्वीकृत्य तस्य आकृतिगणत्वमुक्तम् । वेदे मध्यमस्याम् "अवमस्यामि"ति प्रयोगदर्शनात् । [6]सर्वादिसूत्रे आदि-शब्दस्य प्रकारार्थता संभवात् प्रश्नोपस्थितिः, सर्वनामकार्यवत्वमेव सादृश्य-मित्याशयः ।

---

१. म० भा० आ० सू० १।१।६।६ २. प्र० पृ० २९६

३. पा० सू० १।१।२७ ४. उ० पृ० १९६

५. म० भा० आ० सू० १।१।६।६ ६. पा० सू० १।१।२७

वस्तुतस्तु सूत्रकृता पूर्वमेव गणपाठः कृतः पश्चाद् अष्टाध्यायीपाठः, अत एव [1]"पूर्वादिभ्यो नवभ्यो वे" ति सूत्रे नवग्रहणं कृतमस्ति।

**म० [2]भा० - "शाटकयुगाद्यर्थम्"। शाटकयुगाद्यर्थं तर्हीदं वक्तव्यम्। यत्रैतन्न ज्ञायते–किमन्तरीयं किमुत्तरीयमिति।**

(प्रदीपः)—[3]न वेति समानप्रमाणे शाटकयुगे अपरिहिते इदं न ज्ञायते किमुत्तरीयं किमन्तरीयमेतदित्यर्थः।

(उद्द्योतः) – [4]नन्वल्पमहत्परिमाणाभ्यामन्तरीयोत्तरीयत्वनिर्णयो भविष्यतीत्यत आह – समानेति। पदत्रयमपि। पदत्रयमपि सतम्यन्तम्। भाष्ये किमुत्तरीयं किमन्तरीयमित्येतन्न ज्ञायत इत्यन्वयः।

अत्र समीक्षा—[5]"अन्तरं बहिर्योगयोरि" ति सूत्रे उपसंख्यानग्रहणं किमर्थमित्याशङ्क्य शाटकयुगाद्यर्थमिति समाहितम्। अयमाशयः समानप्रमाणकं शटकयुगं यदा परिहितं (शरीरे धारितं) न स्यात्तदा कथं ज्ञायते किमुत्तरीयं किमन्तरीयत्वं यत्र तु प्रमाणभेदः स्यात्तत्र अल्पपरिमाणेन अन्तरीयत्वं महापरिमाणेन उत्तरीयं ज्ञातुं शक्यते। अग्रे च प्रेक्षावान् पुरुषः ज्ञातुमवश्यं शक्नोति, इदमुत्तरीयम् इदमन्तरीयमिति तदा इदमुपसंख्यानग्रहणं प्रत्याख्यातम्।

वस्तुतस्तु शाटकयुगाद्यर्थं तत्रादिशब्दवलात् शाटकानां त्रये चतुष्टये वा तृतीयचतुर्थयोः शरीरसंयुक्तयोः बहिर्योगाभावात् उपसंख्यानग्रहणं तत्र चारितार्थ्यमित्याशयः।

**म० भा०—[6]तच्चाप्येतदेवमनुगम्यमानं दृश्यताम्—किंचिदव्ययं विभक्त्यर्थप्रधानं, किंचित् क्रियाप्रधानम्। उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम्, हिरुक्पृथगिति क्रियाप्रधानम्। तद्धितश्चापि कश्चिद् विभक्त्यर्थप्रधानः, कश्चित् क्रियाप्रधानः। न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति।**

अत्र समीक्षा—भगवता भाष्यकृता अव्ययनामलिङ्गत्वमसंख्यात्वप्रति-

१. पा० सू० ७।१६
२. म० भा० आ० सू० १।१।६।८
३. प्र० पृ० २९९
४. उ० पृ० २९९
५. पा० सू० १।१।३६
६. म० भा० आ० सू० १।१।६।१०

पादितं तत्र युक्तिर्न प्रदर्शिता, अधुना, तदंशे युक्तिं दर्शयति किञ्चिदव्ययनं विभक्त्यर्थप्राधान्यमित्यादिना। अयं भावः अव्ययानां द्वैविध्यं प्रतिपाद्यते, अनेन लिङ्गसंख्ययोः सामान्याभावस्तत्र स्फुटी भविष्यति। प्रदीपकार एतद्विषये मतान्तरमपि दर्शयति यत् किञ्चिदव्ययं प्राधान्येन क्रियाबोधकं किञ्चिच्च प्राधान्येन कारकबोधकं किञ्चित्तु न क्रियाबोधकं न साधकबोधकं किन्तु द्रव्यबोधकम् "यथा स्वः (स्वर्गं) पश्य, उन्मत्तगङ्गं नाम देश इति। एवञ्चात्र नपुंसकत्वमव्यीभावश्च क्रमश अन्वाख्यातं वेदितव्यम्। अत एव भाष्यकृता पूर्वमुक्तं स्वरादीनां पुनः सत्ववचनानामसत्वचनानामिति। तस्मादलिङ्गासंख्यात्वं बाहुल्याभिप्रायेण ज्ञातव्यम्। उच्चैर्नीचैरित्यादिकं तु अधिकरणशक्तिप्रधानं, हिरुक् पृथगित्यादीनि तु क्रियाविशेषणत्वात् क्रियाप्रधानम्।

नन्वेवं तर्हि क्रियापदप्रयोगं विना पृथक् देवदत्त इत्यादि प्रयोगः कथं गच्छेत इति जिज्ञासायामुक्तं प्रदीपकृता [1]क्रियाक्षेपात् उपपद्यते। शब्दशक्तिमहिम्ना एकस्मिन्नर्थे विधीयमानयोः तेनैक् दिक् तसिश्चेति सूत्रद्वये विहितयो अण्तस्प्रत्ययोः विभिन्नधर्मत्वम्। तत्र पैलुमूलमिति द्रव्यं प्राधान्येनाभिधीयते। पीलुमूलत इति तु द्रव्योपसर्जनस्तृतीयार्थ इति तस्य साधनप्राधान्यम्। अत अव्ययविषयिणी त्रिविधा स्थितिः प्रदीपकृता उक्ता।

उद्द्योतकारः श्रीनागेशभट्टस्तु "तस्माद् [2]बाहुल्ये" ति प्रदीपप्रतीकं धृत्वा एवञ्च तादृशबहुमध्यपाठेन स्वरादीनामपि अलिङ्गासंख्यत्वम् अनुमातुं योग्यम्। अनेककारकशक्तिभोगेन त्वव्ययानां द्रव्यवचनत्वम् उन्मत्तगङ्गादीनाम् अव्ययत्वं वचनबलात् सिध्यतीत्यव्ययमिति महासंज्ञा बोध्यते, द्रव्यप्रधानता त्वीदं तदीति सर्वनाम्ना परामर्शेन योग्यत्वाद् भवति। ग्लान्याद्यर्थे वर्तमानं प्रताम इत्याद्यव्ययं तु द्रव्यवचनमेव, यद्यपि हीरुगाद्यर्थे कारकान्वयमभावात् न तस्य क्रियात्वं तथापि क्रियायामेव विशेषणत्वात् तस्याव्ययत्वं बोध्यम्। स्वरादीनां तु स्वः पतिरित्यादौ नामार्थे इत्यन्वयः। तत्र स्वः स्वर्गस्य पतिः स्वामी इत्यर्थः एतेन कैश्चिद् एतद्विषयेऽपि क्रियाविशेषणत्वात् क्रियाप्रधानता उक्ता सा निराकृता वेदितव्या, अत एव एतदर्थे कारकानामप्यन्वयः भवितुं नार्हति। तदन्वययोग्यस्य साध्यस्वभावक्रिया योगस्य तत्राभावात्। पृथक्देवदत्त इत्यादौ तु स्थित्वा इत्यादिक्रियापदस्य

---

१. प्र० पृ० ३०५ २. उ० पृ० ३०६

आक्षेपेण अन्वयो विधेयः। पीलुमूलत इत्यत्र एकदिक्स्थितपीलुमूलसाहित्यमित्यर्थो बोध्यम्।

भाष्यकृता यदुक्तं [1]न च एतयोरर्थयोः लिङ्गसंख्याभ्यां योगोऽस्ति तद्विषये उद्द्योतकृता व्याख्यायते यद्यपि [2]"प्रशंसायां रूपम्" इति सूत्रे भाष्यकृता क्रियायाम् एकत्वसंख्या उक्ता पचति रूपमित्यादौ नपुंसकत्वमप्युक्तं तथापि अव्ययवाच्ययोः एतयोरर्थयोः (विभक्त्यर्थभूतं कारकक्रियाचेत्यनये) लिङ्गसंख्याभ्याम् ईषदपि सम्बन्धी नास्तीति दिक्।

**म० भा०—[3]स्त्रीपुंनपुंसकानि सत्वगुणाः, एकत्वद्वित्वबहुत्वानि च। एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति। ये न वियन्ति तदव्ययम्।**

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥**

प्रदीपोद्द्योतानुसारिणी समीक्षा—[4]"तद्धितश्चासर्वविभक्ति"रिति सूत्रे महत्याः अव्ययसंज्ञायाः करणे प्रयोजनमुक्तं भाष्यकृता अन्वर्था इयं संज्ञा न व्येति यत्तदव्ययमिति। पुनः आशङ्कितं क्व पुनर्नव्येति, तत्र समाहितं [5]स्त्रीपुंनपुंसकानि सत्त्वगुणा एकत्वद्वित्वबहुत्वादि च एतान् अर्थान् केचन वियन्ति केचन न वियन्ति ये न वियन्ति तदव्ययमित्यादि। अयमाशयः सत्वरजस्तमसामुपचयः पुंस्त्वम् अपचयः स्त्रीत्वं साम्यं नपुंसकत्वम्, पदार्थमात्रे एते सत्वरजस्तमो गुणाः सन्त्येव, तत्र क्वचित् सत्वस्य उपचयः तत्र पुंस्त्वं यत्र च सत्वस्य अपचयः (रजसः उपचयः) तत्र स्त्रीत्वं यत्र साम्यावस्था तत्र नपुंसकत्वम्। व्याकरणशास्त्रे एतत् पारिभाषिकं लिङ्गलक्षणं स्मृत्यादिग्रन्थेषु—

**[6]स्तनकेशवती नारी लोमशः पुरुषः स्मृतः।**
**एतयोरन्तरं यच्च तदभावे नपुंसकम्॥**

इत्येवं रूपेण लिङ्गलक्षण व्याख्यातमस्ति। तत्र स्तनकेशौ भगस्योपलक्षणं, लोम इति लिङ्गेन्द्रियस्योपलक्षणम्, एतयोर्यो विशेषः तस्याभावे

---

१, म० भा० पृ० ३०५ — २ पा० सू० ५।३।६६
३. म० भा० आ० सू० १।१।६।१० — ४. पा० सू० १।१।३८
५. म० भा० पृ० ३१० — ६. सि० कौ० बा० टीका

नपुंसकं भवति। सत्वरजस्तमो गुणात्मिकायाः प्रकृतेः वैषम्ये सृष्टिः साम्ये प्रलयः, एतद्रहस्यमादाय इदं लक्षणत्रितयमुक्तम्, अर्थात् गुणत्रितयस्य वैषम्यदशायां स्त्रीपुरुषयोः सत्ता तत एव सृष्टिप्रचलनं भवति, प्रकृतेः साम्यावस्थायां नपुंसकं ततोऽग्रे सृष्टिनिरोधोऽयमेव प्रलयः। किन्तु खट्वा वृक्षादिपदार्थेषु एतल्लक्षणं न सङ्घटते इति दृष्ट्वा भगवान् पतञ्जलिः शब्दशास्त्रोपयोगी गुणोपचयापचयादिरूपं लक्षणमुक्तमिदं च पदपदार्थोभयनिष्ठं सर्वस्यापि प्रकृतिजन्यत्वात्।

ननु यदि सर्वत्रैव एतल्लक्षणसत्ता उच्यते तर्हि सर्वे शब्दाः ते लिङ्गाः कथं न भवन्तीति जिज्ञासायामुच्यते यस्य शब्दस्य यल्लिङ्गबोधकता पुण्यजनिका तस्य शब्दस्य तस्मिन्नेव लिङ्गे प्रयोगे कृते सति साधुत्वं प्रमितम् त्रिकालदर्शिणां शतदतत्त्वविदां ऋषीणां व्यवहारेण एतन् निश्चेतुं शक्यं नान्यथा। तत्र सति संभवे स्मृत्युक्तलिङ्गलक्षणसामानाधिकरणेन शास्त्रीयं लिङ्गलक्षणं ग्राह्यम्, असंभवे तु शास्त्रीयप्रक्रिया निर्वाहाय शास्त्रीयमेव ग्राह्यम्, एवञ्च एतानि लिङ्गकानि एकत्वादिसंख्याश्च, ये न वियन्ति न प्राप्नुवन्ति तद्वाचकशब्दानाम् अव्ययसंज्ञा, इममेवाभिप्रायं श्लोकरूपेणोक्तं भगवता—

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्नव्येति तदव्ययम्॥**[1]

अयमाशयः—त्रिषु लिङ्गेषु यत् सदृशं समानं भवति अर्थात् लिङ्गविशेष्यस्य प्रतिपादने यस्य सामर्थ्यं न भवति, सर्वासु विभक्तिषु च यत् सदृशं भवति। अत्र विभक्तिपदं कारकपरं कारकबोधकत्वाद् उत्तरार्द्धे वचनग्रहणाच्च।

तत्र क्रियाप्रधानानां सर्वथैव कर्मत्वादिशक्त्यभावः, साधनं प्रधानानाम् उच्चैरीत्यादीनाम् अधिकरणत्वादिशक्तिविशेषसत्वेऽपि सकलकारकत्वव्याप्यशक्तीनाम् (कर्मत्वादि-धर्माणाम्) अभावेन सर्वेषां कारकाणां सम्बन्धाभावः अस्त्येव, तथा च सर्वेषु एकत्वादिवचनेषु सादृश्यकथनेन तेषामप्यत्यन्ताभावः बोधितः, अधिहरि-प्रभृति अव्ययीभावेषु कारकत्वव्याप्यधर्मस्य लिङ्गविशेषस्य च सम्बन्धसत्वेऽपि "[2]अव्ययीभावश्चे"ति सूत्रबलाद्

---

१. म० भा० पृ० २१० २. पा० सू० १।१।४१

अव्ययसंज्ञा बोध्या। यथा—"[1]स्वति निपातयोः क्रियाहेतुकसम्बन्धविशेषद्योतकत्वाभावेऽपि कर्मप्रवचनीयसंज्ञा भवत्येव, सूत्रप्रयोज्यविधानसामर्थ्यात्, अन्यथा कर्मप्रवचनीयसंज्ञायाः अन्वर्थतया साऽत्र न स्याद्, एवञ्च प्रकृते यानि अव्ययानि असत्वभूतार्थवाचकानि तेषां लिङ्गादिसामान्याभाव अस्त्येव, लिङ्गादीनां द्रव्यधर्मत्वात्। द्रव्यवाचीनां स्वरादीनां तु शब्दशक्तिस्वभावात् तदभावो मन्तव्यः, तथा युष्मदष्मदोः लिङ्गसम्बन्धाभावात्।

केचन आचार्याः लिङ्गविशेषसम्बन्धाभावेऽपि सामान्यतो लिङ्गसम्बन्धमव्ययानामपि वदन्ति तेषां वचः स्वीकर्तुमयोग्यं प्रमाणाभावात्। [2]यन्नव्येति नानात्वं न गच्छतीत्यर्थः कृतः प्रदीपकृता, तस्येदं तात्पर्यं यद्विविधं प्रकारं न सति न गच्छति, लिङ्गसंख्यादिरूपद्रव्यधर्माश्रय एव विविधप्रकारसंभवः स चाऽत्र नास्ति। क्वचित्कैयटग्रन्थे नाना न गच्छतीति पाठः तदा एतद्विषयम् अनेकप्रकारं न प्राप्नोतीत्यर्थः प्रत्यपादि उद्द्योतकृता। श्लोके लिङ्गेष्वित्यादिपदे या सप्तमी सा वैषयिकी बोध्या, एतेषु विषयेष्वित्यर्थः।

**म० भा०—([3]ह्रस्वत्वं तुग्विधेरनिमित्तम्। क्व। ग्रामणिकुलम्।) ग्रामणिकुलं सेनानिकुलमित्यत्र ह्रस्वत्वे कृते "[4]ह्रस्वस्य पिति कृति तुक्" इति तुक् प्राप्नोति। "संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इति न दोषो भवति।**

([5]प्रदीपः)—ग्रामणिकुलमिति। इको ह्रस्व इति पूर्वोत्तरपदसन्निपातनिमित्तं ह्रस्वत्वं क तुको न निमित्तम्। तुकि हि सति पूर्वोत्तरपदयोरानन्तर्यविघातः। यदा तु ह्रस्वमात्रस्य तुगागमो न तदन्तस्य, अवयवावयवश्च समुदायावयवो न भवति तदैतत्प्रयोजनं न त्वन्यथा।

[6](उद्द्योतः)—पूर्वोत्तरेति। अधिकृतेनोत्तरपदेन पूर्वपदस्याक्षेपादिति भावः। अवयवेति। तथा प्रतीतेरित्यभिमानः। वस्तुतस्तु इगन्तपूर्वपदस्योत्तरपदसन्निपातविघातः पूर्वपदस्येगन्तत्वसन्निपातविघातश्चेति भाष्याशयः। एवं वृत्रहभिरित्यत्र नान्तस्य स्वादिसन्निपातविघातः। नान्तस्वादिसन्निपातनिमित्तकपदत्वनिमित्तको हि नलोप इति। लोके पाण्याद्यवयवाङ्गुल्यादेर्भुजपुरुषाद्यवयवत्वव्यवहारात् कैयटोक्तं चिन्त्यम्।

---

१. उ० पृ० ३१०
२. प्र० पृ० ३१०
३. म० भा० आ० सू० १।१।६।११
४. पा० सू० ६।१।७१
५. प्र० पृ० ३१३
६. उ० पृ० ३१३

अत्र समीक्षा—"[1]कृन्मेजन्तः" इति सूत्रस्य व्याख्यावसरे कुम्भकारेभ्यः इत्यत्राव्ययसंज्ञायाः अतिप्रसङ्गः उक्तः भगवता भाष्यकृता, एकारस्य आकरस्थनिकतया कृत्वात् "कुम्भकारे" इति एजन्तं कृदन्तं सम्पन्नम् । ततश्च अव्ययत्वे सति "[2]अव्ययादाप्सुपः" इति भ्यसो लुक् प्राप्नोति, [3]सन्निपात-परिभाषया तत्समाधानं क्रियते, अस्याः परिभाषायाः प्रयोजनप्रसङ्गे भाष्यकृता उक्तं ह्रस्वत्वं तुग् विधेरनित्यत्वमित्यादि । अयं भावः "ग्रामणि-कुलमि"त्यत्र "[4]इको ह्रस्वोऽङ्योगालवस्य" इत्यनेन षष्ठीसमासघटिके कुलरूपे उत्तरपदे परतः इगन्तस्य ग्रामणिपदघटकस्य ईकारस्य ह्रस्वे कृते ह्रस्वस्य [5]पिति, इति सूत्रेण तुक्प्राप्नोति सन्निपातपरिभाषया न भवति । यतो हि द्वयोः सम्बन्धिनोः सन्निपातः सः लक्षणं निमित्तं यस्य तादृशो विधिः तं सन्निपातं यो विहन्ति स तद्विघातः ([6]कर्मण्यण्) तस्य तद्विघातकशास्त्रस्य निमित्तं न भवतीति परिभाषार्थः ।

प्रकृते तु पूर्वोत्तरपदसन्निपातनिमित्तको ह्रस्वः तुकि सति पूर्वोत्तरपदयोः अव्यवहितत्वसम्बन्धस्य विघातके भविष्यतीति कृत्वा तुक् न भविष्यतीत्येतत् परिभाषाफलं निर्दशितम् ।

अत्र प्रदीपकृता उक्तं यदा तु ह्रस्व[7]मात्रस्य तुगागमो न तदन्तस्य, अवयवावयवश्च समुदायोऽवयवः न भवन्ति तदा एतत्प्रयोजनं न त्वन्यथेति । अत्रोद्द्योतकृता इत्थं व्याख्यायते यद् [8]इगन्तपूर्वपदस्योत्तरपदसन्निपात-विघातः पूर्वपदस्य इगन्तत्वसन्निपातविघातश्च तुकि सति संभवति । एवं वृत्रहन्शब्दात् तृतीया बहुवचने भिसि, वृत्रहभिरित्यत्र नान्तस्य स्वादि-सन्निपातविघातः तुकि सति भविष्यति, तत्र हि नान्तस्य स्वादिसन्निपातेन जायमानं यत्पदत्वं तन्निमित्तको नलोपः । लोके हस्तावयवः अङ्गुलिः पुरुषावयवोऽपि व्यवह्रियत एवेति कृत्वा अवयवावयवः समुदायावयवः न भवतीति कैयटकथनं चिन्तनीयमिति ।

अत्रोच्यते उद्द्योतकृता यदिद[9]मुक्तं हस्तावयव अङ्गुलिः पुरुषशरीरा-वयवः भवति तत्तु सत्यं किन्तु तत्रेदमपि विचारणीयं यत् स एव अवयवा-

१. पा० सू० १।१।३९
२. पा० सू० २।४।८२
३. म० भा० पृ० ३१३
४. पा० सू० ६।३।६१
५. पा० सू ६।१।६१
६. पा० सू० ६।३।२।१
७. प्र० पृ० ३१३
८. उ० पृ० ३१३
९. उ० पृ० ३१३

वयवः समुदायावयवो भवति योऽवयवः मध्यावयवेन सहैव उत्पद्यते, यश्च पश्चादागच्छति सः न तादृशं व्यवहारं भजते, यथा—हस्ते उत्पन्नः स्फोटादिः, तथैवात्र तुगादिः पश्चादुत्पन्नः न तु मध्यवयवेन ह्रस्वेन साकमिति, एवञ्च एतद्विषये कैयटोक्तमुचितमेव ।

अग्रे च पुनरपि उद्द्योतकृता उच्यते "[1]भविते"त्यादौ तास् अवयवस्य इटः लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य "[2]दीधीवेवीटामि" त्यनेन निषेधो व्यर्थः स्यादिति तदपि न कैयटविरुद्धं यतो हि ह्रस्वमात्रस्य तुगागमः वर्णोद्देश्यक इडागमस्तु समुदायोद्देश्यकः, तत्र "भवित् आ" इति स्थितौ आनिरूपितमङ्गत्वं भविच्छब्दे सुतरां वर्तते, यतो हि भूधातोः विहितः तिबादेशः डाप्रत्ययः तस्मिन्परे भूशब्दः आदिर्यस्य समुदायस्य तादृशः समुदायो "भवित्" इति । अतः तस्याङ्गसंज्ञा न्यायतः सिद्धा लघूपधत्वं तु स्वरस्तो वर्तते, नास्ति किमपि प्रयोजनं यद् इट्समुदायग्रहणेन गृहीतः स्यात् । पुनश्चाग्रे शङ्कितमुद्द्योतकृता—न च [3]ह्रस्वावयवत्वे तुको "यदागमा" इति न्यायेन इग्ग्रहणेन तद्विशिष्टस्य ग्रहणात् न सन्निपातविघातः "आने[4]मुगि"ति ज्ञापकेन तदनङ्गीकारात् । इदमपि कथनं न रमणीयतरं यतो हि —[5]"आने मुगि"ति ज्ञापकेन वर्णग्रहणे [6]यदागमन्यायो न प्रवर्तते इति सत्यम्, किन्तु प्रकृतस्थले प्रदीपकारोऽपि ह्रस्वमात्रस्य तुगागमपक्षे न [7]यदागमपरिभाषा योजयति, अपितु अवयवावयवः समुदायावयवो भवतीति लौकिकन्यायं योजयति तस्मिन्पक्षे प्रयोजनं च खण्डयतीति रीत्या विचारे क्रियमाणे प्रदीपकार उक्तिः युक्तितरैव प्रतिभाति ।

अग्रे शकटौ पद्धतौ इयेष उवोष इत्यादीनि उदाहरणानि प्रयोजनरूपेण दर्शितानि वर्णश्च प्रत्ययो वर्णविचारस्य अनिमित्तं स्यादित्यादिना दोषाः अपि बहवः पर्यालोचिताः । पुनः सवान्ते न हि भिक्षुकाः सन्तीति कृत्वा स्थाल्यो नाधिश्रियन्ते न च मृगाः सन्तीति यवाः नोप्यन्ते इति कृत्वा दोषाः सन्ति तर्हि सन्तु नाम न हि दोषाणां लक्षणमस्ति तस्माद् यानि एतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा अवश्यं कर्तव्या, दोषस्थले प्रतिविधानं स्वीकर्तव्यमिति दिक् ।

---

१. उ० पृ० ३१३
२. उ० पृ० ३१३
३. पा० सू० ७।२।८२
४. पा० सू० ७।२।८२
५. प० शे० प० ११
६. प० शे० प० ११
७. म० भा० आ० सू० १।१।६।१४

**म० [1]भा०—यदप्युच्यते—"असमर्थसमासश्चायं द्रष्टव्यः" इति। यद्यपि वक्तव्योऽथवैतर्हि बहूनि प्रयोजनानि ( कानि ? ) असूर्यं पश्यानि मुखानि अपुनर्गेयाः श्लोकाः अश्राद्धभोजी ब्राह्मण इति।**

(प्रदीपः[2])—अथवैतर्हीति। इदानीमित्यर्थः। तत्र "स्त्रीपुंसयो"रिति वक्तव्ये, 'अनपुंसकस्ये"ति वचनं ज्ञापकम्—"प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्तीति।

(उद्द्योतः)[3]—इदानीमित्यर्थ इति। तथापीत्यर्थ इत्युचितम्। यद्यपि वक्तव्य, इत्युपक्रमात्। स्त्रीपुंसयोरिति। मात्राधिक्येऽपि स्पष्टप्रतिपत्त्यर्थमित्यर्थः। "पुंस्त्रियो"-रिति तु वक्तुमशक्यम्, तस्या साधुत्वादिति बोध्यम्। अत्र पर्युदासमशक्यम्, तस्या साधु त्वादिति बोध्यम्। अत्र पर्युदासप्रसज्यप्रतिषेधयोः समसफलत्वोक्त्या शास्त्रप्रापितस्य प्रतिषेधविकल्प इति मीमांसकोक्तं चिन्त्यम्। सामान्यविशेषन्यायेन बाधस्यैवोचित्यात्। स्वाभावे संभावितस्यैव च प्रतिषेध इत्यादि मञ्जूषायां विस्तरः।

अत्र समीक्षा—[4]"सुडनपुंसकस्ये" ति सूत्रे नपुंसकस्येति पदे समर्थसमासो भगवता उक्तः, कुतो नयो नपुंसकेन सामर्थ्याभावात्, भवति क्रियया सामर्थ्यासत्त्वात्, एवञ्च क्रियान्वयीप्रसज्यप्रतिषेधार्थकोऽत्र नञ्शब्दः। तत्र असमर्थसमासविधिरूपा पूर्वविधस्वीकारे पूर्ववचनकलानां रूपं गौरवं दोषरूपेण दर्शितम्। पुनश्च बहूनि प्रयोजनानि इति कृत्वा अनपुंसकस्येति वचने प्रसज्यप्रतिषेधेऽपि नञ्समासो भवतीति ज्ञापयत्यन्यथा मात्राधिक्येऽपि स्पष्टप्रतिपत्तये सुट् स्त्रीपुंसयो रित्येव वक्तव्यं स्यात्।

ननु अभ्यर्हितत्वात् पुंस्त्रियोरिति कुतो नोच्यते भवता इति जिज्ञासायामुद्द्योतकारो ब्रवीति तस्या[5]साधुत्वादिति। स्त्रीपुंसाभ्यामिति निर्देशेन "अचतुरवि[6]चतुर-" इति सूत्रेण च स्त्रीशब्दस्य पूर्वनिपातं विधाय अच्प्रत्ययान्ततया (स्त्रीपुंस) इति शब्दस्यैव साधुत्वबोधनात्।

अत्र मीमांसाचार्याः [7]पर्युदासप्रयुज्यप्रतिषेधयोः समानं फलमित्युक्त्वा शास्त्रप्राप्तिः तस्य प्रतिषेधे विकल्प इति रीत्या द्वयोः विकल्पमिच्छन्ति

---

१. प्र० पृ० ३२५ २. उ० पृ० ३२४

३. पा० सू० १।१।४३ ४. उ० पृ० ३२४

५. पा० सू० ५।४।७७ ६. ल० सि० मं० न० नि०

तन्नोचितम्, यतो हि सामान्यविशेषन्याये तुल्यार्थकत्वाभावे सामान्यविशेषन्यायेन बाधः एवोचितः निषेधाश्च बलीयांसः इति भाष्योक्त्या स्वाभावे संभावितस्यैव च निषेधः, एवञ्च विकल्पप्राप्तिरेव नेति सिद्धान्तलघुमञ्जूषायां नानर्थवादे [1]निर्णीतमिति। यथा—[2]नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् इति परिभाषायां बीजमुक्तम् अक्लृप्ताभावकस्य अभावकल्पनापेक्षया क्लृप्ताभावकस्य अभावकल्पनं न्याय्यम्।

**[3]म० भा०—समानशब्दप्रतिषेधः। समानशब्दानां प्रतिषेधो वक्तव्यः नवा कुण्डिका, नवा घटिकेति।**

[4](प्रदीपः)—समानशब्दप्रतिषेध इति। समानः शब्दो वाचको येषामर्थानां तेषामित्यर्थः।

[5](उद्द्योतः)—इति करणस्यार्थनिर्देशार्थत्वे नैव समानानां शब्दानां प्राप्तिरत आह—समान इति।

अत्र समीक्षा—"[6]नवेति विभाषा" इति सूत्रे नवा इति निषेधविकल्पार्थबोधकेन शब्देन समानानुपूर्वीकः शब्दः नवाकुण्डिका, नवा घटिका नूतना इत्यर्थः। अत्र नवाशब्दः नूतनार्थकः। एनं दोषं निराकर्तुं भाष्यकार आह—समानशब्दानां प्रतिषेधो वक्तव्य इति।

अत्र प्रदीपकारः व्याचष्टे [7]समानः समानानुपूर्वीकः शब्दो वाचको येषामर्थानां तेषां विभाषासंज्ञायाः प्रतिषेधो वाच्य इति भावः।

ननु समानश्च ते शब्दाश्चेति लाघवात् कर्मधारयसमासः एव कर्तव्यः व्याकरणशास्त्रस्य शब्दव्युत्पादकत्वात्। बहुव्रीहिसमासे त्वर्थोऽन्यपदार्थः, गौरवञ्चेति दोषद्वयं निराकर्तुमुद्द्योतकारः श्रीनागेशो व्याचष्टे इतिकरणस्य अर्थनिर्देशार्थत्वे स्थिते नैव समानानां शब्दानां प्राप्तिः। अयमाशयः इति शब्दः स्वभावतोऽर्थविपर्यासकः स्वीकृतोऽस्ति, यथा लोके शब्दा अर्थपराः तत्र इतिशब्दस्य समभिव्याहारे शब्दपरत्वमायाति गवीत्यमाहेति यथा।

---

१. प० शे० प० ३८-४२
२. म० भा० आ० सू० १।१।६।१५
३. प्र० पृ० ३२६
४. द० पृ० ३२६
५. पा० सू० १।१।४४
६. प्र० पृ० ३२६
७. प्र० पृ० ३२६

व्याकरणशास्त्रे तु शब्दाः शब्दपराः "[1]स्वंरूपमि"ति शास्त्रबलात्, तत्र यदि इतिशब्दः प्रयुज्यते तदा अर्थपरत्वसमभिव्याहृतशब्दस्य भविष्यति, एवञ्च प्रकृतसूत्रे इतिशब्दस्य प्रयोगेण तत्समभिव्याहृतः नवाशब्दः अर्थपर इति कृत्वा नूतनवाच्यपि ग्रहीतुं शक्य इत्याशयेन भाष्यकृता नवा कुण्डिका इत्यत्र आपत्ति प्रदर्शिता। अग्रे च दोषोऽपि दत्तः दक्षिणपूर्वस्यां शालायाम्। नूतनायां विभाषासंज्ञा प्रसङ्गेन[2] "विभाषा दिक्समासे बहुव्रीहौ" इत्यस्य प्रवृत्तिः स्यात्। पुनश्च विधाय किञ्चित् नवा इत्युच्यत इति कृत्वा प्रतिषेधवाचिनः ग्रहणं भविष्यति यथा लोके भवता ग्रामो गन्तव्यो न वा इति। अनया रीत्या अन्ततः सिद्धं तु प्रसज्यप्रतिषेधादित्यादिना प्रतिषेध-वचनस्य नशब्दस्य विकल्पवचनस्य वाशब्दस्य च ग्रहणं कृतमिति।

**[3]म०भा०—अशिष्यो वा विदितत्वात्। अशिष्यो वा पुनरयं योगः। किं कारणम्? विदितत्वात्। यदनेन योगेन प्रार्थ्यते तस्यार्थस्य विदितत्वात्। येऽपि ह्येतां संज्ञां नारभन्ते तेऽपि विभाषेत्युक्ते नित्यत्वमवगच्छन्ति। याज्ञिकाः खल्वपि संज्ञाम-नारभमाणा विभाषेत्युक्ते नित्यत्वमवगच्छन्ति। तद्यथा—मेध्यः पशुर्विभाषितो मेध्या नड्वान्विभाषितः इति। आलब्धव्यो नालब्धव्य इति गम्यते। आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैरेतमर्थं संप्रत्याययति—बहुलम्, अन्यतर-स्याम् उभयथा, वाऽश्य एकेषाम्—इति।**

(प्रदीपः)—[4]अशिष्यो वेति। वाशब्दो विकल्पे। तेनाकृतिपक्षे उभयत्र विभाषार्थं सूत्रं कर्तव्यम्। व्यक्तिपक्षे तु लक्ष्यभेदेन लक्षणभेदात्क्वचित् किञ्चिल्लक्षणं विधिमुखेन प्रवर्तते, क्वचित्प्रतिषेधमुखेन प्रवर्तत इतीष्ट-सिद्ध्या सूत्रं न कर्तव्यमित्यर्थः।

अत्र समीक्षा—भाष्यकृता [5]"नवेति विभाषा" इति सूत्रं प्रत्याख्यातं वेदितत्वेन हेतुना। अयमाशयः लोके विभाषा पदार्थः प्रसिद्ध एव, वेदेऽपि

१. पा० सू० १।१।६८
२. पा० सू० १।१।२८
३. पा० सू० १।१।७२
४. प्र० पृ० ३३४
५. पा० सू० १।१।४४

विभाषा संज्ञा न कृताऽस्ति, किन्तु मेध्यः, पशुर्विभाषितः इत्यादौ तस्यालम्भनं कर्तव्यं न वेति गम्यते, स्वयं भगवान् सूत्रकारोऽपि विभाषासंज्ञाम् आरभमाणः सन्नपि बहुभिः अन्यैरपि शब्दैः इममर्थं बोधयति, यथा —[1]बहुलं छन्दसि, [2]छन्दस्युभयथा, वा [3]पदान्तस्य [4]यजुष्येकेषाम्, [5]पादोऽन्यतरस्यामित्यादिषु।

अत्र प्रदीपकार इममभिप्रायं प्रकाशयति यद्वा [6]शब्दो विकल्पेऽर्थे वर्तते, अतश्च जातिपक्षे उभयत्र विभाषास्थले सूत्रस्यावश्यकता वर्तते। यतो हि तस्मिन् पक्षे संग्राहकवाक्यार्थो बोद्धयते, व्यक्तिपक्षे तु प्रतिलक्षणं लक्षणोपप्लवः ( लक्षणभेदः ) इति नियमेन किञ्चिल्लक्षणं क्वचिद् विधिमुखेन प्रवर्तते क्वचित् निषेधमुखेन इति रीत्या इष्टं सिध्यत एव, सूत्रं न कर्तव्यमिति भाष्याशयः।

अत्रोद्द्योतकारः प्रदीपग्रन्थाद् विरुद्धमाचष्टे तथा हि जातिपक्षे [7]तद् जात्याश्रयः सकलव्यक्तिविषयकं सूत्रं भवति, अथवा तद्जात्याश्रयीभूतं यत्किञ्चित् व्यक्तिविषयकम्। तत्र प्रथमो पक्षः सम्भवति, [8]नवेति विभाषेति सूत्रसत्वेऽपि न पदघटितवाक्यस्य तद्विषयतायाः वक्तुमशक्यत्वात्। यदि तु तस्य यत्किञ्चिद् विषयकत्वमुच्यते, वाघटितवाक्यस्य सर्वविषकत्वं स्वीक्रियत, एतत्तु न संभवति, अर्द्धजरतीयस्य अनौचित्यात्। यतो हि नश्च वाश्च "नवौ" इति इतरेतरयोगद्वन्द्वः साहित्ये भवति, साहित्यश्च एकधर्मावच्छिन्नस्य एकरूपावच्छिन्नसंसर्गेण एकरूपावच्छिन्ने अन्वयित्वरूपम्। उक्तप्रकारेणान्वये तु तादृशं साहित्यं न संभवति। द्वितीयपक्षोऽपि न समीचीनः, न ब्राह्मणं हन्यादित्यादौ जातिपक्षमाश्रित्य सर्ववृत्तिविषयकत्वमेव स्वीकृतम्, किञ्च "विभाषा श्वे"रित्यादौ विधिमुखेन प्रवृत्तिश्चेत्तर्हि पित् लिट्विषयकत्वं, निषेधमुखेन प्रवृत्तिश्चेत्तर्हि किल्लिङ्विषयकत्वम्। तत्र विनिगमकाभावात् [9]"नवेति" सूत्राभावेऽपि उभयमुखेन प्रवृत्त्या इष्टं सिध्यत एव, यदि तु पित्विषयकप्रवृत्तौ भावतात्पर्यतत्त्वं विनिगमकमुच्यते तर्हि विभाषोपयमने इत्यादौ त्रिसंशयत्वं नोपपद्यते, भावतात्पर्यकत्वलाभेन अप्राप्तविभाषात्वस्यैव संभवात्।

---

१. पा० सू० ७।४।४८
२. पा सू० ३।४।११७
३. पा० सू० ८।४।५९
४. पा० सू० ८।३।१०४
५. पा० सू० ४।१।१८
६. प० पृ० ३३४
७. उ० पृ० ३३४
८. पा० सू० १।१।४४
९. पा० सू० १।१।४४

[1]"विप्रतिषेधे परं कार्यमि"ति सूत्रबलात् तेपु अभावतात्पर्यकत्वमपि यदि स्वीक्रियते तर्हि प्रकृतेऽपि तुल्यन्यायेन तत्कथं स्वीक्रियते, तस्मात् जातिव्यक्तिपक्षद्वयेऽपि सूत्रं न कर्तव्यमित्येव भाष्यहृदयम्। अपरञ्च [2]सूत्रसत्वे त्रिसंशयाप्राप्तविभाषास्वपि तत्प्रवृत्तिः स्यादिति कृत्वा तस्याः उच्छेद एव स्यात्, लक्षानुरोधेन प्रवृत्तिः अभावश्चेत् स्वीक्रियते तर्हि सूत्रं व्यर्थमेव भवेत्, इति भाष्यहृदयम्। एतदेव ध्वनयता भगवता भाष्यकृता त्रिसंशया-प्राप्तविभाषा प्रदर्शिता। त्रिसंशयासु अप्राप्तविभाषत्वमेव इति भ्रमनिरासाय उभयोरपि [3]( प्राप्ताप्राप्तविभाषयोरपि ) व्याख्यानं कृतमिति।

अत्रापि उद्द्योतग्रन्थे किञ्चित् समीक्ष्यते यद् [4]आकृतिपक्षे विकल्पद्वय-मुक्तं श्रीनागेशभट्टेन तत्र सकलव्यक्तिविषयकत्वयत्किञ्चित् व्यक्तिविषय-कत्वयोर्मध्ये सकलव्यक्तिविषयकत्वमेवोचितः वाक्यार्थस्य संग्राहकत्वात्, पत्पक्षे उद्देश्यतावच्छेदकावच्छेदेनैव शास्त्रप्रवृत्तेः स्वीकारात्। नपदघटित-वाक्यस्य सूत्रसत्तायां सकलव्यक्तिविषयकत्वं न शक्यमिति कथनं लक्ष्ये-लक्षणप्रवृत्तिवेलायामेव संघटते, वाक्यार्थविषये सकललक्षविषयकत्वे का क्षतिः, संग्राहकवाक्यार्थः सूत्रजन्यबोधकाले सकललक्षणविषयको भवेन्नाम प्रवृत्तिस्तु तत्रैव संभविष्यति, यत्र पूर्ववाक्यस्य प्राप्तिः स्यात्। साहित्य-विषये द्वन्द्वोऽपि सूत्रजबोधविषयकः एव न तु व्यवहारकाले, अत एव मात्र-शब्दस्य प्रत्येकं योग इति [5]प्रातिपदिककार्यसूत्रे मनोरमादिग्रन्थे, तस्येदं तात्पर्यं यत् साहित्यविषयकः प्राथमिको बोधो भवति पश्चात्तु योग्यताबलात् प्रत्येकमन्वयः, क्रमिको वाऽन्वय इत्यन्यत्।

अत एव न ब्राह्मणं हन्यादित्यादौ ब्राह्मणत्वावच्छेदेन हनुर्निषेधो विधीयते न तु यत्किञ्चित् ब्राह्मणविषयकतया, जातिपक्षस्यैव तत्रेदं महत्त्वम्।

अग्रे किञ्च तत्र किंविधिमुख्यवृत्त्या पिद्विषयत्वं निषेधमुख्यप्रवृत्त्या किद्विषयत्वं वा इत्यत्र विनिगमनविरहो दर्शितः, तत्राप्युच्यते पूर्वं तावद् विभाषा "[6]श्वे" इति सूत्रस्य संग्राहकवाक्यार्थः साधारणतयापिद पिदुभय-विषयकत्वेन अवगतो भवति पश्चात् "प्राप्तौ सत्यान्निषेधः" इति न्यायेन तस्य किद्विषयकत्वं पर्यवस्यति। एवञ्च प्राप्तौ सत्यान्निषेध इति नियम

१. पा० सू० १।४।२
२. म० भा० पृ० ३३५
३. भा० वा० ३०८
४. उ० पृ० ३३४
५. प्रौ० म० अर्थवत्०
६. पा० सू० ६।१।३०

एव तत्र विनिगमकः, सूत्रं विनाऽपि उभयमुखेन प्रवृत्तौ इष्टसिद्धिरिति यदुद्द्योतकृता उक्तं तत्राऽपि इत्थं वक्तुं शक्यते यत् पूर्वं प्रवृत्तिकाले किद्विषये निषेधमुखेन प्रवृत्त्या पिदपिदुभयांशे समता भविष्यति, पश्चात् वा इति विकल्पांशेन सर्वत्र नवस्वपि स्थलेषु विधिविकल्पेन प्रवृत्त्या इष्टं साधनीयम्। सूत्रसत्तामन्तरा उभयत्र विभाषास्थले कथमिदं स्यात्। भावतात्पर्यकता पिद्विषयत्वे विनिगमिका इति यदुक्तं तत्तु विभाषेपयमने इत्याद्युक्त्या स्वयमेव प्रत्याख्यातम्, यतो हि तत्र अप्राप्तविभाषात्वमेव स्वीकृतमस्ति। अप्राप्तविभाषायाश्च विधिमुखेनैव प्रवृत्तिः स्वीक्रियते, परन्तु इदं समाधानम् अस्मभ्यं न रोचते, यतो हि—जातिपक्षेऽपि उभयत्र विभाषार्थमेव सूत्रं स्वीकृतमस्ति। प्राप्तविभाषायामप्राप्तविभाषायाञ्च लोकत एवेष्ट सिद्धिः ध्रुवं भवति, सूत्रस्यावश्यकता नास्ति जातिपक्षेऽपि।

अत एव भाष्ये वाशब्दः उपात्तः, यदि उभयपक्षे सूत्रप्रत्याख्यानमिष्टं स्यात्तर्हि 'अशिष्यो विदितत्वाद् इत्येव भाष्यकृता उच्येत, एवञ्च न वेति योग अशिष्यः न कर्तव्यः विदितत्वात् नवाशब्दयोः लोकप्रसिद्धार्थकत्वादिति भाष्यार्थः स्यात्। वाशब्दघटितवाक्योच्चारणेन भाष्यकारस्य हृदयम् एकस्मिन्नेव पक्षे प्रत्याख्यानमस्ति इत्यत्रैव तात्पर्यं प्रकाशयति। तच्च प्रदीपग्रन्थोक्तरीति सम्भवति न तु उद्द्योतकृदुक्तपक्षे इति दिक्।

**इति महाभाष्य-समीक्षणे तृतीयाध्यायः चतुर्थः पादश्च।**

# अथ चतुर्थोऽध्यायः

**म० [1]भा०--अथवा इजादियजादिप्रवृत्तिश्चैव हि लोके लक्ष्यते। यजाद्युपदेशात्तु रजादिनिवृत्तिः प्रसक्ता। प्रयुञ्जते च पुनर्लोका इष्टम् उप्तमिति। ते मन्यामहे--अस्य यणः स्थाने इममिकं प्रयुञ्जते इति। तत्र तस्यासाध्वभिमतस्य शास्त्रेण साधुत्वमन्वाख्यायते---किति साधुर्भवति, ङिति साधुर्भवीति। इग्यणः सम्प्रसारणम्।**

(प्रदीपः)—[2]सिद्धं तु नित्यशब्दत्वादित्येतत्समर्थनार्थमाह—अथवेति। बुद्धिविपरिणाममात्रं स्थान्यादेशभाव इत्यर्थः। असाध्वभिमतस्येति। प्राक् सम्प्रसारणशास्त्रादिति भावः। यथासंख्यसंबन्धाददुहितरामितीकारस्य सम्प्रसारणसंज्ञा न भवति। [3]दिव उदित्युत्वे यणादेशे कृते हल इति दीर्घत्वं तपरकरणान्न भवति—द्युभ्यामिति। अक्षाद्युवावित्यत्र [4]सम्प्रसारणाच्चेति पूर्वैकादेशो न भवत्यचः पश्चात्सन्निधानादथवा वार्णादाङ्गस्य बलीयस्त्वात्।

अत्र समीक्षा—[5]"इग्यणः सम्प्रसारणमि" ति सूत्रे वर्णसंज्ञाया वाक्यार्थसंज्ञायाश्च पक्षौ समाश्रितौ, तत्र वर्णसंज्ञापक्षे इतरेतराश्रयदोषेण सम्प्रसारणस्य विधिर्न सिध्यति, यतो हि—सम्प्रसारणपदार्थो ज्ञातश्चेत्तदा तस्य विधानं स्यात्, यणः स्थाने यदा इको विधानं स्यात्तदा तत्र सम्प्रसारणपदार्थता ज्ञाता भवेत्। एवञ्च ज्ञप्तौ उत्पत्तौ च अन्योन्याश्रयदोष आयातः सम्प्रसारणपदार्थज्ञानाधीनं [6]"ष्यङः सम्प्रसारणमि" ति सूत्रेण सम्प्रसारणादेशस्य उत्पत्तिः, सम्प्रसारणादेशोत्पत्त्यधीनं यण्स्थानिकत्वेन तस्मिन् इक्पदार्थे सम्प्रसारणपदार्थत्वज्ञानम्, [7]अन्योन्याश्रयाणि च कार्याणि न प्रकल्पन्ते इत्येष दोष आगतः, तत्र तं दोषं परिहर्तुं भगवता [8]उक्तं सिद्धं तु नित्य-

---

1. म० भा० आ० सू० १।१।७१
2. प्र० पृ० ३५०
3. पा० सू० ६।१।१३१
4. पा० सू० ६।१।१०८
5. पा० सू० १।१।४५
6. पा० सू० ६।१।१५
7. म० भा० पृ० ३४८
8. म० भा० पृ० ३४९

शब्दत्वादिति। अयमाशयः शब्दानां नित्यत्वं वदतां शाब्दिकानां मते नैष दोषः, यतो हि सम्प्रसारणादेशस्य उत्पत्तिर्यदि स्यात्तदैष दोषः संभवेत्। शब्दनित्यत्ववादे तु शब्दोत्पत्तिपक्षाः न संभवति, अतश्च नान्योन्याश्रयदोषलेशः, शब्दास्तु सर्वे पूर्वतः सिद्धा एव तेषां साधुत्वमात्रं व्याकरणशास्त्रेण परिज्ञायते। तदेवोच्यते भाष्यकृता—इजादिययजादिप्रवृत्तिश्चैव हि लोके लक्ष्यते, यजाद्युपदेशाद् इजादिनिवृत्तिः प्रसक्ता, प्रयुञ्जते च पुनर्लोकाः इष्टमुक्तमिति।

अयं भावः बुद्धिविपरिणाममात्रं स्थान्यादेशभावः। तत्र यण्प्रयोगे प्रसक्ते प्रयुज्यमानो य इक् स सम्प्रसारणसंज्ञः स्यात्, तज्ज्ञानं तु यजाद्युपदेशज्ञानमात्रेण "य चिस्वपी"त्येतज्ज्ञानं विनाऽपि भवितुमर्हति। "वचिस्वपी"त्यादेश्च अयमर्थो बोध्य, यण्घटितप्रयोगे प्रसक्ते इग्घटितः शब्दः प्रयोक्तव्यः, स च साधुरिति साधुत्वज्ञानमात्रं शास्त्रं विधत्ते न तु यणः स्थाने इकमुत्पादयति। असाधोः साधुत्वं ब्रह्मणाऽपि कर्तुमशक्यम्, अतः सम्प्रसारणशास्त्रज्ञानात्प्राक् असाधुत्वेन अभिमतो यः शब्दः तस्य शास्त्रेण साधुत्वं ज्ञाप्यते, वस्तुस्थित्या शास्त्रप्रवृत्तेः पूर्वमपि तत्र असाधुत्वं नासीदत एव भगवता भाष्यकृता असाध्वभिमतस्येत्युक्तम्। एवञ्च असाधुत्वप्रकारिका भ्रमात्मिका या बुद्धिः तस्याः व्यपगमः, तत्र साधुत्वप्रकारकबुद्धेश्चोपगमः शास्त्रेण संपाद्यते। किति ङिति प्रत्यये परतः वच्यादीनां कृते इक्घटितः प्रयोगः साधुर्भवतीति।

ननु दुह् धातोर्लुङि उत्तमपुरुषैकवचने इटि तस्य सम्प्रसारणत्वे "अदुहितरामि" त्यादिप्रयोगे [1]"हलः" इति सूत्रेण दीर्घः कथन्नेति जिज्ञासायामुक्तं प्रदीपकृता—यथासंख्यसम्बन्धादिति। अयं भावः [2]"इग्यणः सम्प्रसारणमि"ति सूत्रे "यथासंख्यसूत्रबलेन एकारस्थानिकस्यैव इकारस्य सम्प्रसारणसंज्ञा भविष्यति न तु लकारस्थानिकस्य। प्रकृते तु "अदुहितरामि"त्यत्र लकारस्थानिकः इडादेशः [3]"तिप्तस्झि" इत्यादिसूत्रेण साधितः तस्य सम्प्रसारणसंज्ञा न संभवति।

[4]एवञ्च यथासंख्यसूत्रस्यात्र प्रवृत्त्यर्थं लृकारोपदेश आवश्यक इति [5]"ऋलृक्"सूत्रभाष्ये लृकारोपदेशप्रत्याख्यानप्रकारो संगतः स्यादिति कृत्वा कैयटोक्तिश्चिन्त्या, तस्मात् सम्प्रसारणस्येत्यादौ तद्भावितपक्ष एवाश्रयणीयः।

१. पा० सू० ६।४।२
२. पा० सू० १।१।४५
३. पा० सू० ३।४।७८
४. पा० सू० १।३।१०
५. शि० सू० २

अयं पक्षः वाक्यसंज्ञास्थापनवेलायां वाक्यार्थबोधनेच्छया वाक्यैकदेशस्यापि प्रयोगो भवतीति वदता भाष्यकृता एव शोचितः। अतः द्युभ्याम्, अक्षाद्युवावित्यादौ न दोष इति उद्द्योतकारमतं तत्रेदं विमृश्यते यत् [१]"ऋलृक्" सूत्रे महाभाष्ये लृकारोपदेशः न प्रत्याख्यातः अपि तु क्लृप्तशिखार्थस्थापितः एव प्रत्युत महतो वंशस्तम्बात् लट्वाऽनुकृष्यते इत्युक्त्या लृकारः स्थापितः एव तर्हि न तत्रत्यभाष्यविरोधः। [२]यथासंख्यसूत्रप्रवृत्तयेऽपि यदि लृकारोपदेशो मन्यते तर्हि का हानिः, एवञ्च कैयटोक्तपक्षः समीचीन एव प्रतिभाति। द्युभ्यामित्यादौ [३]"हलः" इति न दीर्घः, [४]"दिव उत्" इति सूत्रे तपरकरणाद् इत्यपि कैयटोक्तं सम्यगेव तदर्थं तद्भावितपक्षाश्रयणमेव गौरवग्रस्तं प्रतिभाति, [५]अक्केचेन्मधुविन्देत किमर्थं पर्वतं व्रजेत्" इति न्यायेन तपरकरणं सन्निहितं निमित्तं दीर्घाभावे यद्यस्ति तर्हि तद्भावितपक्षाश्रयणे पर्वतारोहणमेव भवति। "अक्षाद्युवौ" इत्यत्र [६]"सम्प्रसारणाच्चेति सूत्रेण पूर्वरूपः एकादेशो न शङ्क्यः, अचः पश्चात् सन्निधानाद् इति कैयटोक्तेः अयमाशयः यत् सम्प्रसारणस्य पूर्वत्वे समानाङ्गग्रहणं कर्तव्यमिति वार्तिकसत्वात्, औकारस्तु नाङ्गघटकः, अपि तु पश्चादायातः यदा तु वार्तिकमेतत् प्रत्याख्यातं तदा "वर्णादाङ्गं [७]बलीयः" इति न्यायेन वर्णमात्रोद्देश्यकपूर्वरूप एकादेशापेक्षया आङ्गस्य उवङादेशस्य बलीयस्त्वात्। एवञ्च शब्दनित्यत्वपक्षः अत्र भाष्यकृता समर्थितः प्रदीपोद्द्योताभ्यां चानुमोदितः अदुहितरामित्याद्यारभ्य वर्णादाङ्गस्य बलीयस्त्वाद् इत्यन्तं व्याख्यानं प्रासङ्गिकम्।

**म० भा०--[८]अर्थनिमित्तक एव शब्दः। तत्कथम्। आद्यन्तौ षष्ठ्यर्थौ। न चात्र षष्ठी पश्यामः। ते मन्यामहे—आद्यन्तावेवात्र न स्तः। तयोरभावे षष्ठ्यमपि न भवतीति। [९]आद्यन्तौ टकितौ।**

---

१. शि० सू० २
२. पा० सू० १।३।१०
३. पा० सू० ६।४।२
४. पा० सू० ६।१।१३१
५. पा० त० कौ० वा० टी०
६. पा० सू० ६।१।१०८
७. प० शे० प० ५५
८. म० भा० आ० सू० १।१।७२
९. पा० सू० १।१।४६

(प्रदीपः)—[1]अर्थनिमित्तक एवेति। अर्थ एव शब्दस्य प्रयोजकस्तत्प्रतिपादनाय शब्दप्रयोगः। अप्रयोगाच्चानुमीयते—नूनमर्थ एवात्र प्रयोजको नास्ति शब्दप्रयोगः यः प्रयुञ्जीतेत्यर्थः। चरेष्ट इत्यत्र परश्चेत्यधिकारात् पञ्चम्येव युक्ता। गापोष्टग्, व्रीहिशाल्योर्ढगित्यादावप्यानन्तर्यसम्बन्धे षष्ठी। न त्ववयवावयविसंबन्धे। प्रत्ययपरत्वेन प्रतियोगं सन्निहितेन काङ्क्षाविच्छेदादनर्थित्वादस्या अनुपस्थानात्। [2]पुरस्तादपवादन्यायस्तु यथोद्देशपक्षे सम्भवति, न कार्यकालपक्ष इति नाश्रितः।

(उद्द्योतः)—[3]भाष्ये समाधत्ते–अर्थनिमित्तक एवेति। तद्व्याचष्टे अर्थ एवेति। अनुमीयते इति। कार्याभावेन कारणाभावोऽनुमीयते। यथा नदीपूराभावेनोपरिदेशे वृष्ट्यभाव इति भावः।

अत्र समीक्षा—[4]"आद्यन्तौ टकितौ" इति सूत्रस्य [5]"चरेष्टः" "आतोऽनुपसर्गे [6]कः" इत्यादिषु टित्वकित्वाभ्यां प्रवृत्तिमाशङ्क्य भगवता समाहितमाद्यन्तयोः षष्ठ्यर्थत्वात्, षष्ठ्याः अभावे आद्यन्तयोः सम्प्रत्ययो न भविष्यति। तदुपरि शङ्कितं यत् शब्दनिमित्तक अर्थः स्यात्तर्हि अर्थनिमित्तकशब्दः इति वैपरीत्यं कथं न भवेत्, तत्र सिद्धान्तिना भाष्यकृता समाहितं यत् सत्यमुच्यतेऽर्थ एव शब्दस्य प्रयोजकः तत्प्रतिपादनायैव शब्दस्य प्रयोगः, प्रकृते च आद्यन्तौ षष्ठ्यर्थौ (षष्ठ्यर्थद्वारा षष्ठीप्रयोगस्य निमित्तभूतौ) अनयोः आद्यन्तरूपयोः अर्थयोरभावे तत्प्रयोज्या षष्ठ्यपि न भवति। एवञ्च प्रत्ययप्रकरणे षष्ठ्याः अप्रयोगाद् अनुमातव्यं यदर्थ एवात्र तादृशो नास्ति यः षष्ठीप्रयोगं कारयेत्। यतो हि [7]"चरेष्ट" इत्यत्र [8]"परश्चे" ति सूत्रस्य अधिकारात् पञ्चम्येवोचिता गापोष्टक् इत्यादौ आनन्तर्यरूपे सम्बन्धे षष्ठी बोध्या, न हि तत्रावयवावयवीभावः षष्ठ्यार्थतया शङ्कनीयः। प्रत्ययपरत्वेन प्रतियोगं सन्निहितेन आकाङ्क्षानिवृत्तेः स्वार्थभूतं सम्बन्धनम्, अवयवावयवीभावादिकं बोधयितुम्, तत्र अस्याः "आद्यन्तौ [9]टकितौ" परिभाषायाः उपस्थितिर्न भविष्यति। [10]परस्तादपवादन्यायस्तु यथोद्देशपक्षे

---

१. प्र० पृ० ३५६
२. प० शे० प० ६०
३. उ० पृ० ३५६
४. पा० सू० १।१।४६
५. पा० सू० ३।२।१६
६. पा० सू० ३।२।३
७. पा० सू० ३।२।१६
८. पा० सू० ३।१।२
९. पा० सू० १।१।४६
१०. प० शे० प० ६०

एव संभवति न तु कार्यकालपक्षे। अतः तस्मिन् पक्षे इदमेव समाधानं समुचितमिति भावः।

अत्रोद्द्योतकारः—[1]अर्थनमित्तक एव शब्दः इति भाष्ये व्याख्यानस्य प्रदीपकारस्याशयम् अनुवदि अर्थ एवेति। अयं भाव अर्थनिमित्तक एव शब्द इति भाष्यवाक्ये एवकारो भिन्नक्रमः, अर्थ एव निमित्तं यस्य एवं विग्रहः कार्य इति तात्पर्यम्।

पुनश्च प्रदीपकारस्य अनुमानप्रकारः विशदीकृतः उद्द्योतकृता, कार्याभावेन षष्ठीप्रयोगरूपकार्यस्याभावेन आद्यन्तरूपार्थात्मककारणस्य अभावोऽनुमातव्यः, यथा—नद्यां पूराभावेन बृहत्तरङ्गप्रयोज्यवृद्ध्यभावेन ( कार्याभावेन ) उपरितनुदेशे वृष्टिरूपकारणस्याभावः अनुमीयते।

पुनश्चाग्रे प्रदीपग्रन्थे कार्यकालपक्षे [2]पुरस्तादपवादो न्यायो नाश्रितः इति यदुक्तं तस्य खण्डनं कृतमुद्द्योतकृता—वस्तुतस्तु आश्रित एव परवचनात् सिद्धमित्यस्यैव सिद्धान्त्युक्तित्वात्। नापवादत्वादित्यादेः पूर्वपक्ष्यैकदेशिसिद्धान्तस्यैकदेशिनो उक्तित्वात्।

वस्तुतस्तु परवचनात्सिद्धमित्यस्य सिद्धान्तिवचनत्वेऽपि न कैयटग्रन्थविरोधः, यथोद्देशपक्षे [3]पुरस्तादपवादन्यायस्य तेनापि स्वीकारात्। कार्यकालपक्षे तन्न्याय्यापि नाभ्युपगमेऽपि न काचिद् हानिः, एकतरेण पक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानस्य अनौचित्यात्।

वस्तुतस्तु कार्यकालपक्षे [4]"परश्च"त्यधिकारे षष्ठी तादृशी नास्त्येव येन [5]"आद्यन्तौ" इत्यस्योपस्थितिः आकाङ्क्षिता स्याद् एतच्च प्रदीपकृता पूर्वं लिखितमेव तर्हि कार्यकालपक्षे एतन्न्यायस्य आश्रयणमनुचितमेव प्रतीयते इति दिक्।

**म० भा०—[6]अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः। यद्यभक्तो दीर्घत्वं न प्राप्नोति। कुण्डानि, वनानि। "नोपधायाः, [7]सर्वनामस्थाने चासम्बुद्धौ" इति दीर्घत्वं न प्राप्नोति। दीर्घः।**

---

१. उ० पृ० ३५६
२. प० शे० प० ६०
३. प० शे० प० ६०
४. पा० सू० ३।१।२
५. पा० सू० १।१।४६
६. म० भा० आ० सू० १।१।७।३
७. पा० सू० ६।४।८

(प्रदीपः)—[1]कुण्डानीति। नान्तमङ्गं न भवतीति दीर्घत्वाप्राप्तिः। ननु तदादिवचनं स्यादित्मनुमर्थमित्युक्तम्। एवं तर्हि तत् स्मर्तव्यं भवतीति गौरवापत्तिः।

(उद्द्योतः)—[2]अभक्ते इति वार्तिकस्यैते न सिध्यन्तीति शेषः। नन्वभक्तात्वेऽपि नान्तमस्त्येवेत्यत आह—नान्तमङ्गमिति। दीर्घविधावङ्गाधिकारादिति भावः। गौरवापत्तिरिति। प्रतिपत्तिगौरवापत्तिरित्यर्थः।

अत्र समीक्षा—[3]मिदचोऽन्त्यात्परः" इति सूत्रेण विधीयमानः मिदागमः पूर्वान्तः स्यात् परादिः स्याद् अभक्तो वा स्यादिति संशय विधाय तस्योपपत्तिरपि भाष्यकृता विहिता—तथा हि—[4]"आद्यन्तौ टकितौ" इत्यतः यदि "अन्तः" इति पदं क्वचिदेकदेशोऽप्यनुवर्तते इति नियमेनानुवृत्तं भवेत्तर्हि पूर्वस्य संघातस्य, "अन्तः" इति रीत्या प्रथमः पक्षः सम्भाव्यते। यदि च आदिपदमनुवर्तते तदा सामर्थ्यात् परभागस्यादित्वं संभवतीति कृत्वा द्वितीयः पक्षः। अस्मिन् पक्षे अचोऽन्त्यात्परः स्यात् पूर्वस्य च आदिः स्यादित्युभयं न संभवति। अतः परस्यादिरिति पक्षः आगतः। यदि त्वुभयमपि नानुवर्तते तदा तृतीयो यमभक्तपक्षः। तत्र पुनः शङ्क्यते भगवता एषु पक्षेषु को विशेष इति। तस्मिन्नेव प्रसङ्गे पूर्वमभक्तत्वपक्षे एव दोषो दीयते "भक्ते दीर्घनलोपे" इत्यादिना।

अयमाशयः यद्ययं पक्षः आश्रितो भवेत्तर्हि कुण्डानि, वनानि, इत्यादौ अङ्गस्य नान्तत्वाभावात् [5]"सर्वनामस्थाने चासम्बुद्धौ" इति सूत्रेण डकारोत्तरस्य अकारस्य दीर्घो न भविष्यति, यतो हि तत्र नोपधायाः इत्यनुवर्तते सम्बुद्धिभिन्नसर्वनामस्थाने परतः नान्तस्याङ्गस्य दीर्घः सम्पाद्यते तेन सूत्रेण। अत्र तु कुण्डन्, इत्यादेः नुमिकृते नान्तत्वेऽपि अङ्गस्य नान्तत्वाभावः। नुमु अनवयवत्वे तद्विशिष्टस्य अङ्गग्रहणेन अग्रहणात्। वस्तुतस्तु तदादिग्रहणं स्यादित्यनुमर्थमिति भाष्योक्त्या नकारविशिष्टस्याङ्गसंज्ञा भविष्यत्येव तर्हि अत्र लक्षस्यासिद्धिर्न दोष अपि तु वार्तिकस्मरणप्रयुक्तगौरवं स्यादित्येव दोषः, एवं नलोपोऽपि न सिद्ध्यति, "अग्ने त्रीते वाजिना" इत्यत्र त्रीणिशब्दे [6]"शेश्छन्दसि बहुलमि"ति शेर्लोपः पुनः [7]"न लोपः

१. प्र० पृ० ३५९
२. उ० पृ० ३५९
३. पा० सू० १।१।४७
४. पा० सू० १।१।४६
५. पा० सू० ६।४।८
६. पा० सू० ६।१।७०
७. पा० सू० १।१।१९१

प्रातिपदिकान्तस्ये'' ति नलोप इदानीं न सिद्ध्यति नकारस्य प्रातिपदिकान्तत्वाभावात्। उक्तसूत्रेण तु प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नस्य लोपो विधीयते। अत्र पदान्तत्वसत्वेऽपि प्रातिपदिकान्तत्वं नास्ति, एवमेव ''सर्वाणि ज्योतींषि'' इत्यादौ [१]सर्वस्य सुपीत्यनेन आद्युदात्तत्वं न प्राप्नोति नुमासुपो व्यवधानात्। अत्र नुमोभक्तत्वे ''सुपि'' इत्यस्य सौवर्यः सप्तम्यः तदन्तसप्तम्यो भवन्तीति नियमेन तदन्तसप्तमीत्वपक्षे तदभावपक्षे वा उभयथापि तत्र स्वरः सिद्ध्यति।

इदानीम् अभक्तत्वपक्षे तस्य तस्य तदन्तसप्तमीत्वाभावे स्वरो न सिध्येत् इत्येतद्विशेषप्रदर्शनार्थमेवेदं भाष्यकृता उक्तं न तु लक्षासिद्धिर्दोष अत्रापि। एवमेव ''भाष वापाणि'' इत्यादावस्मिन् पक्षे णत्वं न सिध्यति, अतः नुम्ग्रहणं कर्तव्यमिति गौरवं दर्शितम्। अयमाशयः पूर्वस्य परस्य वा अवयवः नुम् चेत्तर्हि अत्र प्रातिपदिकान्तत्वाद् विभक्तिसम्बन्धीत्वाद्वा नकारस्य णत्वं सिध्यति, अभक्तत्वे तु तत्साधनाय अपूर्वं नुम्ग्रहणं कर्तव्यमिति गौरवं स्यात्।

वस्तुतस्तु उत्तरपदस्य प्रातिपदिकस्य अन्तः एव नकारो गृह्यते, गर्गाणां भगिनी गर्गभगिनीत्यादौ णत्ववारणाय। अत अत्रत्यो नुम् समुदायभक्तत्वादुत्तरपदस्य अन्तो न भवतीति कृत्वा सूत्रे नुम्ग्रहणमावश्यकम्, अन्यथा उक्तलक्षे णत्वं न सिध्येत्। एवमेव द्विषन्तपः, इत्यादौ ''मोऽनुस्वारः[२]'' इति सूत्रेण मकारस्यानुस्वारो न सिध्येत् पदान्तत्वाभावात्। यदि तु [३]''नश्चापदान्तस्य झलि'' इति सूत्रेण मकारस्य अपदान्तत्वेऽपि णत्वं भविष्यतीति नाऽत्र कश्चन दोष इत्युच्यते तर्हि ''वहं लिहः'' इत्यत्रानुस्वारो न सिध्येदिति दूषणं बोद्धव्यम्। एवमेव अस्मिन् पक्षे ''त्रपुणी''त्यादौ नपुंसकादुत्तरस्य औङः शीभावो भवतीत्यर्थकेन [४]''नपुंसकाच्चे''ति सूत्रेण शीभावो न भविष्यति, नित्यत्वात्परत्वाच्च नुमि कृते शीभावप्रतिबन्धकं तद्व्यवधानं भविष्यति। एभिः दूषणैः अयमभक्तत्वपक्षो निराकृतः। एवमेव नानादोषोक्त्या परादित्वपक्षोऽपि तिरस्कृतः सर्वान्ते च पूर्वान्तत्वपक्ष एव सिद्धान्तितो भगवता भाष्यकृता।

**म० भा०–[५]एचोश्चोत्तरभूयस्त्वादवर्णो न भविष्यति। भूयसीमात्रेवर्णोवर्णयोः, अल्पीयस्य वर्णस्य। भूयस एव ग्रहणानि**

---

१. पा० सू० ६।१।१९ २. पा० सू० ८।३।२३

३. पा० सू० ८।३।२४ ४. पा० सू० ७।१।१९

५. म० भा० आ० सू० १।१।७।४

**भविष्यन्ति। तद्यथा "ब्राह्मणग्राम आनीयताम्" इत्युच्यते। तत्र चावरतः पञ्चकारुकी: भवति। एच इग्घ्रस्वादेशे।**

(प्रदीपः)—[1]ऐचोश्चेति। ऐकारः कण्ठ्यतालव्य औकारः कण्ठ्योष्ठ्यः। न च तथाविधौ ह्रस्वोऽस्तीति अवयवान्तरसेन भाव्यम्। भूयसा चावयवेन व्यपदेशो भवति। तदात्मक इव हि समुदायो लक्ष्यत इतीदुतावेव भविष्यतः। ब्राह्मणग्रन्थ इति। ब्राह्मणानां वास्तव्यत्वे उदाहरणम्, न तु स्वामित्वे।

(उद्द्योतः)—[2]भूयस एवेति। भूयो शस्यान्तरतम्यप्रतियोगितया ग्रहणमित्यर्थः। ब्राह्मणस्वामिकग्रामस्य भूयसा व्यपदेशे दृष्टान्तत्वासङ्गतेराह—वास्तव्यत्वे इति। वास्तव्यः कर्तरि तव्यान्तः। कुलालकर्मारवर्धकिनापितरजका पञ्चकारुकी।

अत्र समीक्षा—"एच [3]इग्घ्रस्वादेशे" इति सूत्रे इग्ग्रहणस्य प्रयोजनमुक्तं भगवता भाष्यकृता सर्वानिवृत्त्यर्थमकारनिवृत्त्यर्थञ्च। तत्र सवर्णनिवृत्तिरूपं प्रयोजनं प्रत्याख्याय अकारनिवृत्तिरूपं प्रयोजनमपि प्रत्याख्यातुमारभ्यते—अकारनिवृत्त्यर्थेनापि नार्थ इति। अकारनिवृत्तिरपि इग्ग्रहणस्य प्रयोजनं नास्ति, कुतः ऐचोश्चोत्तरभूयस्त्वात्। अयमाशय अत्र भूयसीमात्रा इवर्णोवर्णयोः सार्द्धमात्रैकमात्रा (अद्धयर्द्धमात्रा) इत्यर्थः, अल्पीयसीमात्रा अवर्णस्य अर्द्धमात्रा इत्यर्थः, तयोः स्वार्थे ईयसुन्प्रत्ययः। अथ च भूयसा एव व्यपदेशः प्रकल्पते, यथा ब्राह्मणग्राम आनीयतामित्युक्ते सति, नहि तत्र केवलं ब्राह्मणाः एव वसन्ति अपि त्ववरतः (न्यूनतः) पञ्चसङ्ख्याकाः कारवोऽपि भवन्ति, तदेवोक्तं भगवता भाष्यकृता तत्र चावरतः पञ्चकारुकीः भवतीति। कारवः एव कारुकाः शिल्पिनः स्वार्थे कप्रत्यये पञ्चानां कारुकाणां समाहारः पञ्चकारुकीः ते च कुलालः (कुम्भकारः) कर्माणः (लौहकार.) वर्धकिः (बढ़ई इति भाषायां) नापितः (प्रसिद्धः) रजकः (धावकः) इत्येते पञ्चशिल्पिनः, एतैर्विना आवश्यकव्यवहाराः न प्रचलन्तीति, एवञ्च तत्र भूयसां ब्राह्मणानां निवासः तादृशव्यवहारे प्रयोजकः, अल्पीयसां कारवादीनां निवासस्तु तादृशं व्यवहारं सम्पादयितुं न क्षमते। पञ्चशिल्परहितस्य ब्राह्मणग्रामस्याप्रसिद्धत्वात्। एवमेव प्रकृतेऽपि इवर्णोवर्णयोः अर्द्धयर्द्धमात्रिकत्वेन मात्राभूयस्त्वात् प्राधान्येन तस्मिन्नंशे (ऐजंशे) तस्यैव व्यवहारो न त्वकारस्य। अतस्तयोरेव स्थानित्वस्वीकारेण तालुस्थानिकः ह्रस्व इकारः, ओष्ठस्थानिकः ह्रस्वोकारस्य क्रमशः तत्र भविष्यतः। एङ्विषये तु सस्थानत्वमपि (तुल्यस्थानत्वञ्च)

---

१. प्र० पृ० ३६५    २. उ० पृ० ३६५
३. पा० सू० १।१।४८

आन्तरतम्य प्रयोजकं भवति, इकारस्य तालुस्थानजन्यस्य तालुस्थानजन्यः इकारः, ओष्ठस्थानजन्यस्य ओकारस्य ओष्ठस्थानजन्य ओकारः, इकारस्य तालुमात्रं स्थानम्, ओकारस्य ओष्ठमात्रं स्थानमिति मतान्तरेण प्रवृत्तं भाष्यमित्यन्यत् ।

**म० भा० —[1]अधिकारो नाम त्रिप्रकारः । कश्चिदेकदेशस्थः सर्वशास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति । अपरोऽधिकारो यथा रज्ज्वा यसा वा बद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेण । अपरोऽधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगयोगे उपतिष्ठते । तद्यदेष पक्षः—अधिकारः प्रतियोगं तस्यानिर्देशार्थं इति, तदा हि यदेवा दः पुरस्तादवयवषष्ठ्यर्थमेतदुत्तरत्रानुवृत्तं सत् स्थाने योगार्थं भविष्यति ।**

(प्रदीपः)—[2]अधिकारो नामेति । पारार्थसाम्यात्परिभाषाऽ प्यधिकार इत्युच्यते । कश्चिदिति । परिभाषारूप इत्यर्थः । चकारेणेति । यथा "[3]सहस्य सः" इत्यविशेषेण "ग्रन्थान्ताधिके च" त्यादावनुकृष्यते ।

(उद्द्योतः)—[4]कश्चिदेकदेशस्थ इति । इदं च यथोद्देशपक्षे स्पष्टमेव । कार्यकालेऽपि स्वविषयसर्वशास्त्रैकवाक्यत्वावदेवमुक्तिः, पठितदेशस्थेनैव तत्र तत्र तद्बुद्धिजननात् दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकम् । न तु तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशे गमनमस्तीति बोध्यम् । पठितदेशस्थत्वमेव सर्वथा बोधयितुमेकदेशस्थ इत्युक्तम् । तस्यानिर्देशार्थ इति । अधिक्रियमाणस्यानुच्चारणार्थ इत्यर्थः । यदेवा द इति । शब्दाधिकार आश्रयिष्यत इत्यर्थः ।

अत्र समीक्षा—"षष्ठी स्थाने [5]योगा" इति सूत्रे भाष्यकृता शङ्कितम् अवयवषष्ठ्यादिषु स्थाने योगत्वस्य अतिप्रसङ्गः स्यात् । [6]शास इदङ्हलोरित्यत्र शास, इत्यपि स्थानषष्ठी स्याद् अनुवृत्तिलब्धायाः उपधाया इत्यपि । एवञ्च तत्र शासधातोरन्तस्येत्वं स्यात्, कस्यश्चिदपि धातोः उपधामात्रस्य,

---

१. म० भा० आ० सू० १।१।७५ २. प्र० पृ० ३६९
३. पा० सू० ६।३।७८ ४. उ० पृ० ३६९
५. पा० सू० १।१।४९ ६. पा० सू० ६।४।३४

एवमुपधायाः गोहः, इत्यत्रापि गोहेः अन्तस्योकारादेशः स्यादुपधामात्रस्य च। अस्यामाशङ्कायां समाहितं यत्परिभाषाशास्त्रस्य तत्रैव प्रवृत्तिः यत्र सन्देहः शासः, इत्यादिषु च अवयवावयवीभावरूपः सम्बन्धः निर्णीतो वर्तते। तत्र सन्देहाभावे अस्य परिभाषाशास्त्रस्य प्रवृत्तिर्न भविष्यति। पुनश्च विशिष्टा वा [1]षष्ठीस्थाने योगा इति वचनेन यत्र स्थान योगा षष्ठी तत्र किञ्चिल्लिङ्गमासञ्जनीयमित्येवं समाधाय पुनः शङ्कितं यद्यप्येवं तर्हि [2]शास इदङ्हलोः [3]शाहौ इत्यत्र शासिग्रहणं कर्तव्यं भविष्यति। यतो हि "शास [4]इदङ्हलोरि"ति सूत्रे शासेः अवयवषष्ठ्यां किञ्चिदपि लिङ्गं नास्ति, शाहौ, इत्यत्र त्वनुवृत्तं शास इति पदं स्थानषष्ठ्यर्थकं कथं स्यात्, किञ्चिल्लिङ्गाभावात्। अतः स्थाने योगार्थं शासिग्रहणं कर्तव्यं लिङ्गमप्यसञ्जनीयं स्यात्। अस्याक्षेपस्य बाधनाय उक्तं भगवता नैव शासि ग्रहणं कर्तव्यं पूर्वसूत्रेऽवयवषष्ठ्यर्थं यत् शास इति पदं वर्तते तदेव "शाहौ" इत्यत्रानुवृत्तं सत् स्थानपदार्थनिरूपितसम्बन्धार्थकषष्ठीघटितं भविष्यति, यतो हि अधिकारः त्रिविधो भवति, कश्चिदधिकारः एकदेशस्थः सन् सर्वशास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्मभिज्वलयति।

अत्र प्रदीपकारः [5]व्याचष्टे—कश्चिदित्यनेन परिभाषारूप इत्यर्थः कर्तव्यः, यतो हि—अधिकारसूत्रं यथा विध्यर्थसंस्कारकं भवति, तथैव परिभाषाशास्त्रमपि विधिशास्त्रोपकारकं भवतीति कृत्वा परिभाषाशास्त्रमपि पारार्थ्यसादृश्यादधिकारशास्त्रं वक्तु शक्यत। तत्र एकदेशस्थ इति कथनेन परिभाषाशास्त्रस्य स्वदेशीयत्वव्यवहार-यथोद्देशपक्षे इव कार्यकालपक्षेऽपि। तदेवोक्तमुद्द्योतकृता कार्यकालेऽपि स्वविषये सर्वशास्त्रैकवाक्यत्वाद् एवमुक्तिः, पठितदेशस्थेनैव तत्र तत्र स्वविधेयबुद्धिजननात्। यथा—दीपः प्रभाद्वारा सर्वगृहं प्रकाशयति तथैव एतच्छास्त्रं स्वविधेयभेदबुद्धिजननद्वारा सकलशास्त्रोपकारकं न तु कार्यकालपक्षः इत्येतावता अचेतनस्य शास्त्रस्य स्वदेशं विहाय तत्तद्विधिप्रदेशे गमनं संभवति। अत्र प्रभाद्वारा इति कथनेन उद्द्योतकारः परिभाषाशास्त्रस्य पदैकवाक्यतां विधिशास्त्रेण सह बोधयति। अस्य भाष्यस्य पक्षद्वयसाधारण्येन उभयोरपि पक्षयोः परिभाषाशास्त्रस्य पदैकवाक्यता एव। प्रभा यथा दिपावयवः तथैव विधेयभूतं पदं परिभाषाशास्त्रस्यावयवरूपं यथा—"तस्मिन्निति [6]निर्दिष्टे पूर्वस्य" इत्येतस्य

---

१, पा० सू० १।१।४९ २. पा० सू० ३।४।३४
३. पा० सू० ६।४।३५ ४. पा० सू० ३।४।३४
५. प्र० पृ० ३६९ ६. पा० सू० १।२।६६

प्रदेशे यावन्ति विधिसूत्राणि उपस्थितानि भविष्यन्ति तावन्ति निर्दिष्टे पूर्वस्य इति पदद्वयस्यावर्तनानि करिष्यन्ते। तत्तत्पदेन सह निरूप्यनिरूपक-भावापन्नविषयताप्रयोजकपदघटितत्वरूपा पदैकवाक्यता भविष्यति, [1]यथा "तस्मिन्निती"त्यस्य प्रदेशे उपस्थितम् [2]"इको यणची"ति सप्तम्यन्तपद-घटितं सूत्रं तत्र निर्दिष्टे इति "अचि" इत्यस्य विशेषणं "पूर्वस्य" इति च "इकः" इत्यस्य विशेषणम्, एवञ्च निर्दिष्टेऽचि पूर्वस्येकः स्थाने यण् भवती-त्यादिः सूत्रार्थः सम्पद्यते। तत्र निर्दिष्टपदप्रयोज्याप्रकारताख्या विषयता-पदप्रयोज्या विशेषताख्याविषयता द्वयोः विषयतयोः परस्परं निरूप्यनिरूपक-भावोऽस्त्येव, तादृशविषयताप्रयोजकं पदं "निर्दिष्टे" इति "अचि" इति तद्घटितत्वम् "इको [3]यणचि" इति सूत्रार्थबोधकवाक्यस्यास्त्येव।

अपरोऽधिकारः यथा रज्वा अयसा लौहशृङ्खलया वा बद्धं काष्ठमनु-कृष्यते तदवच्चकारेण किञ्चित्पदमनुकृष्यते, यथा "सहस्य[4] स" इति पद-द्वयं ग्रन्थाधिक्ये च चकारेणानुकृष्यते। "लः [5]कर्मणि चे"त्यत्र [6]चकारेण कर्तरि कृदित्येतदीयं "कर्तरि" इति पदमनुकृष्यते। तृतीय अधिकारः प्रतियोगं तस्यानिर्देशार्थः इति कृत्वा अग्रिमे योगे योग उपतिष्ठते, यथा—अङ्गस्य भस्य इत्यादयो योगा इमे ह्यग्रिमेषु सूत्रेष्वधिक्रियमाणाः सन्तोऽपि तत्रोच्चारिता न भवन्तीति अनिर्देशरूपं लाघवमेतत्पक्षे वर्तते। एवञ्च अस्मिन् पक्षे इदं भाष्यं योजनीयं "शास [7]इदङ्हलोरि"ति सूत्रीयं शास इति पदमवयवार्थकषष्ठीघटितं तदेवोत्तरसूत्रे [8]"शाहौ" इत्यत्रानुवृत्तं सत् स्थान-पदार्थानुयोगिकसम्बन्धार्थकषष्ठीघटितं भविष्यति। अस्य भाष्यस्याशयः उद्द्योतकृता एवं प्रकाशितः यत् शब्दाधिकारः आश्रीयते इत्यर्थः। अस्मिन् शब्दाधिकारे पूर्वसूत्रे शब्दो निरर्थकः स्यादुत्तरसूत्रेऽप्यनुवृत्तः सन् तदर्थकः एव भवेदिति तु नाग्रहः, अर्थाधिकारे एव तादृशाग्रहस्य स्वीकारादिति दिक्॥

**इति महाभाष्य-समीक्षणे चतुर्थाध्यायस्य प्रथमपादः।**

---

१. पा० सू० १।२।६६ २. पा० सू० ६।१।७७
३. पा० सू० ६।१।७७ ४. पा० सू० ६।१।७८
५. पा० सू० २।२।१४ ६. पा० सू० ३।४।६७
७. पा० सू० ३।४।३४ ८. पा० सू० ६।४।३५

# अथ द्वितीयः पादः

**म० भा०–इको[1] यणचि । दध्ययेत्र मध्वत्र । तालुस्थानस्य तालुस्थानः ओष्ठस्थानस्य ओष्ठस्थानो यथा स्यादिति ।**

(प्रदीपः)–[2]इको यणचि । दध्यत्रेति । अस्य सूत्रस्य लक्षणमप्युदाहरणं प्रयोगोऽपीत्युभयोपन्यासः । इको ह्रस्वादिभेदात् षट्पष्टिर्यणस्तु सप्तेति वैषम्यात्संख्यातानुदेशो न सिद्ध्यतीत्यर्थः ।

(उद्द्योतः)—[3] उदाहरणप्रश्ने इको यणचीत्यस्योल्लेखो व्यर्थो त आह—अस्य सूत्रस्येति । सामान्यतो ज्ञातस्य विशेषाकारेण यत्र प्रतिपत्तिस्तदुदाहरणमिति भावः । षट्षष्टिरिति । ऌवर्णस्य दीर्घाभावात् । दीर्घप्लुतॠकारस्य प्लुतऌकारस्य चानुनासिकस्यादर्शनादिदं चिन्त्यम् । अणुदित्सूत्रेण ग्रहणसामर्थ्येन यणंशे गुणभेदकत्वस्यैव न्याय्यत्वेन विधीयमानत्वेन च तेषामग्रहणात् । तत्प्रत्याख्यानेऽपि आरम्भप्रत्याख्यानयोः फलाभेदाय भेदकत्वस्यैवाश्रयणेन तेषामग्रहणम् । अत एव मतोर्मस्य नानुनासिको वकार इति ।

अत्र समीक्षा—[4]"स्थानेऽन्तरतमः" इति सूत्रमुद्दिश्य भाष्यकृताक्षेपः कृतः, अस्य किमुदाहरणमिति । तत्र समाधानरूपेणोच्यते--इको यणचि, दध्यत्र, मध्वत्रेति । अयमाशयः [5]"स्थानेऽन्तरतमः" इति सूत्रस्य सूत्रमप्युदाहरणं प्रयोगोऽपि, इति कृत्वा उभयमुपन्यस्तं, तत्र तालुस्थानजन्यस्य इकारस्य स्थाने तालुस्थानजन्यः इकारः एव अनया परिभाषया आन्तरतम्यात् भविष्यति ।

ननु इक्प्रत्याहारान्तर्गता वर्णाः चत्वारः "इ उ ऋ ऌ" इति यण् प्रत्याहारेऽपि चत्वारः "य् व् र् ल्" इति तत्र [6]"यथासंख्यमनुदेशः सामानामि"ति सूत्रेण यथासंख्यमन्वयेनैव इष्टं सिध्येद् अस्य सूत्रस्येदं कथमुदाहरणमिति संशये प्रदीपकृता उक्तम् इको ह्रस्वादिभेदात् षट्षष्टिः, इवर्णस्य इ व ऋ

---

१. म० भा० आ० सू० १।१।७६ २. प्र० पृ० २७२

३. उ० पृ० ३७२ ४. पा० सू० १।१।५०

५. म० भा० आ० सू० १।१।७६ ६. पा० सू० १।३।१०

वर्णानां प्रत्येकमष्टादशभेदाः, लृवर्णस्य द्वादश इति संकलनया षट्षष्टिरिति। यणस्तु [1]"गुणा भेदकाः" इति परिभाषाबलेन सप्तैवेति संख्यासाम्याभावात् यथासंख्यमन्वयो न भविष्यति।

अत्रोद्द्योतकारो विशेषं व्याचष्टे—[2]लृवर्णस्य दीर्घाभावात् षट्षष्टिः इकः अन्यथा तु द्वासप्ततिरिकः स्युः। वस्तुतस्तु दीर्घप्लुतऋकारस्य प्लुतलृकारस्य च अनुनासिकस्य च अदर्शनादिदं चिन्त्यम्।

पुनश्च रेफस्य सानुनासिकस्याभावात् यणः सप्तविधा उक्ताः, तत्रापि [3]अणुदित्सूत्रे अण्ग्रहणसामर्थ्येन यण्विषये गुणाः भेदकाः इत्यस्यैवौचित्येन विधीयमानत्वेन च तेषामग्रहणात्। तत्प्रत्याख्यानेऽप्यारभ्य प्रत्याख्यानयोः फलैक्याय गुणभेदकत्वपक्षस्यैव समाश्रयणेन सवर्णानामग्रहणम्। अत एव मतोर्मस्य नानुनासिको वकारः। अयमाशयः रेफोष्मणां विजातीयाः सवर्णाः न सन्तीति युक्त्या ञ्मोऽनुनासिक न ह्रौ, इति भाष्योक्त्या च रेफस्यानुनासिक्याभावः, यवलास्तु अनुनासिकाननुनासिकाभ्यां द्विधा इति कृत्वा षट्संख्याकाः, रेफस्तु अननुनासिकः एक इति कृत्वा एक एव। एवञ्च गुणाः अभेदकाः इति पक्षे यण्पदेन एतेषां सप्तानां ग्रहणं भविष्यतीति कैयटाशयः।

ततोद्द्योतकारः चिन्त्यत्वं प्रब्रुवन् विधीयमानविषये प्रत्ययः इति निषेधेन अणुदित्सूत्रेऽण्ग्रहणसामर्थ्येन यण्विषये गुणभेदकत्वस्यैव न्याय्यत्वेन च सवर्णग्रहणं प्रत्याचष्टे। अण्ग्रहणप्रत्याख्यानेऽपि सूत्रारम्भपक्षे यत्फलं तदेव प्रत्याख्यानपक्षेऽपि स्यादन्यथा प्रत्याख्यानमसंगतं स्यादिति रीत्या आरम्भप्रत्याख्यानपक्षयोः फलैक्यानुरोधेन गुणभेदकत्वपक्षमाश्रित्य सवर्णानामग्रहणमभ्युपैति। अत एव मतोर्मस्य नानुनासिको वकार इति वदन् तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च [4]मतोः इति सूत्रस्थं तदवान इति निर्देशं तत्र प्रमाणयति। अत्रेदमालोचनीयं यद् इग्यणोः समसंख्ययाकत्वाभावे एव [5]यथासंख्यसूत्राप्रवृत्तिः स चाभावः यणां संख्यत्वे चतुष्टे वा उभयाऽपि सिध्यति तत्रैव तात्पर्यं न तु सप्तत्वसंख्यायमाग्रहः। यथा कथञ्चित् गुणा अभेदकाः इति परिभाषया यणा सवर्णग्रहणं स्यादपि तर्हि ते सप्तैव भवि-

---

१. पा० शे० प० ११८
२. उ० पृ० ७२
३. पा० सू० १।१।६९
४. पा० सू० ४।४।१२५
५. पा० सू० १।३।१०

ष्यन्ति न तु षट्षष्टिसंख्याकेन इका साम्यं स्यात्। मूषको यदि स्थूलः स्यात्तर्हि लोष्टः एव भवेत् न तु मनुष्य इति लोकोक्तिमनुश्रित्य सा प्रदीपोक्तिः अतो न चिन्त्या। अग्रे चोद्द्योतकारोक्तिः विधीयमानविषये सवर्णग्रहणप्रसाधिका समुचिता एवेति दिक्।

**म० भा०—[1]रायिश्छन्दसः। दृष्टानुविधिश्छन्दसि भवति।**

(प्रदीपः)—[2]—छान्दस इति। क्यजन्तस्य रैशब्दस्य भाषायां नास्ति प्रयोगोऽन्यत्र तु विद्यत एवेति व्याचक्षते। क्यच् त्वैकारान्तान्नास्ति, गोसमानाक्षरनान्तात्, इति वचनात्। अन्ये तु भाषायां रैशब्दस्य प्रयोग एव नास्तीत्याहु।

(उद्द्योतः)—[3]क्यजन्तेति। राः -रैशब्दोऽपि यकारादिप्रत्यये इति भाष्यार्थ इति भावः। भाष्ये विसर्गरहित एव पाठः। एतेन रायिरित्ययुक्तम्, आत्वस्य दुर्लभत्वात्, रैशब्दात्विक् दुर्लभ इत्यपास्तम्। नास्तिप्रयोग इति। अनभिधानादिति भावः। क्यच्त्वित्यादिर्वचनादित्यन्तो ग्रन्थः, तस्यकीयमतत्वात्। अत एव 'नः क्ये' इति सूत्रे वाच्यतीति भाष्ये प्रयुक्तम्। अन्ये त्विति। अत्रारुचिबीजं तु रायमिच्छतीति भाष्यप्रयोगविरोधः। न हि विग्रहश्छन्द इति बाध्यम्। भाष्येऽपीत्यस्य वैयर्थ्याच्च।

अत्र समीक्षा—[4]"स्थानेऽन्तरतमः" इति सूत्रे क्षिण्योरेव एचः इति निर्णये एकारस्यैव व्यावृत्तिः कृता, नियमस्य तुल्यजातीयविषयत्वात्, न तु एकारस्य। अतः रायमिच्छति रैयति इत्यत्र यादौ प्रत्यये परतः अयादेशः प्राप्नोति। तं दोषं वारयति भाष्यकारः रायिश्छान्दस इत्यादिना। अत्र प्रदीपकारः क्यजन्तस्य रयिशब्दस्य ([5]"सुप आत्मनः क्यच्" इत्यनेन क्यचि सति निष्पन्नस्य) भाषायां प्रयोगो न भविष्यति छन्दसि एव प्रयोग इत्येव तु न भाष्याशयः, अपितु क्यज्भिन्नस्थले भाषायामपि प्रयोगो रयिशब्दस्य भवत्येव। एतेषां मते तु [6]"गोसमानाक्षरनान्ताद्" इति वचनात् ऐकारान्तात् क्यच् नैव भवति, यतो हि वार्तिके समानाक्षरपदेन एजन्ताः गृह्यन्ते। अन्येषां मतेन तु भाषायां रयिशब्दस्य प्रयोग एव न भवति। रायिः इति त्वेकमेव पदं प्रथमान्तम्, उच्चारणार्थक इकारः परस्ताद् योजितः, न तु इक् प्रत्ययान्तो निर्दिष्टः।

---

१. म० भा० पृ० ३७६
२. प्र० पृ० ३७६
३. उ० पृ० ३७६
४. पा० सू० १।१।५०
५. पा० सू० १।१।८
६. म० भा० पृ० ३७६

अत्रोद्द्योतकारः इत्थं ब्रूते यद् रायिरित्यत्र पदद्वयं "रा" इत्येकं पदं "यि" इति द्वितीयं पदम्, यकारादौ प्रत्यये परतः राः रयिशब्दः छान्दसः छन्दस्येव प्रयुज्यते, असतिबाधके सर्ववाक्यं सावधारणं भवतीति नियमात्, यथा—[1]अब्भक्षो वायुभक्ष इत्यत्र आप एव भक्षा यस्य, वायुरेव भक्षो यस्य स इत्यर्थः। तथैव प्रकृतेऽपि छान्दस इत्यस्य छान्दस एवार्थः न तु लौकिकोऽपि। "रायि"रित्यत्रोद्द्योतकृन्मते विसर्गो नास्ति, विसर्गरहित एव पाठ अभ्युपेयते। अत एव उक्तमुद्द्योतकृता एतेन रायिरित्ययुक्तात्वस्य केचित्परे दुर्लभत्वात्। रायिशब्दात्तु धातुत्वाभावाद् [2]"इकश्तिपौ धातुनिर्देशे" इतीक्प्रत्ययो न संभवतीति कस्यचित्कथनमपास्तम्। तथा च गोसमानाक्षरनान्तादिति वचनमप्येकदेशीयं, [3]"नः क्ये" इति सूत्रविरुद्धञ्चेति। अतः नान्तात्क्यच् भाषायामप्यवश्यं स्वीकार्यः तर्हि समानाक्षरादपि स्वीकार्य एव। पुनश्च अन्ये त्वित्यादिना यदुक्तं प्रदीपकृता तद्विषये रुचिबीजं प्रदर्शितं रायमिच्छतीति भाष्यप्रयोगविरोधः। यतो हि इदं विग्रहवाक्यं छन्दो भवितुं नार्हति। किन्तु यदि भाषायां प्रयोगो न स्यात्तर्हि "राः छान्दसः" इत्येव वदेत् "यि"इत्यस्य कथं सार्थक्यं स्यात्, यकारादौ प्रत्यये इति हि तस्यार्थः तेन ज्ञायते यद्यकारादौ प्रत्यये रैशब्दश्छान्दस अन्यत्र तु भाषायामपि प्रयोगार्हः स्यादित्युद्द्योतकाराशयः।

वस्तुतस्तु "रायिः" इति विसर्गान्त एव पाठः बहुषु भाष्यपुस्तकेषु लभ्यते। उच्चारणार्थकमिकारं मत्वा रयिशब्द एवात्र प्रयुक्तः अयादेशघटितः, अथवा छान्दसक्यच्प्रत्ययान्त अत्र भगवता अनुकरणविषयी कृतः। [4]तत्रानुकार्यानुकरणयोः प्रकृति तदनुकरणं भवतीति नियमेन अनुकार्यवृत्तिधातुत्वमत्र लौकिके वाक्ये आरोप्य इक्प्रत्ययः सम्पादितः, यथा [5]"शेश्छन्दसि बहुलमि"त्यत्र "त्वे" इति "ने" इति "युष्मे" इति "अस्मे" इति इत्यादीनि उदाहरणानि प्रदर्शितानि तानि तु वैदिकानां भ्यसादिस्थानिकशेप्रत्ययान्तानामेवानुकरणरूपतया ग्राह्याणि भविष्यन्ति। यतो हि [6]"सुपां सुलुक्" इत्यादिसूत्रेण जायमानः शयादेशः छन्दस्येव न तु लोके। रयिशब्दघटकस्य ऐकारस्य स्थाने आकारादेशस्तु [7]"रायो हलि" इति योगेन

१. भा० प० आ० पृ० ३९
२. का० वा० ५७५
३. पा० सू० १।४।१५
४. प० शे० प० ३६
५ पा० सू० ६।१।७०
६. पा० सू० ७।१।३९
७. पा० सू० ७।२।८५

साधितो भगवता। तत्र हि [१]"विभक्तौ" इत्यननुवर्त्य अङ्गाधिकारायित्वेन प्रत्ययपदमाश्रित्य [२]"यस्मिन् विधिरि"ति परिभाषया तदादिविधिं च स्वीकृत्य हलादौ प्रत्यये परतः रयिशब्दान्ताङ्गस्यावयवभूत-रयिशब्दैकारस्य आत्वं भवतीत्यर्थेनात्र आत्वसाधनं विहितम्। एवञ्च विसर्गान्तपाठस्य प्रत्याख्यानं "रा" "यि" इति पदद्वयं करणं सर्वमपि प्रदीपविरुद्धं नोचितं प्रतिभातीति दिक्।

**म० भा० —[३]अचेतनेष्वपि। तद्यथा—लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग्गच्छति नोर्ध्वमारोहति पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः। तथा—या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः। स आकाशादेशे निवाते नैव तिर्यग्गच्छति नार्वागवरोहति, अब्विकारोऽप एव गच्छत्यान्तर्यतः। तथा ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितो नैव तिर्यग्गच्छति नार्वागवरोहति। ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः।**

अत्र समीक्षा—अयमाशयः यो यस्य परिणामः स स्वपरिणामिन्येव प्राप्नोत्यान्तरतम्यात्, तत्रैव त्रयो दृष्टान्ताः भगवता प्रदर्शिताः। पृथिवीपरिणामः पृथिवीमेव प्राप्नोत्यान्तरतम्यात्, अब्विकारो अप एव प्राप्नोत्यान्तरतम्यात्, ज्योतिषपरिणामः ज्योतिरेव गच्छत्यान्तरतम्यात्। इतः पूर्वं [४]"स्थानेऽन्तरतमः" इति सूत्रे अन्तरतमग्रहणं सूत्रं च प्रत्याचक्षाणेन भगवता स्वभावसिद्धत्वादेव लोके यः यस्य सदृशतमो भवति स एव तत्स्थाने नियोज्यते, यथा—समाजेषु समासेषु समवायेषु चास्यतामित्युक्ते सति येषां किञ्चिदर्थकृतं सादृश्यं यैः सह वर्तते तैरेव सह आसते, यथा यावो दिवसं चरितवत्यः यो यस्याः प्रसवो भवति तेन सह शेरते इति चेतनविषयकं दृष्टान्तं प्रदर्श्य अचेतनविषयेऽपीदानीं दृष्टान्ताः [५]योज्यन्ते अचेतनेष्वपीत्यादिना।

---

१. पा० सू० १।४।१०४ २. प० शे० प० ३३
३. म० भा० पृ० ३८० ४. पा० सू० १।१।५०
५. म० भा० पृ० ३८०

अत्र प्रदीपकारः न्यायस्य व्याप्तिप्रतिपादनपरमेतदुक्तं भगवता अचेतनेष्वपीति। न हि[1] चेतनविषयकमेव सादृश्यप्रयोज्यं वर्गीभवनमपि त्वचेतनविषयकमपि। यतो हि न्यायः व्याप्तिप्रतिपादनपरो भवति, तस्य सामान्याविषयकत्वमेव सति संभवे औचित्यमावहति, प्रकृते न्यायः सादृश्यप्रयोज्यवर्गीभवनरूपः, स च यथा चेतने तथा अचेतनेऽपि। चेतनाचेतनोभयविधय एव सर्वोऽपि जागतिकः पदार्थ इति रीत्या प्रकृतन्यायस्य सर्वविषयकत्वेन व्यापकं स्वरूपमागतमेव। न्यायश्चायं स्वभावसिद्धः न हि ज्ञापकसाध्यः अब्विकार इत्यादिभाष्यग्रन्थं व्याचक्षाणः प्रदीपकारः पुनर्ब्रवीति अन्तरिक्षे सूक्ष्मः समुद्रोऽस्ति तत्परिणामभूता एव सर्वा आपः, काष्ठचाधिष्ठानामपामग्निसंयोगधूमात्मकः परिणामो भवति, स च धूमः जलपरिणामभूत अन्तरिक्षस्थं सूक्ष्मसामुद्रजलमेव गच्छति। सूर्यस्य विकारभूतं ज्योतिः सूर्यमेव गच्छति।

अत्रोद्द्योतकार एवं व्याचष्टे अन्तरिक्षे[2] भवाः आन्तरिक्षाः सूक्ष्माः आपः, तत्पूरितः समुद्र अन्तरिक्षदेशे वर्तते त एव ग्रीष्मऋतौ रात्रौ निरावृत्ते प्रदेशे शयानस्य प्राणिनः शैत्यस्योपलब्धिर्भवति। तत्रैव च सूर्यकिरणसम्पर्केण मेघरूपतया वायुसंयोगाद् वृष्टिर्भवति, अत एवोक्तं कविवरेण कालिदासेन मेघदूते —

"[3]धूमज्ज्योतिः सलिलमरुतां सन्निपातः क्व मेघः" इति।

तासामन्तरीक्षिणामपां परिणामः धूमः न साक्षादपि तु परम्परया। सूर्यविकार इति प्रदीपग्रन्थीयप्रतीकमादाय व्याचष्टे उद्द्योतकृद्—अत एव दावाग्नेर्मध्याह्नादौ सूर्यकिरणसम्पर्काद् अतिशयितं क्रौर्यमुपलभ्यते। एवञ्च यथा लोके विच्छिन्नसाहचर्याणाम् चेतनानामपि सादृश्याद्वर्गीभवनं तथा शास्त्रेऽपि, स्थान्यादेशानां सादृश्यादेव वर्गीभावः संभवतीति कृत्वा प्रकृतसूत्रं नावश्यकमिति भगवतो भाष्यकारस्याभिप्रायः।

**म० भा०—[4]आदेशो रपर इति चेद्रीरिविधिषु रपरत्वस्य प्रतिषेधो वक्तव्यः। के पुनारीरिविधयः ?। अकङ्लोपा नङनङ्रीङ्रिङादेशाः। अकङ्—सौधातकिः। अकङ्। लोप—पैतृष्वसेयः।**

---

१. प्र० पृ० ३८०
२. उ० पृ० ३८०
३. पू० मे० श्लो० ५
४. का० वा० ३७७

**लोपः। आनङ्-होतापोतारौ। आनङ्। अनङ्-कर्ता हर्ता। अनङ्। रीङ्-मात्रीयति पित्रीयति। रीङ्। रिङ्-क्रियते ह्रियते। रिङ्।**

(प्रदीपः)—[1]रीरिविधिष्विति। बहुवचननिर्देशाद् रीरिशब्दावुपलक्षणमिति पृच्छति—के पुनरिति। पैतृष्वसेय इति। लोपवचनं तु सर्वादेशार्थं स्यात्। होतापोताराविति। रेफस्य संयोगान्तलोपे कृते तस्यासिद्धत्वान्नलोपो न स्यात्।

(उद्द्योतः)—[2]ननु वार्तिकोक्तरीरिविध्योर्ज्ञातत्वात्तस्य चोपलक्षणत्वे प्रमाणाभावात् के पुनरिति प्रश्नानुपपत्तिरत आह—बहुवचनेति। सौधातकौ "[3]सुधातुरकञ्चे"ति इन्। पैतृष्वसेये ढकिलोपस्तत एव ढक् च। ननु लोपस्य रपरत्वे तं विनापि यणादेशेन तत्साध्यरूपसिद्धिरत आह—लोपेति। रपरत्वग्विधानमुखेन सर्वादेशत्वमेव लोपस्याभिधित्सितमिति भावः। यदि सर्वादेशो लोपस्तदा ङःस्थाने नेति कथं रपरत्व मितीदं चिन्त्यम्। तस्माल्लोपविधिवैयर्थ्यापादनमेव दोष इति तत्त्वम्। आनङनङौ "आनङ्[4]ऋतो द्वन्द्वे" "ऋदुशने"ति[5]—विहितौ। रेफस्येति। झल्ग्रहणापकर्षाद्यणः प्रतिषेधारम्भाच्च चिन्त्यमिदम्। तस्माद्रेफश्रवणमेव दोषोऽत्रेति बोध्यम्।

अत्र समीक्षा—"उरण् [6]रपरः" इति सूत्रेऽण् ग्रहणं किमर्थमिति शङ्कायाम् "उ रपरः" इति न्यासे क इदानीं रपरः स्यादिति पुनः शङ्कितं तदुपरि समाहितं स्थाने भवन्नादेश एव रपरो भविष्यतीति समाहितं, तदुपयुक्तम् आदेशो रपर इत्युच्यते तर्हि रीरिविधिषु रपरत्वस्य प्रतिषेधो वक्तव्यः, तत्र रीरिविधिपदेन "अकङ्लोपा नङनङ्रीङ्रिङादेशाः[7]" गृहीताक्रमेण उदाहृताश्च।

अत्र प्रदीपकार एतद्भाष्यमित्थं व्याचष्टे—रीरिविधिष्विति बहुवचननिर्देशमहिम्ना रीरिशब्दौ उपलक्षणमित्यभिप्रायं मनसि निधाय भगवान् भाष्यकारः स्वयं पृच्छति—के पुनारीरिविधय इति। स्वयञ्च समादधाति "अकङ्लोपेत्यादिना।" यद्यत्र रीरिशब्दयोरुपलक्षणत्वं न स्वीक्रियेत तत्तदा इदं समाधानं कथं संगतं स्यात्। किञ्च रीरिविधिष्वित्यत्र द्वये एव विधी वर्तेते,

---

१. प्र० पृ० ३८८
२. उ० पृ० ३८८
३. पा० सू० ४।१।९७
४. पा० सू० ६।३।२५
५. पा० सू० ७।१।९४
६. म० भा० आ० सू० १।१।७।७
७. म० भा० पृ० ३८८

तत्र बहुवचनान्तनिर्देशः अनुचित अतः तन्निर्देशसामर्थ्यादुपलक्षणत्वं तत्रावश्यकम्।

अत एवोद्द्योतकृताऽपि "बहुवचने"ति प्रदीपग्रन्थीयप्रतीकं धृत्वा अवतरणिका उक्ता। ननु वार्तिकोक्त--रीरिविध्योर्ज्ञातत्वात्तस्य चोपलक्षणत्वे प्रमाणाभावात् के पुनरिति प्रश्नानुपपत्तिरत आह--'बहुवचने'ति। उपलक्षणत्वञ्च--"अविद्यमानत्वे[1] सति विधेयानन्वयित्वे सति इतरव्यावर्तकत्वरूपमत्र न ग्राह्यम्, किन्तु स्वघटितत्वसम्बन्धेन रीरिशब्दौ, अकङ्लोपादिसमुदायबोधकं लक्षणयावृत्त्या यथा--अं अः इत्यचः परोऽनुस्वारविसर्गौ इत्यत्राकारः अज्मात्रोपलक्षणम्, एवञ्च स्वबोधकत्वे सति स्वेतरबोधकत्वरूपमुपलक्षणत्वमत्र फलति। तत्र अकङ्विषये उदाहरणं दत्तम् – सौधातकिः। अत्र सुधातुरपत्यं पुमानिति विग्रहे "[2]सुधातुरकङ् चे"ति सूत्रेण इञ्प्रत्ययः, ऋकारस्य स्थाने उकङादेशः, लोपस्योदाहरणं पैतृष्वसेयः, अत्र "ढकि[3] लोप" इति ढक्परकस्य पितृस्वसृशब्दघटकस्य लृवर्णस्य लोपविधानसामर्थ्यात् ढक्प्रत्ययो लोपश्च। अत्र तु सति रपरत्वे लोपवचनं सर्वादेशार्थं स्यादिति प्रदीपकारः।

तत्रोद्द्योतकार इत्थं व्याचष्टे यल्लोपस्य रपरत्वे तं विनापि यणादेशेन तत्साध्यरूपसिद्धिः, अत आह--[4]लोकेति। रपरत्वाभिधानद्वारा सर्वादेशत्वमेव लोपस्य चिकीर्षितमिति प्रदीपाशयः। यदि सर्वादेशो लोपः स्यात्तदा उः स्थाने न इति कथं रपरत्वमितीदं चिन्त्यम्, तस्माल्लोपविधिवैयर्थ्यापादनमेव दोषः। अस्योद्द्योतग्रन्थस्यायमाशयः यल्लोपं विनापि यणादेशेन रपरत्वसाध्यं रूपं सिध्यत एव लोपवचनं व्यर्थं स्यादिति कृत्वा लोपवचनं सर्वादेशार्थं भविष्यति तत्रेदं शङ्कितुं युक्तं यद् "उरण् [5]रपरः" इत्यत्राण् ग्रहणाभावपक्षे यणादेशस्य रपरत्वे रेफं द्वयम्, लोपस्य रपरत्वे त्वेक एव रेफ इति वैषम्यसत्वे कथं यणादेशेन लोपसाध्यं रूपं सिध्येत् इति चेदुच्यते [6]"रोरि" इति सूत्रेण एकस्य रेफस्य लोपेन यणादेशपक्षेऽप्येक एव रेफः स्यात्।

न च [7]"रोरी"ति लोप अन्तरङ्गः तं प्रति परनिमित्तकः यणादेशः

---

१. ल० सि० मं०
२. पा० सू० ४।१।९७
३. पा० सू० ४।१।१३३
४. उ० पृ० ३८८
५. पा० सू० १।१।५१
६. पा० सू० ८।३।१४
७. पा० सू० ८।३।१४

बहिरङ्ग इति रीत्या तस्यासिद्धत्वे "रोरी"ति लोपाभावात्कथं वैषम्याभाव इति वाच्यम् ।

यथोद्देशकार्यकालेति पक्षद्वयेऽपि त्रिपाद्यामन्तरङ्गपरिभाषायाः अप्रवृत्तिं मत्वा उद्द्योतकृतस्तद्व्याख्यानात् । अग्रे च यदि सर्वादेशो लोपः स्यात्तदा ऋवर्णमात्रस्य स्थाने स न स्यात् किन्तु सर्वस्य स्थाने स्यादिति कृत्वा रपरत्वं न भविष्यति । यदि च न रपरत्वं तर्हि सर्वादेशत्वमपि कथम् ? वस्तुतस्तु लोप अभावरूपः पदार्थः तत्रालृव्यवहारविषयत्वाभावेन सत्यपि रपरत्वे नेकाल्त्वाभावेन सर्वादेशत्वस्यानुपपत्तिरिति उद्द्योतकारस्याभिप्रायः लक्षते ।

अत्रेदं विमृश्यते यत् ऋकारस्थाने जायमानो लोपः रपरः स्यात्तदा सर्वादेशः स्यात्, यतो हि [1]"ध्वसोरेद्धावभ्यासलोपश्च" इति सूत्रे एकं शकारं प्रश्लिष्य तस्य चेति संज्ञां विधाय लोपादेशः स्यात्, शित्वेन भाष्यकृता सर्वादेशत्वं स्वीकृतम्, तद्रीत्या एव रपरत्वसत्तायां लोपादेशस्य सर्वादेशत्वं प्रतिपादितं प्रदीपकृता । एवञ्चात्रत्यभाष्यस्य अयमेवाशयो यत् रपरत्वाभिधानद्वारेण लोपः सर्वादेशरूप एव भविष्यतीति प्रदीपाशयः स्वयमप्युद्द्योतकृता अभिहितः, तस्मात् भाष्याशयानुसारि-प्रदीपाशयः समुचित एव प्रतिभाति । अग्रे च "होतापोतारौ" इत्यत्र रेफस्य संयोगान्तलोपे कृते तस्यासिद्धत्वात् नलोपो न स्यादित्युक्तं प्रदीपकृता । तत्रानङादेशः होतृशब्दघटकस्य ऋकारस्य स्थाने [2]"आनङ् ऋतो द्वन्द्वे" इत्यनेन विहितः । अत्रोद्द्योतकारः रेफस्येति प्रतीकं धृत्वा प्रदीपग्रन्थमित्थं व्याचष्टे – झलग्रहणापकर्षणाद्यणः प्रतिषेधारम्भाच्च चिन्त्यमिदं-तस्मात् रेफश्रवणमेव दोषोऽत्रेति बोध्यम् ।

अत्रेदमालोच्यते यद् यदि रेफश्रवणमेवात्र दोषः स्यात्तदा भाष्यकृता अवश्यं स दोष उद्घाटितः स्यात् । [3]किञ्च न हि अचं विना व्यञ्जनात्परस्य एकस्यानेकस्य वा हलः श्रवणं प्रतिविशेषः स्यादिति रीत्या नकारात्परः रेफः ततः परश्च पकार इति रीत्या रेफश्रवणं सुस्पष्टं भवितुं नार्हति । अतश्च झल्ग्रहणापकर्षणस्याभावे भावे वा क्वचिद् अज्झल्लोऽपि लोपो भवति, यथा—गिरिवेश्मानमाचष्टे गिरिवेश्म इति गिरिवेश्मेति गिरिवेट् इत्यत्र यथा अज्झल्लोऽपि मकारस्य लोपः तथैवात्र अज्झल्लोऽपि रेफस्य लोपः सम्भाव्यते इत्याशयेन प्रदीपकारोक्तिः आलोचनीयेति दिक् ।

---

१. पा० सू० ६।४।११९ २. पा० सू० ६।३।२५

३. म० भा० १।२।२९

**म० भा०—[1]अर्थवता व्यपदेशिवद्भावः। न चैषोऽर्थवान्। तस्मान्नैवं शक्यम्। न चेदेवम्, उपसंख्यानं कर्तव्यम्। इह च रपरत्वस्य प्रतिषेधो वक्तव्यः—मातुः पितुरिति।**

(प्रदीपः)—[2]अर्थवतेति। यथैवेयायेत्यत्रैकाच्त्वम्। अर्थस्य हि त्यागोपादानाभ्यां वर्णरूपता धातुरूपता च व्यवस्थाप्यते। इह चेति। उपसंख्यानस्यातिव्याप्त्येत्यर्थः। मातुरिति। रपरत्वे कृते विभक्तिसकारस्य रुत्वम्, पूर्वस्य रोरीति लोपः। ढ्रलोप इति दीर्घत्वम्। तत्र मातुरिति प्राप्नोतीति भावः।

(उद्द्योतः)—[3]भाष्ये—अर्थवतेति। इदमसहायत्वोपलक्षणम्। अत एव कुरुते इत्यादावनर्थकेनापि सः। तत्र हि स टिसंज्ञोपयोगिसहायरहित एवेति दिक्। भाष्ये—इह चेति। एकादेशस्योपसङ्ख्यानमित्योपसङ्ख्यानिकरपरत्वप्रतिषेधश्च वक्तव्य इत्यर्थः। मातुरित्यादौ तदुपसङ्ख्यानातिव्याप्तेरिति भावः। मातुरितीति। उ रपर इति पूर्वोक्तभाष्यप्रयोगविरोधाद् "ऋत उदि"ति तपरत्वान्मातुरित्यादौ [4]न दीर्घः, इत्यपास्तं वेदितव्यम्।

अत्र समीक्षा—"उरण् [5]रपरः" इति सूत्रं व्याचक्षाणेन भाष्यकृता यदि पुनः ऋवर्णान्तस्य स्थाने रपरत्वमुच्येत तर्हि "खट्वर्ष्यैः" इत्यत्र रपरत्वं सिद्धं भविष्यति, किन्तु "कर्ता, हर्ता, किरति, गिरति" इत्यादौ ऋवर्णान्तत्वाभावात् दोष उक्तः, तत्र च व्यपदेशिवद्भावेन कृघटकस्य ऋकारस्य ऋवर्णान्तत्वं स्वीकृत्य दोषाभावः प्रतिपादितः। तदनु दोषस्य तादवस्थ्यं प्रदर्शतेऽर्थवता व्यपदेशिवद्भावः, न चैषोऽर्थवान् एतद्भाष्यं व्याचक्षाणः प्रदीपकार इत्थं ब्रवीति—अस्य न्यायस्योदाहरणम् "इयाय" इत्यत्र रण-धातोः[6] एकाच्त्वमनेन न्यायेन सिध्यति। अतः अर्थस्य त्यागोपादानाभ्यामिकारस्य धातुरूपत्वं व्यवस्थाप्यतेऽर्थस्य त्यागे वर्णरूपत्वमुपादाने धातुरूपत्वम्।

पुनश्च इह चेद् भाष्यप्रतीकमुपादाय उपसंख्यानस्यातिव्याप्त्या इत्यर्थः, कृतज्ञः, तत्रोद्द्योतकारः व्याख्याति—[7]इमं भाष्येऽर्थवत्पदमसहायत्वोपलक्षणम्

---

१. म० भा० ३९०
२. प्र० पृ० ३९०-९१
३. उ० पृ० ३९१
४. पा० सू० ६।१।१११
५. पा० सू० १।१।५१
६. भा० प्र० पृ० ३९१
७. उ० पृ० ३९१

( असहायपरम् ) अत एव "कुरुते" इत्यत्रानर्थकोऽपि तकारोत्तर अकारः व्यपदेशिवद्भावं लभते, यतो हि सः टिसंज्ञोपयोगी सहायशून्यः एव वर्तते, इदमसहायत्वञ्च मुख्यधर्मवद्घटकत्वमुख्यधर्मवद्घटितत्वमुख्यधर्मवदसमभिव्याहृतत्व एतत् धर्मीत्रतयविशिष्टत्वरूपम् । मुख्यधर्मश्चारोप्यमाणो धर्मः यथा—"कुरुते" इत्यत्राकारस्य टिसंज्ञाकरणे तत्रैवाच्समुदायत्वमन्तत्वमादित्वञ्च एतद्धर्मत्रयमारोप्य टित्वं विधीयते, अतः वास्त्रयं व्यपदेशिवद्भावः प्रवर्तनीयो भवति । तत्र प्रथमस्तावदारोप्यमाणो धर्मः अच्समुदायत्वरूपः तद्वान् तशब्दो नास्ति, एवञ्च अ इ उ इत्यादिः यः कोऽपि समुदायः तद्वान् भवेत् तद्घटकत्वं तद्घटितत्वं तदसमभिव्याहृतत्वञ्चेति धर्मत्रयमत्राकारेऽस्त्येव । अनयैव रीत्या अन्तत्वादित्वयोरपि स्थितिर्मन्तव्याः, यदि चार्थविषयकबोधजनकतावान् अर्थवान् एव गृह्येत तथाऽत्र टिसंज्ञा न [१]स्यात्, टित आत्मनेपदानामिति एत्वमपि न स्यात् ।

पुनश्च मातुरिति भाष्यप्रतीकमादाय प्रदीपकारः व्याख्याति रपरत्वे कृते विभक्तिसकारस्य रुत्वं पूर्वं [२]"रोरी"ति लोपः [३]"ढ्रलोपे" इति दीर्घः तस्मिश्च सति "मातूरी" ति प्राप्नोति ।

अत्रोद्द्योतकार इत्थं ब्रवीति यद् उ रपर इति पूर्वोक्तिभाष्यविरोधाद् [४]"ऋत उदि"ति तपरत्वात् मातूरित्यादौ न दीर्घः इत्यपास्तं वेदितव्यम् । अत्रापास्तत्वे उ रपर इति भाष्यप्रयोगविरोधो हेतुः । यदि तु "उ रपरः" इत्यस्यार्षत्वं स्वीक्रियेत तदा उदित-तपरकरणात् दीर्घाभावः समीचीन एव प्रतिभाति किन्तु प्रदीपादुद्द्योताच्च विरुद्धं तन्मतं भविष्यति अतः तपरत्वं तत्र मुखसुखार्थमेव मन्तव्यम् । अत्रेदमपि विचारणीयं यत्परिभाषेन्दुशेखरे प्रथमतन्त्रे श्रीनागोजीभट्टेन एषा परिभाषा उक्ता [५]व्यपदेशिवदेकस्मिन्निति तस्याः मूलभूतमिदमेव भाष्यम् । "अर्थवता" इत्यस्यैव व्याख्यानमेकस्मिन्निति । तत्र एकत्वञ्च असहायत्वरूपमेव व्याख्यातम्,

"[६]एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।
न सहाये समानेऽल्पे संख्यायाञ्च प्रयुज्यते ॥"

इति कोशोक्त्या एकशब्दस्यासहायरूपोऽर्थो निर्दिष्टोऽस्ति । तत्र विशिष्टोपदेशो मुख्यो व्यवहारः अस्ति यस्य व्यपदेशी तस्मिन्निव इति

---

१. पा० सू० ३।४।६९
२. पा० सू० ८।३।१४
३. पा० सू० ६।३।१११
४. पा० सू० ६।१।१११
५. परि० शे० प० ३०
६. अ० को०

व्यपदेशिवदेकस्मिन्नित्युपमेयस्य सप्तम्यन्तत्वादुपमानपदस्य व्यपदेशीपदस्यापि सप्तम्यन्तता उचिता, [1]"तत्र तस्येव" इति सूत्रेण सप्तम्यन्तादिवार्थे वतिः मथुरायामिवेति मथुरावत् स्रुघ्ने प्राकार इतिवत्। शेखरग्रन्थे "तेन तुल्यं क्रिया [2]चेद्वतिः" इति वतिप्रत्ययो दर्शितः, चार्थिकार्थकथनदृष्ट्या न तु वास्तविकदृष्ट्या। अयं न्यायः लोकविज्ञानात्सिद्धः, लोके यथा देवदत्तस्य एकः पुत्रः स एव ज्येष्ठः स एव कनिष्ठः स एव च मध्यम इति व्यपदेशत्रयं लभते, मुख्यव्यपदेशी तु सः यश्च पुत्रत्रितयवान्। एवमेव अनेत्यानाजिगमिस्वाह—इदं मे प्रथममागमनम्। अथ च असूतायामशोष्यमाणायामुच्यते प्रथमगर्भेण हृता इतीदं व्यवहारद्वयमपि लोके व्यपदेशिवद्भावेन प्रसिध्यति।

**म० भा०—[3]लुप्यतेऽत्र प्रत्ययो "रात्स्ये" ति।**

(प्रदीपः)—[4]लुप्यत इति। सकारसन्निधिकाले कारेण नैव लब्धा प्रत्ययसंज्ञा, समुदायसन्निवेशिनीयत्वात्तस्या इति कुलस्तदादेशस्तां लप्स्यते। उत्वे च कृते वसिष्ठः सकार एव प्रत्ययसंज्ञः, स च लुप्त इति भावः।

(उद्द्योतः)—[5]उत्वे च कृत इति। न चैकादेशस्य परादिवत्वे नोर्सित्यस्य प्रत्ययतया लोपे [6]"एकदेशविकृत"न्यायेनोरित्यस्य प्रत्ययतया विसर्गस्य प्रत्ययावयवत्वमस्त्येवेति वाच्यम्, त्रिपाद्या असिद्धत्वेन सत्रान्तादिवद्भावा प्रवृत्तेः। स्थानिवत्वेन तु न निर्वाहः। उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाभावात्। सर्वे [7]सर्वपदादेशा इत्यनेन तु "मातृ अ सि"त्यस्य स्थानित्वेऽपि असित्यस्य स्थानित्वाभावात्। भाष्ये "लुप्यतेऽत्र प्रत्ययविसर्जनीय" इति पाठे योऽत्र प्रत्ययस्थानिकत्वेन तवाभिमतो विसर्जनीयः, लुप्यते न दृश्यते, स्थानिनः प्रत्ययस्यैव लोपादित्यर्थः।

अत्र समीक्षा—[8]"उरण् रपरः" इति सूत्रव्याख्याने मातुः करोतीत्यत्र अप्रत्ययविसर्जनीय इति कृत्वा [9]"इदुदुपधस्ये" ति षत्वं प्राप्नोतीत्याशङ्क्य उक्तं भगवता प्रत्ययविसर्जनीयश्चायं प्रत्ययावयवत्वादकारोऽपि प्रत्यय अतस्तदादेशोऽपि प्रत्यय इति भावः तदुपरि पुनरुच्यते लुप्यतेऽत्र प्रत्ययो

---

१. पा० सू० ५।१।११३
२. पा० सू० ५।१।११५
३. म० भा० आ० सू० १।१।७७
४. प्र० पृ० ३९२
५. उ० पृ० ३९२
६. का० वा० ४००
७. म० भा० आ० सू० १।१।५।८
८. पा० सू० १।१।५१
९. पा० सू० ८।३।४१

रातसस्येति । अत्र प्रदीपकारः सकारसन्निधानकाले मातुर्ष इत्यत्र सकार-संनिधानकालेऽकारेण प्रत्ययसंज्ञा नैव लब्धुं शक्या, सा हि समुदाये पर्याप्तास्ति अतः तदादेशः कथं तां संज्ञा लभेत, उकारोदेशे च कृते वसिष्ठः सकार एव प्रत्ययसंज्ञकः स च प्रकृते लुप्तः इति भाष्याशयः ।

अत्रोद्योतकारः प्रदीपग्रन्थे दोषमुद्भाव्य परिहरति—[1]न चैकेति । अयमाशयः [2]"अन्तादिवच्चे"त्यस्य एकादेशशास्त्रप्रवृत्तेः पूर्वमन्तघटितपूर्वे आदिघटितपरे व प्रत्ययत्वा धातुत्वप्रभृतयोः ये धर्माः दृष्टाः ते कृतैकादेऽपि आरोप्यन्ते, इत्यर्थेन प्रकृते एकादेशस्य परादिवद्भावेन उस् इत्यस्य प्रत्ययतया रूपत्वस्यासिद्धत्वात् [3]"रातसस्ये" ति सलोपे [4]एकदेशविकृतन्यायेन उर् इत्यस्यापि प्रत्ययत्वेन विसर्गस्य प्रत्ययावयवत्वमस्त्येव एवञ्च नात्र षत्वापत्तिरिति तु न शङ्क्यं सपादसप्ताध्यायीं प्रति त्रिपाद्याः असिद्धत्वेन "[5]इदुदुपधस्ये"ति षत्वविषये ( त्रिपादिस्थे ) [6]"अन्तादिवच्चे"ति सापादिकसूत्रस्याप्रवर्तनात् । स्थानिवद्भावेन तु निर्वाहः कर्तुं न शक्यते, गृहीतस्य स्थानिनो कारस्य प्रत्ययत्वाभावात्—

**सर्वे सर्वपदादेशाः[7] दाक्षीपुत्रस्य पाणिनेः ।**
**एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥**

इति न्यायेन 'मातृ अस्' इत्यस्य स्थानित्वेऽपि "अस्" इत्येतावन्मात्रस्य स्थानित्वाभावात्, स्थानिवद्भावेनापि प्रत्ययत्वं तदवयवत्वं वा न सुलभम् एवञ्च उर्ष इत्यस्य प्रत्ययत्व दुर्लभमेव । यदि तु पुनः शङ्क्यते यद्भाष्ये वर्तमानपाठस्यानया रीत्या संगतत्वेऽपि पाठान्तरे कथं सङ्गते, तत्र प्रत्ययपदेन प्रत्ययस्य तदवयवस्य वा बोध्यत्वेऽपि श्रूयमाणविसर्जनीयस्य उक्तप्रकारेण प्रत्ययत्वं तदवयवत्वञ्च नैव संभवतीति कृत्वा लोपो न प्राप्नोति, लोपे कृतेऽपि तस्य विसर्जनीयत्वाभाव एव, इत्यत उक्तं लुप्यतेऽत्र इति । प्रत्ययस्यैवेति च । एवञ्च प्रकृतपाठस्य पाठान्तरेण सह एकवाक्यता सुष्ठु सम्पद्यत इति दिक् ।

**म० भा०—[8]यदि पुनरयं योगशेषो विज्ञायते ।**

---

१. उ० पृ० ३९२
२. पा० सू० ६।१।८५
३. पा० सू० ८।२।२४
४. का० वा० ४००
५. पा० सू० ८।३।४१
६. पा० सू० ६।२।८५
७. म० भा० पृ० २४२
८. म० भा० आ० सू० १।१।७।८

(प्रदीपः)[१]—यदि पुनरिति। षष्ठी[२] स्थाने योगेत्यनेनास्यैकवाक्यता। अत्र तु प्रकरणे करणं ङिच्चेत्यादिः सम्बन्धार्थम्। तत्रायमर्थो भवति—शास्त्रे या षष्ठी सोऽन्त्येऽलि सा च स्थाने योगैवेति, न तु स्थाने विज्ञातस्य पश्चादनुसंहारः, प्रतिपत्तिगौरवप्रसङ्गादिति भावः।

(उद्द्योतः)—[३]संबन्धार्थमिति। अन्त्यस्येत्यनेनेति भावः। शास्त्रे येति। या षष्ठी सा स्थाने योगैव सा चान्त्येऽलीति तु नार्थः। स्थाने योगेति पदा इत्यापत्तेः, इदमेव प्रतिपत्तिगौरवम्। तस्माच्छास्त्रे या षष्ठी सा स्थानेयोगैवान्त्येऽल्येव चेति वाक्यार्थ इति भावः। सा चेति। सा षष्ठीस्थाने योगैव चेत्यन्वयः।

अत्र समीक्षा—[४]"अलोऽन्त्यस्ये" ति सूत्रं [५]षष्ठी स्थाने योगा, इत्यनेन एकवाक्यतां गृहीत्वा [६]"सार्वधातुकार्धधातुकयोरि"त्यादिविधिसूत्राणां शेषः (अङ्गं) स्यात्। अत्र प्रकरणे किमर्थं कृतमिति जिज्ञासायामुक्तं प्रदीपकृता [७]"ङिच्चे"त्यादयः सम्बन्धार्थम्, तच्च अन्त्यस्येत्यनेन सह ततश्चेदमपि प्रयोजनं सिद्धं भवति, शास्त्रे या षष्ठी सा अन्त्यत्वविशिष्टेऽलि, सा च स्थानेयोगा एव, एवञ्च स्थाने विज्ञातस्य पश्चादनुसंहारः न कार्यः ज्ञानगौरवापत्तेः। अत्रोद्द्योतकारः व्याचष्टे—शास्त्रे या षष्ठी सा स्थाने योगा एव, सा च अन्त्येऽलि इत्यर्थस्तु न कार्यः, स्थाने योगा इत्यस्यावर्तनप्रसङ्गाद् एतदेव ज्ञानप्रयोज्यं गौरवं भविष्यति। अतो व्याकरणशास्त्रे या षष्ठी सा स्थानेयोगैव अन्त्यत्वविशिष्टेऽल्येव चेत्येव सूत्रार्थः सम्माननीयः।

**म० भा०—[८]"तातङि ङित्करणस्य सावकाशत्वाद् विप्रतिषेधात्सर्वादेशः। तातङि ङित्करणं सावकाशम्। कोऽवकाशः? गुणवृद्धिप्रतिषेधार्थोऽनुबन्धः। तातङि ङित्करणस्य सावकाशत्वाद् विप्रतिषेधात्सर्वादेशो भविष्यति।**

(प्रदीपः)—[९]ङिच्च। विप्रतिषेधादिति। नन्वयमपवादः, [१०]अनेकाल्शिदित्युत्सर्गः। उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः। नैतदस्ति। ङित्वस्या-

१. पृ० प्र० ४००
२. पा० सू० १।१।४९
३. उ० पृ० ४००
४. पा० सू० १।१।५२
५. पा० सू० १।१।४९
६. पा० सू० ७।३।८४
७. पा० सू० १।१।५३
८. म० भा० आ० सू० १।१।७१९
९. प्र० पृ० ४०१
१०. पा० सू० १।१।५५

न्यार्थत्वसंभवे सति दौर्बल्यात् सन्दिग्धोपस्थानोऽयं योग इत्यपवादत्वमेवात्र विषयेऽस्य नास्ति।

[1](उद्द्योतः)—विप्रतिषेधादिति। परिभाषात्वविरोधादित्यर्थः। यदि सावकाशा ङित्वेऽपि प्रवृत्तिः स्यात्तदानुवादत्वासंभवेन परिभाषाप्रकरणविरोध इति भावः। यथा चैतत्तथानुपदमेव स्पष्टी भविष्यति।

[2]अत्र समीक्षा—"ङिच्चे"ति सूत्रे भगवता भाष्यकृता शङ्कितं यत् [3]"तुह्योस्तातङि"ति सूत्रविहितो तातङादेश अन्त्यस्य स्थाने कस्मान्न भवति, "ङिच्चे"ति सूत्रेण प्राप्नोति, तदुपरि समाहितं भगवता तातङि ङित्करणं सावकाशमित्यादि। अयमाशयः गुणवृद्धयोः [4]"क्ङिति चे" ति सूत्रेण प्रतिषेधं कुरुवत तातङो ङित्वं श्रृणुतादित्यादौ चरितार्थम्, तातङ्विषये तु [5]"विप्रतिषेधे परं कार्यमि" ति सूत्रबलात्सर्वादेशो भविष्यतीति। अत्र प्रदीपकारः किञ्चिदधिकं ब्रूते तथा हि [6]अनेकाल्शित्वसर्वस्ये-[7]त्युत्सर्गः, ङिच्चेति त्वपवाद उपसर्गापवादयोः विप्रतिषेधविचारो न संघटते तुल्यबलवताभावात्। अन्यत्रान्यत्र लब्धावकाशयोरेव तुल्यबलत्वं भवति, तयोरेव च विरोधे सति विप्रतिषेधविचारः क्रियते, इति चेदुच्यते नित्यस्य गुणवृद्धिप्रतिषेधसम्प्रसारणाद्यर्थत्वसंभवे दौर्बल्यमागतमपवादत्व-प्रयुक्तं प्राबल्यं बाधितमिति कृत्वा संदिग्धाप्रवृत्तिरस्यापि भविष्यत्येव। अतः विप्रतिषेधविचारः समीचीन एवेति।

अत्रोद्द्योतकारः इत्थं व्याचष्टे—तथा हि यदि सावकाशङित्वविशिष्टे तातङ्यपि "[8]ङिच्चे"ति सूत्रस्य प्रवृत्तिः स्यात् तदाऽस्य [9]अलोऽन्त्यसूत्रानुवादत्व न संभवति तथा परिभाषाप्रकरणेऽस्य पाठः विरुद्धो भवेत्। "विप्रतिषेधे[10] परं कार्यमि"ति शास्त्रपरत्वे तु ङित्वस्य सावकाशत्वकथनं न सङ्गच्छते, यतो हि सूत्रस्य सावकाशत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजम्, "ङिच्चे"त्यस्य तु सर्वादेशस्याप्राप्तविषये क्वचिदपि चारितार्थ्यं नास्ति, तत्कर्तृकावश्यप्राप्तिरेव तस्य बाध्यत्वे बीजं भवति। अन्यच्च विप्रतिषेध-

१. उ० पृ० ४०१
२. पा० सू० १।१।५३
३. पा० सू० ७।१।३५
४. पा० सू० १।१।५
५. पा० सू० १।४।४२
६. म० भा० आ० सू० १।१।७।११
७. म० भा० आ० सू० १।१।७।९
८. पा० सू० १।१।५३
९. पा० सू० १।१।५२
१०. पा० सू० १।४।१२

शास्त्रपरवार्तिकव्याख्यानपरके भाष्ये शास्त्रद्वयस्य ([1]ङिच्चेत्यस्यानेकाल्शि[2]-दित्यस्य च) अवकाशप्रदर्शनशैली अत्र न दृश्यतेऽन्यत्र तु तादृशे भाष्ये तथा शैल्यनुभूयते। यद्यपि शास्त्रस्य अनुवादकत्वं दोषतया भाष्ये प्रतिपादितं तथापि "अनिय[3]मे नियमकारिणीनां परिभाषणां कृते तु नियमरनपत्वेन तस्य गुणत्वमेव, यतः तत्र प्राप्तानुवादादेव आर्थिकी इतरनिवृत्तिर्भवति। यथा— व्रीहिन् अवहन्तीत्यादौ प्राप्तो य अवघातः तस्यानुवादेन नखविदलनादि-निवृत्तिः भवति, यथा च "[4]तस्मिन्निति निर्दिष्टे पूर्वस्ये"त्यादौ प्राप्तस्य पूर्वस्येत्यनुवादेन परस्य निवृत्तिः प्राप्तस्य चाप्यव्यवहितस्यानुवादेन व्यव-हितस्यानुवृत्तिः, किञ्च कप् यप् अबादिषु पित्वस्य किमप्यन्यत्फलं न संभवति, अनुदात्तस्य किताविति सूत्रविहितानुदात्तस्वरादितिरति– इति कृत्वा "जित्वरी" इत्यादौ तुक्सम्पादनेन चरितार्थयित्वे क्वरप्यन्तरङ्गेण प्रत्ययाद्यु-दात्तत्वेन बाधः स्यादिति हेतोः प्रदीपकृता उक्तं ङित्वस्यान्यथत्वसंभवे सति दौर्बल्यादिति। इदानीं दौर्बल्ये सति परिभाषात्वमेवास्य भग्नम्, पुनश्च सन्दिग्धोपस्थानोऽयं योग इति प्रदीपग्रन्थस्य व्याख्यानं करोत्युद्द्योतकारः— आपातरमणीयोऽयं सन्देहः यावता कालेन विशेषतो विचारो न विधीयते तावता "[5]ङिच्चे"त्यस्य प्रवृत्तिसंशयः आपतति। गभीरदृष्ट्या पर्यालोचने त्वस्य शास्त्रस्योपस्थितिर्नैव संभवति, तदेतत्सर्वं मनसि निधायाह प्रदीप-कारः—[6]इत्यपवादत्वमेव एतद्विषयेऽस्य नास्ति, ङित्वसामर्थ्यप्रयोज्यं ह्यप-वादत्वं तच्च सामर्थ्यमुपेक्षणीमिति भावः।

**म० भा०—[7]शित्सर्वस्येति किमुदाहरणम्? "इदम इश्" इतः इह। नैतदस्ति प्रयोजनम्। शित्करणादेवात्र सर्वादेशो भविष्यति।**

(प्रदीपः)—अनेकाल्[8]। शित्करणादेवेति। सति शकारेऽनेकाल्त्वादिति भावः। अनेकालत्वसंपादनेन च कृतार्थः शकारः इतीत्संज्ञकत्वाल्लुप्यत एव।

(उद्द्योतः)—अनेकाल् शित्[9]। ननु शित्पदाभावे कथं शित्करणादेवेति भाष्यमत

---

१. पा० सू० १।१।५३
२. पा० सू० १।१।५५
३. म० भा० आ० सू० १।१।७५
४. पा० सू० १।२।६६
५. पा० सू० १।१।५३
६. प्र० पृ० ४०१
७. पा० सू० १।१।७।११
८. प्र० पृ० ४०३
९. उ० पृ० ४०३

आह —सतीति। शकारोच्चारणसामर्थ्याद्भूतपूर्वमनेकाल्त्वमादाय शास्त्रप्रवृत्तिरिति भावः।

अत्र समीक्षा —"[1]अनेकाल्शित्सर्वस्ये"ति सूत्रे शिदंशे उदाहरणं दर्शयति भगवान् भाष्यकारः "इदम् इश्" "इतः इह इति"। पुनश्च स्वयं प्रत्याचष्टे नैतदस्ति प्रयोजनं शित्करणादेवात्र सर्वादेशो भविष्यति। अत्र प्रदीपकार इत्थं भाष्याशयं ब्रूते यद् इदम् स्थाने इशादेशे शकारप्रयोज्यमस्त्यनेकाल्त्वं ततश्च सर्वादेशो सेत्स्यति, एवञ्चानेकाल्त्वसंपादनेन चरितार्थः शकार इति कृत्वा इत्संज्ञकः सन् "[2]तस्य लोप" इत्यनेन लोपः प्राप्स्यत्येव।

अत्रोद्योतकारः प्रदीपाशयमित्थं व्याख्याति यदनेकाल्सूत्रे शित्पदस्याभावे शित्करणादेव सर्वादेशो भविष्यतीति भाष्यं कथं संघटत इत्यतः उक्तं प्रदीपकृता सति शकार इत्यादि। शकारोच्चारणसामर्थ्याद् आदेशप्रवृत्तिवेलायामनेकाल्त्वाभावेऽपि भूतपूर्वमनेकाल्त्वमादाय शास्त्रप्रवृत्तिर्बोध्या इति प्रदीपाशयः। केचित् शब्दकौस्तुभकारादय अस्य भाष्यस्येममाशयं वर्णयन्ति[3] यदेतत्सामर्थ्यात् फलस्य प्रत्यसतया च (संनिधानेन च) सर्वादेशविधानोत्तरमेव लक्ष्य इत्संज्ञादिविधायकशास्त्रप्रवृत्तिरिति। तत्त्वणु[4]दित्सूत्रभाष्यविरोधात् चिन्त्यम्, तथा हि तत्सूत्रे इशिसवर्णग्रहणं कुतो नेति आपादनपरभाष्येण सूत्रे एव इत्संज्ञालोपयोः प्रवृत्तिरिति तेन ध्वननात्। तच्च भाष्यं [5]वाक्यापरिसमाप्तिन्यायविश्लेषणे उक्तम्—वर्णानामुपदेशस्तावदुपदेशोत्तरकाला इत्संज्ञा इत्संज्ञोत्तरकालप्रत्याहारसिद्धिः तदुत्तरकालः सवर्णसंज्ञा तदुत्तरमणुदिदित्यनेन ग्राहकताशक्तिः, एतेन समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति न स्वस्मिन् नापि स्वाङ्गे। अत्रोपदेशोत्तरकाला इत्संज्ञा इति कथनेन सूत्रे यदुच्चारणं तदव्यवहितोत्तरकाला इत्यर्थं मत्वा इदमुक्तं यदि तु व्यवहिताव्यवहितसाधारणं कालगतमुत्तरत्वं गृह्यते तदा लक्षेऽप्यित्संज्ञा प्रवृत्तौ न कश्चन दोषः प्रतिभाति। पुनश्च अनेकाल्त्वसंपादनेनेत्यादि प्रदीपवाक्यस्य

१. म० भा० आ० सू० १।१।७।११ २. पा० सू० १।३।९
३. शब्दकौस्तुभ ४. पा० सू० १।१।६९
५. भा० वा० १६७

अवतरणमुत्थापयत्युद्द्योतकारः--[1]नन्वेवमित्यादिना। अयमाशयः शकार-करणादित्येव कुतो नोक्तं भाष्यकृता शित्करणादिति गुरुभूतं पदं किमर्थमु-पात्तमिति जिज्ञासायामिदमुक्तमनेकाल्त्वेति। अन्यस्य फलस्य भावेऽपि शकारोच्चारणस्य सर्वादेशत्वप्रयोजकानेकाल्त्वसंपादने चारितार्थ्याल्लोक एव इत्वप्रयुक्तं कार्यं संभवतीति कृत्वा शकारस्येत्संज्ञा प्रवर्तत एवेति द्योत-यितुमिदृशी उक्ति अनेकाल्त्वेत्याद्यरूप इति दिक्।

**इति महाभाष्य समीक्षणे चतुर्थाध्यायस्य द्वितीयपादः।**



१. उ० पृ० ४०३

## अथ तृतीयः पादः

**म० भा०—[1]नैतदस्ति प्रयोजनम् । प्रातिपदिकनिर्देशोऽयम् । प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, न कांचित्प्राधान्येन विभक्तिमाश्रयन्ति । तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्ति-माश्रयितुं बुद्धिरुपजायते, सा सा आश्रयितव्या ।**

(प्रदीपः)--[2]प्रातिपदिकनिर्देशाश्चेति । अनलित्येतावदेवोच्यताम् । अत्र शब्दसंस्काराय केवलं प्रथमाविभक्तिरूपा दीयते । न तु तदर्थो विवक्ष्यते । यथा भाव इत्यत्र लिङ्गसंख्ये इति भावः ।

( उद्योतः )---[3]केवलप्रकृतेः प्रयोगभावादाह---अत्रेति । विवक्ष्यते इति । तत्समभिव्याहारे प्रतीयमानो विधेयत्वरूपोऽर्थो न विवक्ष्यत इत्यर्थः । अन्वयायोग्य-त्वादिति भावः । लिङ्गेति । अत एव भूतिरित्यादिसिद्धिः । सप्तम्यर्थस्तु तत्र विवक्षित एवेति लिङ्गसंख्ये इत्येवोक्तम् । भाष्ये—अर्थतन्त्रा इति । स्वार्थमात्रबोधकविभक्त्य-धीना इत्यर्थः । प्राधान्येन विभक्तिं विशिष्यप्रकृतान्वययोग्यविभक्त्यर्थं नाश्रयन्ति । निर्दिष्टे बोधिते । पश्चादन्वययोग्यविभक्त्यर्थाकाङ्क्षायां यद्यद्विभक्त्यर्थमन्व-यित्वेनाश्रयितुं लक्ष्यानुसाराद्बुद्धिरुपजायते सा सा विभक्तिरध्याहार्या । साधुत्वार्थ-मुत्पन्नविभक्तेस्तु लुगिति भावः । एतेन प्रत्ययाध्याहारो न क्वापि दृष्ट इत्यपास्तम् । मा भेर्मा संविकथा इति पुरोडाशावदानमन्त्रस्य धानासमूहे मा भैष्ट मा संविक्थमि-त्यादौ दर्शनाच्च । तत्तद्विषयकलक्षणभेदात्तत्र तत्र सा आश्रयितव्येति तात्पर्यम् । नन्वनलिति प्रथमानिर्देशे नलात्मक आदेश इत्यर्थे ल्यपो नलात्मकत्वेन प्रपठ्येत्या-दाविट् स्यात् । (तथा) उत्तमपुरुषैकवचने टेरेत्वस्य स्थानिवत्वाभावात्पदत्वं न स्यादिति [4]चेन्न । अदो जग्धिरिति सूत्रे ल्यब्ग्रहणेनादेशविशेषणत्वाभावज्ञापनादित्यदोषः ।

अत्र समीक्षा—"स्थानिवदादेशो [5]ऽनल्विधौ" इति सूत्रे भगवता भाष्य-कृता शङ्कितमर्थविधिग्रहणं किमर्थमिति । तत्र समाहितं सर्वविभक्त्यन्तः-

---

१. म० भा० आ० सू० १।१।८।१    २. प्र० पृ० ४०७

३. उ० पृ० ४०८    ४. पा० सू० २।४।३६

५. पा० सू० १।१।५६

समासो यथा विज्ञायेत, अलः परस्य विधिरल्विधिः, अलो विधिरल्विधिः, अलि विधिरल्विधिः, अलाविधिरल्विधिरिति । पुनश्च विधिग्रहणस्य एतत्-प्रयोजनं स्वयं प्रत्याचष्टे भगवान् भाष्यकारः नैतदस्ति प्रयोजनं प्रातिपदिक-निर्देशोऽयमित्यादिना । अयं भावः अनल् इत्येतावदेवोक्ते सति शब्दसंस्काराय केवलं प्रथमाविभक्तिरूपादीयते, तदर्थस्तु न विवक्षितः, शब्दसाधुत्व-मात्रफलिका सा प्रथमा इति भावः । अन्यथा अपदं न प्रयुञ्जीत इति निषेधा-ङ्धनजन्यं प्रायश्चितं स्यात् । यथा—[1]"भावे" इति सूत्रस्थभावशब्दे लिङ्ग-संख्ययोरविवक्षा कृताऽस्तीति प्रदीपानुसारिभाष्याशयः ।

उद्द्योतकारस्तु इत्थं व्याचष्टे यत् शब्दसंस्कारमात्रफलिका प्रथमा-विभक्तिरत्रागता इति प्रदीपस्येदं तात्पर्यं यदसति विशेषानुशासने[2]नापि केवला प्रकृतिः प्रयोक्तव्याः नापि केवलप्रत्यय इति [3]"परश्चे"ति सूत्रीय-भाष्यसिद्धान्तेन केवलायाः प्रकृतेः प्रयोगो नोचित इति कृत्वा साधुत्वमात्रार्थं प्रथमाया आनयनम् ।

ननु प्रथमासमभिव्याहारे प्रतीयमानः विधेयत्वरूपोऽर्थः प्रतीयेत इति चेदुच्यते—तदर्थस्तु न विवक्षित अन्वयानर्हत्वात् । असति बाधके प्रथमायाः विधेयता प्रयोजकविभक्तित्वमङ्गीकृतमस्ति, इति नियमेन प्रतीयमानो विधेयत्वरूपोऽर्थ उक्त उद्द्योतकृता । भाव इत्यत्र लिङ्गसंख्ययोः अविवक्षा-यामेव भूतिः भावनं पाकौ पाका इत्यादि प्रयोगाः सिध्यन्ति । ननु लिङ्ग-संख्ययारेविवक्षया सह [4]"भावे" इति सूत्रे सप्तम्याः अधिकरणत्वरूपस्यार्थ-स्यापि अविवक्षा स्यादिति चेत्तत्रोच्यते उद्द्योतकृता सप्तम्यर्थस्तु तत्र विव-क्षित एवेति, लिङ्गसंख्ये इत्येवोक्तं प्रदीपे । प्रातिपदिकनिर्देशाश्चार्थतन्त्राः इति भाष्यमूलं व्याचक्षाण उद्द्योतकार आह–स्वार्थमात्रबोधकविभक्त्यधीना इति, न काचित्प्राधान्येन विभक्तिमाश्रयन्ति । प्रधानतया अर्थबोधिकां विभक्तिं नाश्रयन्ति, यतो हि—[5]"प्रकृतिप्रत्ययोः सहार्थः व्रतस्तयोः प्रत्ययार्थः प्रधानं भवतीति नियमेन प्रायशः विभक्त्यर्थस्य प्राधान्यमेव, केवलं प्रथमाया एव प्रकृत्यर्थानुवादकत्वम् । तत्र प्रातिपदिकार्थे बोधिते सति पश्चादन्वययोग्य-विभक्त्यर्थापेक्षायां यस्य यस्य विभक्त्यर्थस्यान्वयित्वेनाश्रयणं लक्ष्यानुसारा-दुचितं तस्य तस्य बुद्धिरुत्पद्यते सा सा विभक्तिरध्याहार्या भवति । साधुत्व-

१. पा० सू० ३।१।१८ २. म० भा० ३।१।२

३. पा० सू० ३।१।२ ४. पा० सू० ३।३।१८

५. वै० भू० सा० धा० नि०

मात्रार्थमुत्पन्नायाः प्रथमायाः सामान्ये नपुंसकत्वाल्लुग् भवति, अतश्च यदीदं केनचिदुच्यते प्रत्ययस्याध्याहारो न क्वापि दृश्यते तन्मतं निरस्तं वेदितव्यम्। वेदे [1]माभेर्मासंविग्धा इति पुरोडाशवदानुबन्धस्य धानासमूहे मा भेष्ट मा संविग्धमित्यादौ प्रत्ययाध्याहारस्य दर्शनाच्च। प्रत्ययाध्याहारस्य अपास्तत्वे हेत्वन्तरमिदं माभेर्मा इत्यादि। "धानासमूहे" इत्यस्यायमर्थः-धानासु विनियोगाय अस्य मन्त्रस्योहे कृते सति, पुरोडाशस्य एकत्वात् तत्र विनियोक्तव्येऽस्मिन्मन्त्रे एकवचनसत्वेऽपि धानानां बहुत्वात् तासु विनियोगाय अस्मिन्मन्त्रे बहुवचनस्य ऊहः क्रियते।

नन्वनलित्यस्य एकदैव सूत्रे श्रवणं वर्तते कथं तत्रानेकविभक्तिरध्याहार्तव्या इति जिज्ञासायामुक्तं तत्तद्विषयकलक्षणभेदात्तत्र तत्र सा आश्रयणीया इति तात्पर्यम्। यद्यपि विधिग्रहणाभावे संभवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति न्यायेनानल् इति प्रथमानिर्देशे नलात्मक आदेश इत्यर्थे क्त्वास्थाने ल्यबादेशस्य अनलात्मकत्वेन प्रपद्य इत्यादौ बलादित्वमार्धधातुकत्वं स्थानिवत्वेनाश्रित्य इडागमः स्यात्, तथा उत्तमपुरुषैकवचने टेः स्थाने एकारादेशस्य स्थानिवत्वाभावेन पदसंज्ञा न स्यादिति वक्तुं शक्यते, तथापि "[2]अदोर्जग्धिर्ल्यप्ति किती"ति सूत्रस्य अद्धातोः जग्धादेशः स्याल्ल्यपि तादौ किति च परे इत्ययमर्थः। एवञ्च यदि स्थानिवत्सूत्रे नलात्मक आदेश इत्याद्यन्वयः स्यात्तर्हि ल्यबादेशस्य स्थानिवद्भावेन तादिकित्वाद् इष्टसिद्धौ, तत्र ल्यब्ग्रहणं व्यर्थं स्यादिति कृत्वा ज्ञापयति यदनलिति आदेशे भेदेन विशेषणं नास्तीत्युद्द्योतकृदभिप्रायः।

**म० भा०—[3]एकदेशविकृतस्यानन्यत्वात्सिद्धम्। "एकदेशविकृतमनन्यवद्भवती"ति लिङ्गग्रहणेन ग्रहणं भविष्यति। तद्यथा—श्वा कर्णे वा पुच्छे वा छिन्ने श्वैव भवति, नाश्वो न गर्दभ इति।**

([4]प्रदीपः)—तद्यथेति। छिन्नेऽपि पुच्छे शिष्टावयवसन्निवेशः श्वत्वजातेरभिव्यञ्जकः। एवं पचत्वित्यत्रेकारस्य विकारेऽपि तकारस्तिङ्त्वस्य व्यञ्जकः। तथा चेकारलोपेऽप्यपाचदिति तकारमात्रस्य तिङ्त्वमर्थप्रतीति-

१. उ० पृ० ४०८    २. पा० सू० २।४।३६
३. का० वा० ४००    ४. प्र० पृ० ४१५

हेतुत्वं चास्ति। नाश्व इति। अवयवापगमेऽपि न तस्य जात्यन्तरेण योगः किं तर्हि, श्वत्वे नैवेत्यर्थः।

([1]उद्द्योतः)—लोकन्यायाश्रेणैतत्प्रत्याचष्टे—अनन्यत्वात् सिद्धमिति भाष्ये। नन्ववयविगमे जात्यभिव्यञ्जकाभावात्कथं श्वेति व्यवहारोऽत आह—छिन्नेऽपीति। तथा चेति। लोपस्य विकारत्वाभावेनैकदेशविकृतोपसङ्ख्यानेऽपि तत्रोक्तरीतिरेवावश्यकीति भावः। अर्थेत्यादि दृष्टान्तार्थम्। अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानाद्बोधो न स्यात्। एतदर्थं च तन्न्यायाङ्गीकार आवश्यक इति भावः।

अत्र समीक्षा—[2]"स्थानिवदादेशोऽनल्विधावि"ति सूत्रे "एकदेशविकृतस्योपसङ्ख्यानं कर्तव्यमि"ति वार्तिकमपूर्वं विधाय "पचतु पचन्तु" इत्यत्र फलमुक्तं तिङ्ग्रहणेन ग्रहणं यथा स्यात्। तदनु लौकिकन्यायमाश्रित्य तद्वार्तिकं प्रत्याचक्षाणः भाष्यकार आह—[3]एकदेशविकृतमनन्यवद् भवतीति न्यायेन तु इत्यस्य तिग्रहणेन अन्त्वित्यस्य अन्तिग्रहणेन ग्रहणे तत्र तिङ्त्वमादाय [4]"सुप्तिङन्तं पदमि"ति पदसंज्ञायामिष्टः स्वरः [5]"तिङ्ङतिङः" इत्यनेन भविष्यति। तत्र न्यायस्य लौकिकत्वं विशदयति प्रदीपकारः छिन्नेऽपि इति पुच्छे येऽवशिष्टा अवयवाः तेषां सन्निवेशः श्वत्वजातिमभिव्यनक्ति। एवं पचत्वित्यत्रेकारस्य [6]"एरुरि"त्यनेन उकारात्मके विकारेऽप्यवशिष्टस्तकारः तिङ्त्ववर्णस्य प्रकाशको भवति, तथा चेकारलोपेऽपि "अपचदि"ति तकारमात्रस्य सतिङ्त्वमर्थप्रत्ययहेतुत्वञ्चास्ति। एवञ्च यथा पुच्छाद्यवयवे नष्टेऽपि स अवशिष्टः पदार्थः श्वा इति व्यपदेशं न जहाति, तथैव "अपचदि"त्यत्र ते शब्दावयवस्येकारस्य [7]"इतश्चे"त्यनेन लोपेऽप्यवशिष्टस्तकारभागः तिवृत्तितिङ्त्वमत्यजन् वर्तमानत्वाद्यर्थमपि बोधयति। अयमेव भाष्याशयः श्वाकर्णे पुच्छे वा छिन्नेऽपि श्वैव भवति नाश्वो न गर्दभ इति। प्रदीपकारः नाश्व इति भाष्यप्रतीकमादाय तमेवाशयं विशदीकरोति, अवयवापगमेऽपि कस्यचनावयवस्य विनाशेऽपि तस्य न जात्यन्तरेण योगः किन्तु श्वत्वजातिरेव तत्र व्यवह्रियते, सः श्वा अश्वत्वेन गर्दभत्वेन कदापि न व्यवह्रियते। अत्र भाष्यप्रदीपयोरुभयोरप्यभिप्रायं व्याचष्टे उद्द्योतकारः—[8]"एकदेशविकृतमनन्यवद्भवतीत्यत्र अनन्यत्वमभिन्नत्वं तस्मात्सिध्यति सर्वोऽयं व्यवहारः। कस्या-

---

१. उ० पृ० ४१५ | २. पा० सू० १।१।१६
३. का० वा० ४०० | ४. पा० सू० १।४।१४
५. पा० सू० ८।१।२८ | ६. पा० सू० ३।४।८६
७. पा० सू० ३।४।१०० | ८. भा० वा० ४००

भिन्नत्वं कुत्रेति जिज्ञासायां छिन्नेऽपीति प्रदीपग्रन्थप्रतीकमादाय उच्यते उद्द्योतकृता नन्ववयविगमे इति। अयं भाव एकदेशेन यः विकृतः तस्यैकदेशविशिष्टेन अभिन्नत्वं भवति। एवञ्चावयवस्य विनाशे सति तन्निष्ठजातेः अभिव्यञ्जकस्याप्यभावः संजातः तदा श्वा इति व्यवहारो न संभवतीत्यत उक्तः छिन्नेऽप्यित्यादिः प्रदीपकृता। अपचदित्यत्र इकारस्य लोपः न विकारः तस्याभावरूपत्वात्, एवञ्च एकदेशविकृतस्य स्थानिवद्भावोपसंख्यानमिति स्वीकारेऽपि, अपचदित्यत्र यथा तिङ्त्वजातिरपि तकारमात्रेण प्रकाशिका भवति,एतदर्थं लोकन्याय अवश्यमाश्रणीयः, तस्य न्यायस्यानाश्रयणे तु शक्ततावच्छेकानुपूर्व्याः अत्रानात्ततोऽर्थबोधो न स्यात्, एतदर्थञ्च तस्य न्यायस्य स्वीकार आवश्यक इति भावः उद्द्योतकर्तुः। पुनश्चेदमत्रालोच्यते यद्वैयाकरणदर्शने शब्दस्यार्थस्य तत्सम्बन्धस्य च नित्यत्वस्वीकारे कथमस्य लोकन्यायस्यात्र शास्त्रे प्रवृत्तिः भाष्यकृताकृता इति जिज्ञासायामेतत्समाधातुं शक्यते यद् यद्यपि शब्दाः नित्याः अथापि कार्याः इति संग्रहादिग्रन्थीयसिद्धान्तमनुश्रित्य प्रक्रियापक्षे शब्दानां प्रातिभाषिकमनित्यत्वमपि स्वीकृतमस्ति। इति कृत्वा तादृशे प्रक्रियापक्षे एतस्य न्यायस्य स्वीकारे न कश्चन दोषः प्रतिभाति। एवञ्च यथा भगवता श्रीशङ्कराचार्येण अध्यासभाष्ये उक्तं—"सत्यानृते मिथुनीकृत्य प्रवृत्तोऽपि लोकव्यवहारः तथैव आपातरमणीये लोके व्याकरणेऽपि व्यवहारो विधीयते। अत एव "[१]अचः परस्मिन्नि" ति सूत्रं सङ्गच्छते, तत्राच्पर्याप्तस्थानिताक आदेशः स्थानिवद् भवति, पूर्वत्वेन दृष्टस्य विधौ कर्त्तव्ये इति सूत्रार्थे प्रक्रियापक्षीयानित्यत्ववाद एवाङ्गीकृतो दृश्यते अन्यथा अज्मात्रे स्थानिता कथं संभवेत्, शब्दनित्सत्ववादे त्वज्घटितस्य बुद्धौ प्रसक्तायां तत्रादेशघटितविषयिका बुद्धिः कर्तव्या इति रीत्या बुद्धिवपरिणाम एव स्थान्यादेशभावस्थले समादृतो वर्तत इति दिक्।

**म० भा०—[२]लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति।**

([४]प्रदीपः)—लक्षणेति। अत्र चान्तरा ह्रस्वे कृते स एवायमिति बुद्धेर्विच्छेदः।

([३]उद्द्योतः)—नन्वेवमपि दीर्घे कृते स्थानिवद्भावेनाप्त्वं स्यादेव, अयं निषेधस्तु न, दीर्घत्वादत आह—अत्र चेति। एवं च स्थानिवद्भावेन तदलाभः, तत्स्थानिन्यसत्वादिति भावः।

---

१. पा० सू० १।१।५७ २. म० भा० पृ० ४२३

३. प्र० पृ० ४२३ ४. उ० पृ० ४२३

अत्र समीक्षा—[1]स्थानिवत्सूत्रेऽङ्याब्ग्रहणे दीर्घभिन्न आदेशः स्थानिवत् न [2]भवत्येतदर्थकं ङ्याब्ग्रहणे दीर्घ इति वार्तिकमुक्तं भगवता भाष्यकृता। तत्फलञ्च दर्शितं कौशाम्ब्याः निष्क्रान्ताः निष्कौशाम्बीः, खट्वामतिक्रान्त अतिखट्वा, [3]इत्यादौ "गोस्त्रियोरुपसर्जनस्ये" त्यनेन स्त्रीप्रत्ययान्तान्तप्रातिपदिकस्य ह्रस्व इत्यर्थकेन ह्रस्वे कृते स्थानिवद्भावेन ङीप्त्वाप्त्वाभ्यां योगात् सुलोपो न भवति।

तत्र च पुनः शङ्कितं यद् [4]हलङ्यादिसूत्रे दीर्घादित्युच्यते तत एव। सुलोपो वारितो भविष्यति, यतो हि—ङीस्त्वाप्त्वयोः स्थानिवद्भावेन तत्र लाभेऽपि दीर्घत्वस्याल्त्वव्याप्यधर्मतया स्थानिवद्भावेन ह्रस्वादेशेऽतिदेशः कर्तुं न शक्यते। पुनः उक्तं यत् ङ्याब्ग्रहणे दीर्घमिति वार्तिकमभ्युपगम्य सूत्रे दीर्घादिति पदं न कर्तव्यं भवति। वार्तिकारम्भे त्विदमपि सिद्धं भवति "अतिखट्वाय अतिमालाय" [5]"याडापः" इति सूत्रेणात्र याड् न भवति। तत्र पुनः शङ्कितं भगवता यत् स्थानिवद्भावो माभूत् [6]"सुपि चे" ति दीर्घे कृते सति [7]"साम्प्रतिकाभावे भूतपूर्वगतिरासीदि" ति न्यायेन प्रत्यक्षे दीर्घे भूतपूर्वं पित्वमादाय याट् प्राप्नोत्येव। तदनु पुनः समाहितं [8]लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव इति। अयमाशयः लक्षणमस्ति विधायकतया यस्तु तल्लक्षणं लाक्षणिकमित्यर्थः, प्रतिपदमुक्तं प्रतिपदोक्तं साक्षात्पदमुच्चार्यविहितं कार्यमित्यर्थः। अथवा कस्मिश्चित्सूत्रे कस्यचनशब्दस्य ग्रहणे कार्ये प्रतिपदोक्तं गणपाठादौ साक्षादुच्चारितं तत्पदं स्यात्तर्हि तस्यैव ग्रहणं कार्यं न तु लक्षणवशसम्पन्नरूपवतः, यथा [9]"पाघ्राध्मा-" इति सूत्रे "पा" इत्यनेन "पा पाने" इति गणपाठे उच्चरितः पाशब्द एव गृह्यते न तु "पै ओवै शोषणे" इत्यत्रोच्चरितः शोषणार्थकः "पै" इति। तस्य [10]"आदेच उपदेशेऽशिती" त्यनेनात्वे कृते सति पारूपस्य लाक्षणिकत्वात्। अतः तस्य न ग्रहणम्, एवञ्च प्रकृतेऽपि प्रतिपदोक्तस्यैव आपो ग्रहणं भविष्यति [11]हलङ्यादि सूत्रे। न तु भूतपूर्वपित्वविशिष्टस्य लाक्षणिकस्या-

१. पा० सू० १।१।५६
२. भा० वा० ४१५
३. पा० सू० १।२।४८
४. पा० सू० ६।१।६८
५. पा० सू० ७।३।११३
६. पा० सू० ७।३।१०२
७. प० शे० प० ७७
८. म० भा० पृ० ४२३
९. पा० सू० ३।१।३७
१०. पा० सू० ६।१।४५
११ पा० सू० ६।१।६८

कारस्य, अत्र ह्याकारः [१]"सुपि चे" ति लक्षणेन सम्पन्नं, यद्यपि "रमायै, रमायाः" इत्यादावप्याकारः [२]"अकः सवर्णे दीर्घः" इति सूत्रेण दीर्घादेशरूपतया निष्पादितः तथापि तादृशलक्षणप्रवृत्तिः विनापि टाप्सम्बन्धी "आप्" इति पूर्वत एव पाणिनिना साक्षादुच्चारित इति कृत्वा प्रतिपदोक्तोऽस्ति। सा तु ग्राह्यो भविष्यति, अत्र तु "आ" इति ह्रस्वादेशेन विकृतः तस्य च [३]"सुपि चे"ति दीर्घादेशो जातः, अतः तत्र न प्रतिपदोक्तत्वमपि तु लाक्षणिकत्वमेवास्ति। एतद्भाष्यं व्याचक्षाणाः प्रदीपकारोऽपीमं भाष्याशयं ब्रवीत्यत्र अतिखट्वाय इति प्रयोगे मध्ये ह्रस्वे कृते सति स एवायमित्याकाराबुद्धिर्न सम्भवतीति, पुनश्च तत्रोद्द्योतकार इमं प्रदीपग्रन्थं स्पष्टयति—नन्वेवमपि (ह्रस्वे कृतेऽपि) पुनः [४]"सुपि चे"त्यनेन दीर्घे कृते स्थानिवद्भावेनाप्त्वं परम्परया दीर्घाकार आगमिष्यत्येव। ङ्याब्ग्रहणे सति निषेधस्तु न भवितुमर्हत्यस्य आकारादेशस्य दीर्घत्वादनेन वार्तिकेन तु दीर्घभिन्नस्यैवादेशस्य स्थानिवत्वनिषेधकरणादिति कृत्वा प्रदीपकारः व्याख्याति अत्र चेति। एवञ्च स्थानिवद्भावेन ह्रस्वे आप्त्वविच्छेदे सति दीर्घेऽपि तस्याभाव एवेति भावः।

अत्रोद्द्योतग्रन्थ इदमपि विचारणीयं भवति यत्परम्परया स्थानिवद्भावः कुत्रचिदपि यदि न दृष्टः तदा नन्वेवमप्यित्यादिना कृता आशङ्का उद्द्योतकारीया कथं सङ्गच्छेद् इति चेदुच्यते [५]"उदीचामातः स्थाने यक् पूर्वायाः" इति धात्वन्त्वेकस्तु नित्यमिति भाष्यकारेष्ट्या सुनयिका इत्युदाहरणम् तत्पोषिका इयमिष्ट एव तत्र प्रमाणम्। अयमाशयः नयनं नयः [६]"परञ्च" इत्यनेन निधातोः अच्प्रत्यये गुणेऽयादेशे च "नयः" इति सिध्यति। शोभनो नयो यस्याः सा सुनया अज्ञाता सुनया सुनयिका। अत्र अज्ञाताद्यर्थे कप्रत्यये कृते सति [७]"कोणः" इति ह्रस्वे यकारपूर्वक-अकारस्थानिकः ह्रस्वः संजातः। तस्य [८]"उदीचामातः स्थाने यक्पूर्वायाः" इति विकल्पेन प्राप्तमित्वमनया इष्ट्या नित्यमित्वं विधीयते। तत्र निवृत्तिधातुत्वं "ने" इत्यत्र सर्वे [९]सर्वपदादेशा इति नियमेनायाति। पुनश्च निवृत्तिधातुत्वं नय् इत्यत्रागच्छति स्थानिवद्भावेन, तस्मिन् सत्वे इयमिष्टिः प्रवर्तत इति तत्त्वम्।

---

१. पा० सू० ७।३।१०२ २. पा० सू० ६।१।१०१

३. पा० सू० ७।३।१०२ ४. पा० सू० ६।३।१०२

५. पा० सू० ७।३।४६ ६. पा० सू० ३।३।५६

७. पा० सू० ७।४।१३ ८, पा० सू० ७।३।४६

९. म० भा० पृ० २४२

**म० भा०—[1]गोः पूर्वणित्वात्वस्वरेषु। गोः पूर्वणित्वात्व-स्वरेषु प्रतिषेधो वक्तव्यः। चित्रग्वग्रं शबलग्वग्रम्। [2]"सर्वत्र विभाषागोरि"ति विभाषा पूर्वत्वं प्राप्नोति।**

(प्रदीपः)—[3]सर्वत्रेति। प्रकृतिभावोऽनेन विधीयते, न तु पूर्वत्वम्। तस्मादेङः पदान्तादतीति पूर्वत्वं प्राप्नोतीति वाच्यम्। यदा त्वप्रकृतिभावः, तदाऽयं प्रसङ्ग उक्तः। उत्तरं त्वविधित्वात्स्थानिवत्वाभावः।

(उद्द्योतः)—[4]भाष्ये विभाषा पूर्वत्वं प्राप्नोतीति। अत्र वार्तिके भाष्ये च पूर्वशब्देन तदपवादो लक्ष्यते। भाष्ये सर्वत्रेति चावङिति सूत्रस्याप्युपलक्षणम्। ध्वनितं [5]चेदमवङ्सूत्रे भाष्ये इति षष्ठे निरूपयिष्यामः। अनन्तरस्येति न्यायेन तदपवादोऽपि परत्वाद्यणमपि बाधित्वा स्यादित्याशयः। यत्तु कैयटेन तस्मादेङ इत्यादिप्रसङ्ग उक्त इत्यन्तमुक्तम्। तत्तु चिन्त्यमेव। [6]एङः पदान्तादिति सूत्रे एङ्पदोच्चारणसत्वेन शङ्काया असम्भवदुक्तिकत्वात्। भाष्योक्ते तु एङ्पदाभावादनुवृत्तिमजानतः शङ्केत्युक्तिसंभवात्।

अत्र समीक्षा—गोशब्दस्य पूर्वत्वे कार्ये णित्वे आत्वे स्वरे कर्तव्ये च स्थानिवद्भावस्य प्रतिषेधः क्रियतेऽनेन वार्तिकेन। तत्र "चित्रगु अग्रम्" इत्यत्र गुशब्दस्य स्थानिवद्भावेन गोशब्दत्वे सति "एङः [7]पदान्तादति" इति पूर्वरूपं प्राप्नोति तस्मिन् कर्तव्ये स्थानिवत्वनिषेध अतः यण् एव भवति। भाष्ये तु [8]"सर्वत्र विभाषा गो"रिति विकल्पत्वेन पूर्वत्वं प्राप्नोतीत्युक्तम्।

तत्र प्रदीपकारः व्याख्याति—भाष्यीयं सर्वत्रेति प्रतीकं धृत्वा प्रकृतिभावोऽनेन विधीयते न तु पूर्वत्वम्। तस्मात् "एङः [9]पदान्तादति" इति पूर्वत्वं प्राप्नोतीति वचनीयं स्यात्, प्रकृतिभावाभावप्रसङ्ग इदमुक्तम्। तत्समाधानं तु अल्विधित्वात् स्थानिवद्भावो न भविष्यति, यतो ह्येङन्तत्वं गोशब्दवृत्तिधर्मः स तु यदा गुशब्दे आगमिष्यति तदा [10]"एङः पदान्तादि"त्यस्य प्राप्तिर्भवेत्, तत्र एङन्तत्वस्य अल्त्वव्याप्येन एङ्त्वेन घटितत्वादनल्विधाविति निषेध इति प्रदीपतात्पर्यम्।

---

१. भा० वा० ४२४
२. पा० सू० ६।१।१२२
३. प्र० पृ० ४२७
४. उ० पृ० ४२७
५. पा० सू० ६।१।१२३
६. पा० सू० ६।१।१०९
७. पा० सू० ६।१।१०९
८. पा० सू० ६।१।१२२
९. पा० सू० ६।१।१०९
१०. पा० सू० ६।१।१०९

अत्रोद्द्योतकारः मूलभाष्यमित्थं व्याख्याति—यदत्र वार्तिके भाष्ये च पूर्वशब्देन लक्षणया पूर्वरूपापवादः प्रकृतिभाव अवङादेशश्च बोद्धव्येते। भाष्ये सर्वत्र इति [१]"अवङ्स्फोटायनस्ये"त्यस्याप्युपलक्षणम् (लक्षणया बोधकम्) ध्वनितं चैतद् [२]"अवङ्स्फोटायनस्ये"ति सूत्रभाष्ये। [३]"अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायेन तदपवादः सन्नपि परत्वाद् यणमपि बाधित्वा स्यादिति भाष्याशयः। यत्तु प्रदीपकृता "तस्मादेङः" इत्यादि प्रसङ्ग उक्त इत्यन्तमुक्तं तत्तु चिन्त्यमेव। [४]"एङः पदान्तादती"ति सूत्रे एङ्पदोच्चारणसत्वेन शङ्काया असम्भवदुक्तिकत्वात्। भाष्योक्ते त्वेङ्पदाभावादनुवृत्तिमजानतः शङ्का इत्युक्तिसम्भवात्। अयमाशयः कैयटेन [५]"एङः पदान्तादति" इति पूर्वत्वं प्राप्नोतीति भाष्याशय उक्तः।

तत्रोद्द्योतकृता खण्ड्यते—[६]"एङः पदान्तादति" इति सूत्रे एङ्पदोच्चारणेन शङ्का न सम्भवति, अनल्विधाविति निषेधप्रसङ्गात्। [७]"सर्वत्र विभाषा गोरि"ति सूत्रे एङ्पदाभावाद् एङः पदान्तादित्यतः एङ्पदस्यानुवृत्तिं चाज्ञात्वा शङ्काकरणं सम्भवति।

वस्तुतस्तु नान्तःपादमव्यपरे इति पाठः [८]"इको गुणवृद्धी"ति सूत्रभाष्यसम्मतः तद्रीत्या "सर्वत्र [९]विभाषा गोरि"ति सूत्रमपि पूर्वरूपविधायकमेव, यतो गोशब्दस्य सर्वत्र यत्प्राप्नोति तन्नेति रीत्या पूर्वरूपमेव स्थास्यति, तथापि [१०]"इको सवर्णे शाकल्यस्य ह्रस्वश्चे"ति सूत्रे चकारेण प्रकृत्या इत्यनुकृष्यते इति भाष्यदर्शनात्, प्रकृत्यान्तःपादमिति पाठोऽपि प्रामाणिकः, तेन प्रकृतिभावोऽपि ग्रहीतुमुचितः। तदनुसारेण प्रदीपस्य ग्रन्थस्य प्रवृत्तिरिति दिक्।

**म० भा०—[११]अचः परस्मिन्नित्यत्र चतुर्थप्रयोजनोपपादनम्।**

अत्र समीक्षा—आङ्पूर्वको दीधीङ् धातुः वेवीङ्धातुश्च ताभ्यामुत्तम-

१. पा० सू० ६।१।१२३ २. पा० सू० ६।१।१२३
३. प० शे० प० ६२ ४. पा० सू० ६।१।१०९
५. पा० सू० ६।१।१०९ ६. पा० सू० ६।१।१०९
७. पा० सू० ६।१।१२२ ८. पा० सू० १।१।३
९. पा० सू० ६।१।१२२ १०. पा० सू० ६।१।१२७
११. म० भा० आ० सू० १।१।८।२

पुरुषैकवचने इटि सति, तस्य "टित [1]आत्मनेपदानां टेरे" इत्यनेनैकारादेशे [2]"एरनेकाच" इति यणि सति साधुत्वम्। यद्यचः परस्मिन्नित्यत्र परस्मिन्नित्यंशो न गृह्येत तर्हि एकारादेशेऽपि स्थानिवद्भावेनेकारबुद्धिः स्यात्, यतो ह्यादेशो न जातः, स्थानीन निवृत्त इति सम्भावनायां यद्भवति तद्भवति यन्न भवति तन्न भवति, अर्थात् स्थानिनि सति यद्भवति तद्भवति, यन्न भवति तन्न भवति, इति रीत्या भावाभावोभयोरतिदेशः क्रियतेऽनेन "काममतिदिश्यतां सच्चासच्चाऽपि नेह भारोऽस्तीति भाष्योक्तेः। एवञ्चात्रोऽप्येकारादेशो न जातः, तत्कृता स्थानिनिवृत्तिरपि न जाता, अत इकारविषयिणीबुद्धिः पुनर्भविष्यति, यतश्चैकारादेशो न पर निमित्तकः। ततश्च किं स्यादित्यत उक्तं भाष्यकृता —"तस्य स्थानिवद्भावात् यीवर्णयोर्दीधीवेव्योरि"ति सूत्रेण दीधीवेव्योरीकारस्य लोपः प्राप्नोति। सूत्रे परस्मिन्निति शब्दाभावे इयमापत्तिः स्यात्, तद्भावे त्वेषा आपत्तिर्नैव भवतीति भाष्याशयः।

अत्र प्रदीपकारः—"आदीध्ये" इति भाष्यप्रतीकमादाय इत्थं व्याचष्टे—इट एत्वे कृते यीवर्णयोरिति लोपः प्राप्तः, शब्विकरणोऽपि प्राप्तः तत्र नित्यत्वाद् विकरणो भविष्यति, तस्य [3]"अदि प्रभृतिभ्य" इति लुग् भवति। [4]अनेनैवाचः परस्मिन्नित्यनेन लुकः स्थानिवद्भावे सति अकारबुद्धौ [5]सत्यामेरनेकाच इति यण् न शङ्कनीयः, [6]"क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसङ्ख्यानमि"ति भाष्यवार्तिकेन तस्य निषेधात्।

अत्रोद्द्योतकारः—ननु भाष्यकृता यदिदमुक्तम्-तस्य स्थानिवद्भावाद् यीवर्णयोरिति लोपः प्राप्नोति, तन्न युक्तम्—स्थानिवद्भावेन विनापि टित एकारादेशात्प्राक् यीवर्णयोरित्यस्य परत्वात्प्राप्तिः, अतस्तां शङ्कां वारयितुमुक्तं प्रदीपकारेण इट एत्वे कृते इति। एवञ्चैकारादेशस्य अन्तरङ्गत्वात् परापेक्षया प्राबल्यमिति भावः। अपरनिमित्तकत्वेनास्यान्तरङ्गत्वम्, लोपस्य तु परनिमित्तकतया बहिरङ्गत्वमिति समानबलवत्वाभावे परत्वं न प्राबल्यप्रयोजकमिति भावः।

विकरणस्य लोपापेक्षया नित्यत्वमुपपादयति—लोपस्तु विकरणे कृते सति तेन व्यवधानान्न प्राप्नोति, अतः लोपस्य न नित्यत्वम्। यद्यपि लुकि

---

१. पा० सू० ३।४।७९
२. पा० सू० ६।४।८२
३. पा० सू० २।४।७२
४. पा० सू० १।१।५७
५. पा० सू० ६।४।८२
६. का० वा० ४६४

सति इलोपस्याऽपि प्राप्तिरिति सोऽपि नित्यः, तथापि विकरणस्य व्यवधायकत्वमात्राभिप्रायेणैव तदुक्तम्। [1]एरनेकाच इति यण् न प्रवर्तत इति प्रदीपग्रन्थमवतारयति—ननु परस्मिन्नित्यादिना।

अयमाशयः—अचः परस्मिन्नित्यत्र परस्मिन्नित्यस्याभावे शब्लुकः स्थानिवत्वेन एरनेकाच इति यण् प्रवर्तेत, तस्मिंश्च सति इकारपरत्वाभावे यकारलोपो न प्राप्नोति, स्थानिवद्भावेनैकारपरत्वं न संभवति, न पदान्तद्विर्व[2]चनपरे यलोप इति, यलोपे कार्ये तस्य निषेधात्।

ननु यलोपे लोपस्याजादेशस्यैव स्थानिवत्वनिषेधः करणीय इत्येतद्विषयिकया भाष्येष्ट्या अत्र कथं स्थानिवत्वनिषेधचर्चा क्रियत इति न शङ्कनीयम्—तस्या इष्टेर्निमित्तभूताजादेशविषयकत्वात्। एवञ्चात्रेकारस्य न यलोपनिमित्तता, परस्मिन्निति च न ग्रहणीयमित्यत आह [3]एरनेकाच इति। एतद्विषये प्राचीनाचार्याणामुक्तिरस्ति यत् "शब्लुकः स्थानिवत्वेन व्यवधानात् यीवर्णयोरित्यस्य न प्राप्तिरिति" सा तु न साध्वी, क्विलुगिति वार्तिकेन तन्निषेधादिति दिक्।

**म० भा०—[4]नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति-"न संबुद्धिलोपे स्थानिवद्भावो भवती"ति। यदयम् [5]"एङ्ह्रस्वात्संबुद्धे"रित्येङ्ग्रहणं करोति।**

(प्रदीपः)—[6]यदयमिति। अग्ने वायो इति स्थानिवत्वाद्ध्रस्वादित्येव लोपः सिद्धः। खट्वे माले इत्यादौ हल्ङ्याब्भ्य इति। नयत्यादीनां विजन्तानां विचि गुणे ने लो इति कथं संबुद्धिलोप इति चेत्। नैतेभ्यो विच् दृश्यते।

(उद्द्योतः)—[7]ह्रस्वादित्येवेति। से—स्मृतोशब्दादावप्येवम्। यत्र स्थानिवत्वेऽपि न ह्रस्वान्तता तत्राह—खट्व इति। "लोपः सिद्धः" इत्यनुषज्यते। स्थानित्वादवेकाराकारप्रश्लेषेऽपि न दोषः। नैतेभ्य इति। एवं दीर्घेकारान्तप्रकृतिकसे इत्यादीनामेकाक्षरकोशबोधितस्य ए इत्यस्य च संबुद्धावभिधानाभावो बोध्यः। अत्रेदं चिन्त्यम्। ओग्रहणस्य भाष्ये कृतत्वेन दीर्घोकारान्तप्रकृतिक-ओकारान्तान-

---

१. पा० सू० ६।४।८२
२. पा० सू० १।१।५८
३. पा० सू० ६।४।८२
४. म० भा० आ० सू० १।१।८।२
५. पा० सू० ६।१।६९
६. प्र० पृ० ४३२
७. उ० पृ० ४३२

भिधाने मानाभावः। "गोर्थ" मिति भाष्यं तु द्योशब्दस्य सर्वसम्मतया ओकारान्तोपलक्षणतया व्याख्येयमेव सर्वैः। किं च संबुद्धावनभिधानेनोपपत्तौ सर्वथा विजमावकल्पना कुत इति।

अत्र समीक्षा—अचः[1] परस्मिन्नित्यत्र पूर्वविधाविति पदाभावे "हे गौरि"-त्यत्र औकाररूपवृद्ध्यादेशः परनिमित्तकः, "गोतो[2] णिदि"त्यनेन कृतणित्वविशिष्टसर्वनामस्थाननिमित्तक इत्यर्थः। अनेन सूत्रेण तस्य स्थानिवद्भावे सति औकारस्य ओकारबुद्धौ सत्यामङन्तत्वाद् "एङ्ह्रस्वा[3]त्संबुद्धेरि"ति संबुद्धिलोपः प्राप्नोति। पूर्वविधाविति पदसत्वे त्वत्र स्थानिभूतादोकाररूपादचः पूर्वस्य विधिनास्तीति कृत्वा लोपो न भवतीष्टं रूपं सिध्यतित्युक्त्वा भाष्यकारेण पुनरुच्यते, यदेतत् प्रयोजनं भवितुं नार्हति। "एङ्[4]ह्रस्वात्संबुद्धे"रित्यत्र एङ्ग्रहणेन ज्ञापयत्याचार्यो भगवान् पाणिनिः सम्बुद्धिलोपे कार्ये स्थानिवद्भावो न भवतीति। यदि स्यात्तर्हि एङ्ग्रहणं व्यर्थं स्यात्। हे अग्ने इत्यादौ स्थानिवद्भावेनानेन ह्रस्वान्तत्वेनैवेष्टसिद्धेरिति भाष्याशयः।

अत्र प्रदीपः—अग्ने, वायो इत्यादि सम्बुद्ध्यन्ते प्रयोगे इदानीमनेन स्थानिवद्भावे सति ह्रस्वादित्येव लोपः स्यात्। ननु हे खट्वे, हे मलि, इत्यादौ का गतिस्तत्र स्थानिवत्वेऽपि न ह्रस्वान्तत्वमित्यत उच्यते—[5]हल्ङ्याब्भ्य इति। स्थानिवद्भावेनाबन्तत्वमानीय सुलोपः कार्य इति भावः। ननु नीधातोर्विचिप्रत्यये गुणे च सति ने इति रूपं भवति, एवं लूनधातोर्विजन्तस्य लो इति रूपम्, तयोः सम्बुद्धौ परतः "हे ने, हे लो" इत्यादौ एङ्ग्रहणाभावपक्षे कथं संबुद्धिलोपः स्यादिति चेत्, तत्रोक्तम्—नैतेभ्यो विज् दृश्यत इति विजन्तानामेषामनभिधानमिति भावः।

अत्रोद्द्योतकारः—ननु[6] हे अग्ने इत्यादौ इदानीं स्थानिवत्वेन ह्रस्वादित्येव सुलोपः सिद्धः, किन्तु हे से, हे स्मृतो इत्यादीनां का गतिरिति चेत्, उच्यते—अत्रापि स्थानिवत्वेनैव ह्रस्वान्तत्वात्सुलोपः सेत्स्यति। हे खट्वे इत्यादौ आकारप्रश्लेषपक्षेऽपि हल्ङ्याब्भ्य इत्यनेनैव सुलोपः, स्थानिवद्भावेनैव तद्व्यवहारस्यापि सिद्धत्वात्। नैतेभ्यो विज् दृश्यते—इति प्रदीपग्रन्थं व्याख्यातुमाचष्टे नैतेभ्य इति। एवमेव एकाक्षरकोशबोधितस्य से इत्यस्य

---

१. पा० सू० १।१।५७
२. पा० सू० ७।१।९०
३. पा० सू० ६।१।६९
४. पा० सू० ६।१।६९
५. पा० सू० ६।१।६८
६. उ० पृ० ४३२

लक्ष्मीवाचकदीर्घेकारेण सह सहेत्य समासे सति निष्पन्नस्य से इत्यस्य च सम्बुद्धौ अभिधानं बोध्यम् ।

एतावत्पर्यन्तं भाष्यं प्रदीपं च योजयित्वा ज्ञापकपरभाष्यसहितं प्रदीपग्रन्थं दूषयितुमुपक्रमते उद्द्योतकारः—अत्रेदं चिन्त्यमित्यादिना—तस्यायं भावः भाष्यकृता ओ ह्रस्वादिति न्यासः कृतः, अत ओकारान्तानामनभिधानमप्रमाणम्, एवं दीर्घोकारान्तप्रकृतिकानामोकारान्तानामपि नानभिधानम् ।

गोऽर्थमिति भाष्यं त्वोकारान्तानामुपलक्षणतयैव योजनीयम्, अन्यथा सर्वसम्मतस्य द्योशब्दस्य का गतिः स्यात् । यदि तु विजन्तानामेषामनभिधानमेव स्वीक्रियते, तर्हि सम्बुद्धावेवानभिधानस्वीकारेणेष्टसिद्धौ सर्वत्रामभिधाने बीजं नास्ति ।

पुनश्च प्रकारान्तरेण प्रदीपं दूषयन्नाह—अपरे त्विति । अयमाशयः पूर्वविधावित्यस्याभावपक्षे दीर्वेकारान्तप्रकृतिके एकारान्ते स्थानिवत्वेनैङोऽभावाद् अतिदेशबाधमन्तरा एङ्प्रत्याहारग्रहणस्यात्र सूत्रे चारितार्थ्यं वक्तुमशक्यं स्यादित्यनभिधानकल्पना नोचिता । ननु तत्र स्थानिवद्भाव एव न भवति, भावाभावोभयातिदेशादिति चेत्, तत्राह—न चेदं भाष्यमभावातिदेशानङ्गीकारेणैव प्रवृत्तमिति वाच्यम् ।

अथवा योऽत्रादेशः, इति भाष्येण अभावातिदेशस्यापि स्वीकारात् । आगत्य, वैयाघ्रपद्य इत्यत्र इत्यादेः प्रत्युदाहरणेन तदाश्रयणाच्च ।

अत्राच इत्यादेरित्यत्रादिपदेन परस्मिन्नित्यस्य संग्रहो बोध्यः ।

वस्तुतस्तु विचारे क्रियमाणे प्रदीपकृतोऽपि तात्पर्यमित्थं प्रतीयते यत्तु तत्र नैतेभ्यो विज्दृश्यते इत्येवोक्तम्, ननु सर्वत्र दृश्यते इति । अतः प्रकरणबलेनैव सम्बुद्धावेव तस्य योजना कर्तुमुचिता । गोऽर्थमिति भाष्यमहिम्ना "हे लो" इति तु प्रसङ्गादुक्तं तत्र, न तु तत्राग्रहोऽस्ति । एवं चौकारान्तानामुपलक्षणत्वे न कोऽपि विरोधः प्रतिभाति । एवं यत्तु—अपरे तु—इति मते विनातिदेशबाधं प्रत्याहारग्रहणस्य चारितार्थ्यं वक्तुमशक्यमिति यदुक्तम्, तदपि नातिरमणीयम्, अव्युत्पत्तिपक्षे "गो" इत्यादौ तस्य चारितार्थ्यात् । उणादयो व्युत्पन्नानि—इत्यनेन तत्राव्युत्पत्तिपक्षस्यैव ज्येष्ठत्वात् । अतएव "चतुष्पाद्भ्यो ढञ्[1]", "चतुष्पादो गर्भिण्यां[2]" इत्यादि सूत्रेषु चतुष्शब्दे षत्वमुपपद्यते । अन्यथा व्युत्पत्तिपक्षे चतेरुरन् इति निष्पन्नस्य चतुःशब्दस्य विसर्गः

१. पा० सू० ४।१।१३५ २. पा० सू० २।१।७१

प्रत्ययावयवः स्यादिती[1]दुदुपधस्य चाप्रत्ययस्येति सूत्रस्य प्रवृत्तिः कथं स्यात् ? अतोऽतिदेशबाधं विनाऽपि प्रत्याहारग्रहणं चारितार्थमित्यनभिधानकल्पनाया अभावे न दृढं मानम्, एवमग्रेऽपि विमर्शनीयमिति भावः।

**म० भा०—चक्रतुः चक्रुः[2]। यणादेशे कृते अनच्कत्वाद् द्विर्वचनं न प्राप्नोति स्थानिवद्भावाद् भवति।**

(प्रदीपः)—[3]चक्रतुरिति। साच्कस्य द्विवचनमिति स्वविधिर्भवति। ततश्च[4] द्विर्वचनेऽचीत्येतन्न वक्तव्यं भवति।

(उद्द्योतः)—[5]ततश्चेति। एवं च तत्सूत्राकरणे लाघवानुरोधेनापरविधावित्येव वक्तव्यमिति भावः। निन्यतुरित्यादिसिद्धये तस्यावश्यकत्वाच्चिन्त्यमिदम्। भाष्ये तु संभवमात्रेणेदमुदाहृतम्। उरदत्वमपि स्थानिवद्भावेनैव सुलभं लक्ष्यविशेषे। लक्ष्यानुरोधादयमपि रूपातिदेश इति वा कैयटाशयः।

अत्र समीक्षा—[6]अचः परस्मिन्निति सूत्रे परविधावित्यस्य प्रयोजनत्रितयमुक्त्वा चतुर्थं प्रयोजनमुच्यते भगवता भाष्यकृता—चक्रतुः, चक्रुः, इति। अत्र च कृ अतुस् इत्यवस्थायां यणादेशे कृते अनच्कत्वाद् द्विर्वचनं न प्राप्नोति, स्थानिवद्भावाद् भवति। यतश्च स्थानिनि सति यद् भवति, तदादेशे कृतेऽपि भवति इति रीत्या भावातिदेशपक्षे स्वविधावपि अस्य स्थानिवद्भावस्य स्वीकारात्।

अत्र प्रदीपः—अत्र साचकस्य द्विर्वचनमिति द्विर्वचनविधिः स्वरविधिर्भवति। अपरविधावित्यस्य सत्वे तु स्वस्य स्थानिनः सम्बन्धिनि विधावपि स्थानिवद्भावो भविष्यतीति रीत्या यणादेशे कृतेऽपि साच्कतया स्यादेव द्विर्वचनम्। एवञ्च द्विर्वचनेऽचि इत्यस्यावश्यकता नास्ति। एवं तत्सूत्रकरणापेक्षया लाघवादपरविधावित्येवात्र वक्तव्यम्, पूर्वविधाविति तु निःसार्यमिति भावः।

अत्रोद्द्योतकारः—नीधातोर्लिटि प्रथमपुरुषद्विवचनेऽतुसि निन्यतुरिति रूपं भवति। तदर्थं "[7]द्विर्वचनेऽचि" इत्यस्यावश्यकत्वाच्चिन्त्यमिदं प्रदीपकथनम्।

---

१. पा० सू० ८।३।४१    २. म० भा० पृ० ४३५
३. प्र० पृ० ४३५    ४. पा० सू० १।१।५९
५. उ० पृ० ४३५    ६. पा० सू० १।१।५७
७. पा० सू० १।१।५९

अयमाशयः—यदि 'नी अतुस्' इत्यत्र पूर्वं "नी" इत्यस्येकारस्यादेशः स्यात्तर्हि अनेकाच्त्वाभावाद्यण् न स्याद् अपितु इयङादेश एव स्यात्, पश्चात्तु भाव्यमानं द्विर्वचनमियङ्विशिष्टस्यैव स्यात्, ततश्च नेष्टरूपं सिध्यति। "द्विर्वचनेऽची"[1] त्यस्य सत्वे तु तेन रूपातिदेशे आदेशनिषेधे वा स्वीक्रियमाणे "नी" इत्यस्य द्विर्वचने सतीष्टं रूपं सिध्यति।

नन्वेवं तर्हि चक्रतुः, चक्रः, इति भाष्यस्य का गतिः, तत्रा पि द्विर्वचने[2]-चीति सूत्रेणैव कार्यं निर्वाह्यम्—इति जिज्ञासायामुक्तमुद्द्योतकृता भाष्ये तु सम्भवमात्रेणेदमुदाहृतमिति।

एवमुपपाद्य चक्रतुरित्याद्युदाहरणं प्रकारान्तरेणापि योजयितुमुपक्रमते-उरदत्वमपीति।

यणादेशे सति ऋकारस्याभावेऽभ्यासखण्डे उरदित्यस्य कथं प्रवृत्तिः स्यादित्यत उच्यते—स्थानिवद्भावेनैवेति। [3]अचः परस्मिन्निति सूत्रीय-स्थानिवत्वेनैवेति भावः, यथा द्विर्वचने स्थानिवत्वं प्रयोजकम्, तथा उरदत्वेऽपीति भावः। निन्यतुरित्यादौ लक्ष्यानुसारादपरविधावित्यपि रूपातिदेश एवेति भावो वा सम्भाव्यते प्रदीपग्रन्थस्य।

अग्रिमा बेभिदितेत्यादि संबन्धिनी जिज्ञासा तु प्रासङ्गिकी इति न विविच्यते।

**म० भा०—[4]स्तोष्याम्यहं पादिकमौदवाहिं ततः श्वोभूते। शातनीं पातनीं च। नेतारावा गच्छतं धारणिं रावणिं च ततः पश्चात्संस्यते ध्वंस्यते च।**

**इह तावत् पादिकमौदवाहिं शातनीं पातनीं धारणिं रावणि-मिति, अकारलोपे कृते पद्भाव उडल्लोपष्टिलोप इत्येते विधयः प्राप्नुवन्ति। स्थानिवद्भावान्न भवति।**

**स्रंस्यते ध्वंस्यते। णिलोपे कृते [5]"अनिदितां हल उपधायाः क्ङिती"ति नलोपः प्राप्नोति। स्थानिवद्भावान्न भवति।**

---

१. पा० सू० १।१।५९ २. पा० सू १।१।५९
३. पा० सू० १।१।५७ ४. श्लो० भा० पृ० ४३७
५. पा० सू० ६।४।२४

(प्रदीपः)—[1]स्तोष्यामीति। कथयिष्यामीत्यर्थः। पादिकमिति। पादोऽस्यास्तीति ठन्। दीव्यत्यादिषु वाऽर्थेषु ठक्। चरत्यर्थे तु पदिक इत्येव भवति। पर्णादित्वात् ष्ठन्। पद्भावे इके चरतावुपसंख्यानमिति पद्भावः। उदकं वहतीत्यण्। संज्ञायामुदभावः। अपत्ये इन्। श्वो भूतिर्नाम शिष्यः। तस्यामन्त्रणम्। शातनयातनशब्दाभ्यां गौरादित्वान्ङीष्। नेताराविति। शिष्योरामन्त्रणम्। नयेते गुरुमुखात् शास्त्रार्थमिति नेतारौ। धारणरावणशब्दाभ्यामिन्।

(उद्द्योतः)—[2]चरत्यर्थे इति। पद्भाव इके चरतावित्युपसङ्ख्यानादिति भावः। गौरादित्वादिति। शदेर्ण्यन्ताद्युजिति भावः। टित्वान्ङीबिति सप्तमे आकरः। शातनीमित्यादावल्लोपो न इत्यल्लोपप्राप्तिः। धारणीमित्यादि। धृरुभ्यां ण्यन्ताभ्यां ल्युटि णत्वस्यासिद्धत्वा "[3]न्नस्तद्धित" इत्यस्य प्राप्तिः।

अत्र समीक्षा—श्वो भूतिर्नाम शिष्यः। श्व एवाचिरेण भूतिरैश्वर्यं य सः श्वो भूति; तत्सम्बोधने श्वो भूते! अहं (भाष्यकारः) पादिकमित्यादि [4]रूपैरुदाहरणैरस्याचः परस्मिन्नित्यस्य सार्थक्यं जानामि। हे नेतारौ युवामप्यागच्छतम्। युवाभ्यामप्यस्योदाहरणानि ज्ञातव्यानि—पादिकमित्यारभ्य ध्वंस्यते इत्यन्तानि। तत्र पादिकमित्यत्र पादोऽस्यास्तीति विग्रहे पादशब्दाट्ठन्, तस्येकादेशे [5]यस्येति चेत्यकारलोपे जाते, [6]पादः पदिति पद्भावः प्राप्नोति, अनेन स्थानिवद्भावे सति न भवति। यतो हि स्थानिनि सति यद्भवति तदेव भवति यन्न भवति, तन्न भवति। पद्भावस्त्वकाररूपे स्थानिनि सति नैव भवति। अतस्त्राभावातिदेशमहिम्ना इदानीमपि न भविष्यति। एवमेव औदवाहिम्, शातनीम्, पातनीम्, धारणिम्, रावणिम्-एषु लक्ष्येषु सर्वत्राकारलोपे सति उठ्, अल्लोपः, टिलोप इत्येते विधयः प्राप्नुवन्ति। स्थानिवद्भावान्न भवन्ति—इति भाष्याशयः।

अत्र प्रदीपः—पादिकमित्यत्र ठन्, दीव्यतीत्यादिषु ठन् वा।

चरतिरूपेऽर्थे तु पदिक इत्येव भवति—पर्यादिगणीयत्वात्। (इके[7] चरतावुपसङ्ख्यानमिति पद्भावः) औदवाहिमित्यत्र उदकं वहतीति विग्रहे कर्मण्यण्, संज्ञामुदकस्योद्भावः, ततोऽपत्येऽर्थे इन् प्रत्ययः। आदिवृद्धिः

१. प्र० पृ० ४३७ २. उ० पृ० ४३७
३. पा० सू० ६।४।१४४ ४. पा० सू० १।१।५७
५. पा० सू० ६।४।१४८ ६. पा० सू० ६।४।१३०
७. का० वा० १४२३

"औदवाहिरि"ति। शातनपातनशब्दौ गौरादिगणे पठितौ इति स्त्रीत्वविवक्षायां ङीष्। नेतृशब्दोऽपि व्युत्पादितः प्रसङ्गात्। नयेते गुरुमुखात् शास्त्रार्थमिति नेतारौ।

गुरुमुखात् शास्त्रीयं विचारं श्रुत्वा यः स्वान्तःकरणं नयति स शिष्यो नेता शिष्य इत्युच्यते, न त्वाधुनिको नेता, [1]धारणरावणशब्दाभ्यामत इन् इत्यपत्येऽर्थे इन्प्रत्ययः।

अत्रोद्द्योतकारः—शातनीमित्यत्र तु शदेर्ण्यन्ताद् युत्प्रत्ययः [2]"ण्यासश्रन्थो युजि" त्यनेन सूत्रेण। ततश्च टापं बाधित्वा गौणादित्वान्ङीष् भवति। सप्तमाध्याये भाष्ये तु ल्युटि सति टित्वान्ङीष् प्रत्यय उक्तः। ततोऽपि प्रकृते न कोऽपि विशेषः। एवञ्च शातनीमित्यादौ [3]अल्लोपोऽन इत्यल्लोपस्य प्राप्तिः स्थानिवद्भावाद्वार्यते। धारणिमित्यादौ तु धृरुभ्यां ण्यन्ताभ्यां ल्युटि [4]णत्वस्यासिद्धत्वान्नस्तद्धिते, इति टिलोपस्य प्राप्तिः, स्थानिवद्भावाद्वारिता भवतीति भावः।

एतावदेव भाष्यं प्रदीपोद्द्योताभ्यां व्याख्यातमस्ति। अवशिष्टं किञ्चिद् विचार्यते—

स्तोष्यामि—इति भाष्यपदस्य व्याख्यानं प्रदीपे कृतम्—कथयिष्यामि, इत्यर्थ इति—तत्रास्य प्रकृतसूत्रस्य प्रयोजनानि कर्सतया नेयानि।

ननु भाष्ये ततः पश्चादिति, प्रयोगः कथमत्र कृतः, अन्यारादितरर्ते इत्यस्यापवादभूतेन षष्ठ्यतसर्थेति षष्ठ्याः प्राप्तौ तस्य पश्चादिति वक्तव्यं स्यादिति जिज्ञासायामुच्यते—अस्मादेव भाष्यप्रयोगात्तत्र षष्ठ्या अनित्यत्वं ज्ञाप्यते, तेन मुहूर्तादुपरि उपाध्यायश्चेदागच्छेदिति प्रयोगोऽपि उपपद्यते। अथवा षष्ठ्यान्तादेव तत्र सार्वविभक्तिकस्तसिः, "[5]इतराभ्योऽपि दृश्यन्ते" इति सूत्रात्।

वस्तुतस्तु भवदादियोगे एव तस्येष्टतया नित्यत्वज्ञापनमेव श्रेयस्करम्। चरत्यर्थे पद्भावे—इत्यादिः पाठः प्रदीपेऽपि, उद्द्योतेऽपि। अत एकत्रायं न मन्तव्यः। सम्भाव्यते उद्द्योतकृता प्रदीपे न दृष्टोऽयं पाठः। संस्यते—इत्यादिकं तु ण्यन्तात्साधनीयम्, न तु केवलाद्भावे लकारः, अन्यथा अनि-

---

१. पा० सू० ४।१।९५
२. उ० पृ० ४३७
३. पा० सू० ६।४।१३४
४. पा० सू० ६।४।१४४
५. पा० सू० ५।३।१४

दितामिति नलोपः स्यात् । [1]ण्यन्तावस्थायामपि णिलोपे [2]सति "अनिदितामि"ति सूत्रेण नलोपः कथं न भवति ? इति जिज्ञासायामेवैतत्प्रयोजनं सङ्गच्छते—[3]यदचः परस्मिन्निति स्थानिवद्भावेनैव तद्वारणात् । एवं चैतान्युदाहरणानि सुष्ठु संगतानि भवन्तीति भाष्याभिप्रायो विशदीकृतः ।

**म० भा०—[4]उत्तरपदलोपे च दोषो भवति । दध्युपसिक्ताः सक्तवो दधिसक्तवः । अचीति यणादेशः प्राप्नोति ।**

(प्रदीपः)—[5]दधिसक्तव इति । समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्चेति लोपस्य परनिमित्तता । यद्यप्यत्र पदान्तविधौ नेति सिध्यति, तथापि परिहारान्तरस्याभिधास्यमानत्वादेतन्नोक्तम् ।

(उद्द्योतः)—[6]लोपस्येति । समानाधिकरणेन सुपेत्यधिकारात् परसन्निधाने जायमानत्वेन परनिमित्तत्वमित्यभिमानः । वस्तुत एतावता परनिमित्तत्वे "पादशतस्ये"ति लोपस्य परसन्नियोगेन विधीयमानस्य परनिमित्तत्वापत्तिरितीदमपि चिन्त्यम् । "परिहारान्तरस्ये" त्येवात्रापि समाधिरिति तत्त्वम् ।

अत्र समीक्षा —दध्ना उपसिक्ताः, दध्युपसिक्ताः, ते च ते सक्तवश्चेति दधिसक्तवः, अत्रोत्तरपदस्य लोपे [7]सत्यनेनैवाचः परस्मिन्निति सूत्रेण तस्य स्थानिवद्भावे [8]सतीको यणचीति यणादेशः प्राप्नोतीति भाष्याभिप्रायः ।

अत्र प्रदीपः —नन्वुत्तरपदलोपस्य परनिमित्तकता नास्ति, तर्हि कथमस्य सूत्रस्य प्राप्तिरिति शङ्कायामुक्तम्—प्रदीपकृता समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्चेति लोपस्य परनिमित्तकता । यद्यप्यत्र पदान्तविधौ नेति निर्वाहः शक्यः तथापि परिहारान्तरदृष्टया एतद् योजनीयमतस्तस्य चर्चा नोक्ता ।

अत्रोद्द्योतः—अत्रोत्तरपदलोपस्य परनिमित्तता न सम्भवति, प्रदीपोक्तिस्तु अभिमानगर्भा । यतश्च समानाधिकरणेन सुपेत्यधिकारात्परसन्निधाने जायमानतया कथंचित्परनिमित्तवता न तु वास्तविकी सा ।

वस्तुत एतावता परनिमित्तत्वे पादशतस्येति लोपस्य परसन्नियोगेन

१. पा० सू० ६।४।२४ — २. पा० सू० ६।४।५४
३. पा० सू० १।१।५७ — ४. भा० वा० ४५१
५. प्र० पृ० ४४८ — ६. उ० पृ० ४४८
७. पा० सू० १।१।५७ — ८. प्र० पृ० ४४८

विधीयमानस्य परनिमित्तत्वापत्तिरितीदमपि चिन्त्यम्। अयं भावः प्रदीपोक्तौ अभिमानगर्भत्वे बीजमिदम्। अत्रापिनापूर्वस्य हेतोः समुच्चयः मूलभाष्यस्यासङ्गतिं परिहरन्नाह– परिहारान्तरस्येत्येवात्राऽपि समाधिरिति तत्त्वम्।

अत्रेदमपि विचारणीयमस्ति––प्रदीपग्रन्थे––[1]समानाधिकरणाधिकारे इत्यादिवार्तिकमुक्तं तस्यायमर्थः––[2]समानाधिकरणाधिकारे तृतीयान्तपूर्वपदकं च सुबन्तं समर्थेन सुबन्तेन समस्यते, उत्तरपदलोपश्च वक्तव्यः।

प्रदीपकृता परिहारान्तरस्याभिधास्यमानत्वादिति यदुक्तम्, तस्योपायस्योपायान्तराभावादिति नीत्या योजनीयम्। अग्रिमो वक्ष्यमाणोपायोऽत्र नोक्तः, प्रयोजनाभावात्। यदि तु तस्य परिहारस्यैकदेशित्वं स्यात्तर्हि तदीयां चर्चां विधाय तस्य खण्डनमावश्यकं स्यात्।

**इति महाभाष्य-समीक्षणे चतुर्थाध्यायस्य तृतीयपादः।**



---

१. प्र० पृ० ४४८

२. म० भा० आ० सू० १।१।८।३

# अथ चतुर्थः पादः

**म० भा०- [1]पदान्तविधिं प्रति न स्थानिवदित्युच्यते। तत्र वेतस्वानिति रुः प्राप्नोति।**

(प्रदीपः)—[2]न पदान्त। वेतस्वानिति। भावसाधनविधिशब्दाश्रयेणोच्यते। वेतसशब्दात् [3]कुमुदनडवेतसेभ्यो ड्मतुबिति ड्मतुपि टिलोपे कृते स्वादौ पूर्वं पूर्वं पदमिति पदसंज्ञायां सकारः पदान्तत्वं प्रतिपद्यत इति पदान्तताया विधीयमानत्वात् स्थानिवत्वनिषेधाद् रुत्वप्रसङ्गः।

(उद्द्योतः)—[4]न पदान्तेति। ननु स्थानिवत्वनिषेधं विना सस्य पदान्तत्वेनासिद्धेस्तस्य रुत्वसंपादके पदत्वे स्थानिवत्वस्य दुर्वारत्वात् सान्तस्य पदत्वाभावेन कथमत्र रुत्वप्राप्तिरत आह—भावेति। पदान्तेति च भावप्रधानो निर्देश इत्यपि बोध्यम्। इदं चिन्त्यम्। द्विर्वचनादिसाहचर्येण पदान्तपदार्थस्य शास्त्रीयस्यैव ग्रहणौचित्यात्। भाष्यं त्वेवं व्याख्येयम्—रुत्वस्य पदचरमावयवत्वेन तत्र कर्तव्ये तन्निष्पादकपदत्वे च कर्तव्ये भावसाधनविधिशब्दाश्रयणे टिलोपस्य स्थानिवत्वनिषेधाद्रुत्वं प्राप्नोतीत्यर्थः। यद्यपि पदसंज्ञा न पदचरमावयवो नापि पदान्तस्थाने विधिः, तथापि तस्याः कार्यार्थत्वात् कार्यस्य च रुत्वस्य तत्त्वान्न दोषः। पदचरमावयवसाधकस्यापि तत्त्वेन ग्रहणमित्याशयः।

अत्र समीक्षा—पदस्यान्तः पदान्तः, तस्य विधिः, कर्मणि षष्ठ्या समासः विधानं विधिरित्यत्र भावे [5]"उपसर्गे घोः कि"रित्यनेन किप्रत्ययः। एवञ्च पदान्तकर्मके विधाने इत्यर्थ आयाति। तत्र पदस्यान्तावयवे विधेये सति परनिमित्तोऽजादेशो न स्थानिवदित्यर्थः फलति। यथा ओदनकर्मके भोजने ओदन एव भोज्यो भवति, तथैव पदान्तकर्मके विधानेऽपि पदान्तस्य विधेयता फलति। तत्र (तथा सति) वेतस्वानित्यत्र रुः प्राप्नोति। वेतस्शब्दात् ड्मतुपि टिलोपे पदसंज्ञायाः सत्वद्वारा, सत्वस्य च साक्षात् पदचरमावयवत्वेन तयोः कर्तव्यत्वावस्थायां प्रकृतसूत्रेण न पदान्तेत्यनेन टिलोपस्य स्थानिवत्वनिषेधे सान्तस्य पदसंज्ञायां रुत्वं प्राप्नोतीति भाष्याशयः।

---

१. म० भा० आ० सू० १।१।८।३ — २. प्र० पृ० ४५२
३. पा० सू० ४।२।८७ — ४. उ० पृ० ४५२
५. पा० सू० ३।३।९२

अत्र प्रदीपकारो व्याचष्टे –वेतस्वानित्यत्र रुत्वापत्तिर्दोषः भाव"-साधनविधिशब्दाश्रयेणोच्यते ।

वेतस्शब्दात् ड्मतुपि प्रत्यये टिलोपे कृते [1]स्वादिष्विति पदत्वे सति सकारः पदान्तो भवति, इति पदान्तत्वस्य विधीयमानत्वे स्थानिवद्भाव-निषेधाद् रुत्वं प्रसजति—इति भावः ।

अत्रोद्द्योतकारो व्याख्याति – यावता वेतस्वानित्यत्र स्थानिवत्वं न निषिध्येत, तावता सकारस्य पदान्तत्वं न सिध्यति, पदान्तत्वासिद्धिदशायां रुत्वसम्पादके पदत्वे स्थानिवद्भावस्य दुर्वारतया सान्तस्य पदसंज्ञाया अभावेन कथमत्र रुत्वं प्राप्नोति । अत उक्तं प्रदीपकारेण भावसाधनेति । पदा-न्तेत्यपि च भावप्रधानो निर्देश इत्यपि बोध्यम् । वस्तुतस्तु द्विर्वचनादि साह-चर्येण पदान्तपदार्थस्य शास्त्रीयस्यैव ग्रहणेन तत्रापि भावप्रधानता स्वीकारो न युक्तः ।

ननु तर्हि भाष्यं कथं व्याख्येयमिति चेत्, श्रूयताम्—रुत्वस्य पदचरमाव-यवत्वेन तत्र कर्तव्ये तन्निष्पादकपदत्वे च कर्तव्ये भावसाधनविधिशब्दाश्रयणे टिलोपस्य स्थानिवत्वनिषेधाद्रुत्वं प्राप्नोतीत्यर्थः । अयं भावः—रुत्वं पदस्य चरमावयवः, यतः पदान्तस्य सस्य स्थाने स विधीयते, एवञ्च तस्मिन् कर्तव्ये तत्सम्पादकपदत्वे च कर्तव्ये वेतस्शब्दाकाररूपस्य टेर्लोपस्य स्थानिवत्वमनेन निषिध्यते—इति रुत्वस्य प्राप्तिरस्त्येव । यद्यपि पदसंज्ञा न पदस्य चरमा-वयवः, नापि च पदान्तस्थानीयो विधिः, तथापि या या संज्ञा सा सा फलवती, इति सिद्धान्तेन पदसंज्ञाया अपि कार्यार्थतया कार्यस्य च रुत्वस्य पदचरमावयवत्वेन ग्रहणमिति भाष्याभिप्रायः ।

अत्रोद्द्योतग्रन्थे स्थानिवत्वस्य दुर्वारत्वादित्युक्तम्, तस्यायमाशयः—पदान्तशब्दस्य यथा श्रुतार्थकत्वे, विधिशब्दस्य च कर्मसाधनत्वे; पदस्यान्तः पदान्तः, स चासौ विधिश्चेति कर्मधारयसमासे—पदस्य चरमावयवे विधेये कर्तव्ये स्थानिवत्वं नेत्यर्थात् पदान्तस्य विधिरिति शेषषष्ठ्यासमासे तु पदा-न्तस्थानिकविधेयत्वस्य चाभावेन तत्कर्तव्यत्वे प्रकृतसूत्रेण अकाररूपटिलोपस्य स्थानिवत्वनिषेधस्याप्राप्तेरिति । विधिशब्दस्य कर्मसाधनत्वे पदान्तश्चासौ विधिश्चेति कर्मधारयसमासेऽन्यः कोऽपि दोषो नास्ति, विशेषणताप्रयोजकस्य विधिशब्दस्य पूर्वनिपातादृते । यदि तु पूर्वनिपातप्रकरणमनित्यम्—समुद्रा-भ्रादघ इत्यादि निर्देशेनेत्युच्यते तदा स समासः साधुरेव ।

---

१ पा० सू० १।४।१७

अत्र शेषषष्ठ्यासमासपक्षो दूषितः, कर्मषष्ठ्यासमासपक्षः समादृतः [1]उपपदविभक्तेः कारकविभक्तिर्बलीयसी इत्यपि सिद्धान्तस्तत्र प्रयोजकः। पदान्तस्थानिकविधावित्यस्य पदान्तत्वावच्छिन्नोद्देश्यताके विधौ इत्यर्थे तु एषोयन् हसति, सुलोपापत्तिर्दोषः स्यात्। पदचरमावयवे विधेये-इत्यर्थे तु सुलोपे कर्तव्ये स्थानिवद्भावेन हल्परत्वं नास्ति, उत्वे तु स्थानिवत्वं न भवति, उत्वस्य पदचरमावयवत्वेनानेन स्थानिवत्वनिषेधादिति भावः।

**म० भा०--[2]वाचिकषडिको न संवदेते। कर्तव्योऽत्र यत्नः।**

(प्रदीपः)--[3]कर्तव्योऽत्र यत्न इति। एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य इति वाचिकः सिद्धः। षडिकस्तु "षष्ठाजादि वचनात्सिद्धम्" इत्युत्तरपदलोपाभावे ठाजादाविति लोपे यस्येति लोपे च सिद्धिः।

(उद्द्योतः) – [4]सिद्धान्त्याह—कर्तव्योऽत्रेति। पञ्चमे वक्ष्यमाणं यत्नं दर्शयति—एकेति। तथा चाज्झलादेशत्वाद्वाचिके भत्वेऽपि न स्थानित्वमिति भावः। एवं च भावसाधनपक्षेऽत्र स्थितः।

अत्र समीक्षा--[5]न पदान्तेति सूत्रे यदि कर्मणि कि प्रत्यये सति निष्पविधिशब्दो गृह्यते, तर्हि वाचिकः, इति प्रयोगः आञ्जस्येन सिध्येत्, यतो हि वागाशीर्दत्तशब्दात् ठचि, ठाजादावूर्ध्वं [6]द्वितीयादच इति सूत्रेण शीर्दत्तशब्दलोपे, ठस्यैकादेशे, यस्येति लोपे, साक्षात्परम्परया इत्याद्युद्द्योतदिशा भसंज्ञायामपि कार्यायां स्थानिवत्वस्य निषेधाद् चकारान्तस्य वाच्-शब्दस्यैव भपदसंज्ञयोः प्राप्तौ सत्यां समानावधिकतया भसंज्ञया पदसंज्ञयाबाधः स्यादिति कुत्वमापादयितुं न शक्यते। परन्तु अस्मिन् पक्षे षडिक इति न सिध्येत्, षडङ्गुलिदत्तशब्दाट्ठचि, ङ्गुलिदत्तभागस्य लोपे, यस्येति लोपे तत्रापि उकारान्तभागे भत्वेन पदत्वस्य बाधे जश्त्वं न स्यात्।

एवञ्च सति यदि भावार्थक किप्रत्ययातो भावशब्दोऽत्र गृह्यते, तदा षडिक इत्यस्य सिद्धावपि वाचिको न सिध्येत्, चकारस्य पदान्ततया कुत्वप्रसङ्गात्। एवं चैकपक्षेणोभयोः साधुत्वं नैव सम्भवतीति पूर्वपक्षिभाष्याशयः।

---

१. प० शे० प० १०३
२. म० भा० आ० सू० १।१।८।३
३. प्र० पृ० ४५५
४. उ० पृ० ४५५
५. सा० सू० १।१।५८
६. पा० सू० ५।३।८३

तस्मादद्भिर्दधाति स्वयं भगवान् भाष्यकारः—कर्तव्योऽत्र यत्न इति। अत्रोभयोः साधुत्वार्थैकपक्षे एव प्रयत्नो विधेय इत्यर्थः। तत्र प्रदीपकारः—एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य इति वाचिकः सिद्ध इति यत्नः कर्तव्य इति भाष्यस्याभिप्रायः। तथा चानेन प्रयत्नेन वाचिक इत्यत्राशीर्दत्तशब्दस्य लोपो न तु शीर्दत्त इत्यस्य, नापि [1]यस्येति चेत्याकारलोपः। एवञ्च लोपस्यान्मात्रस्थानिकादेशत्वाभावात् भत्वेऽपि स्थानिवत्त्वाभावेन चकारान्तस्यैव भपदसंज्ञयोः प्राप्तौ समानावधिकतया भसंज्ञया पदसंज्ञायाः बाधे कुत्वं नापादयितुं शक्यमिति भावः।

षडिक इत्यस्यापि साधुत्वप्रकारं दर्शयति—षडिकस्तु इति—[2]अत्र षषष्ठाजादिवचनात्सिद्धमिति वार्तिकेन ङ्गुलिदत्तशब्दस्य लोपे, [3]पुनर्यस्येति चेति सूत्रेण अकारलोपे सति—अस्य लोपस्याज्मात्रस्थानिकादेशत्वात् भत्वे स्थानिवद्भावेनाकारान्तस्य भसंज्ञायाः प्राप्तौ, षकारान्तस्य च पदसंज्ञायाः प्राप्तौ समानावधिकत्वाभावात् भत्वेन पदत्वस्य बाधाभावे षकारस्य पदान्तलक्षणजश्त्वं सम्भवत्येवेति भावः।

अत्रोद्द्योतकारः—एकाक्षरपूर्वपदान्तानामियत्नेनाशीर्दत्तशब्दस्य लोपे, तस्य लोपस्याज्झलादेशतया वाचिकशब्दे भत्वेऽपि न स्थानिवत्वम्। एवञ्च दोषणात्परिहारैकभावसाधनपक्षोऽत्र सिद्धान्तितो भगवता भाष्यकृता। कर्मसाधनविधिशब्दपक्षे तु पदान्तादिशब्देन विधिशब्दस्य कर्मधारयसमासः, शेषषष्ठीसमासो वेति विकल्पे प्रथमः कल्पो न सम्भवति, तथा सति विधिशब्दस्य क्रियापरत्वेन विशेषणताप्रयोजकत्वात्पूर्वनिपातः स्यात्।
द्वितीयकल्पोऽपि न सम्भवति, तथात्वे हि पदान्तस्य कस्मिंश्चित्कर्तव्यं न स्थानिवदित्यस्य पर्यवसानेन वृक्षव्रकारलोपः प्रसज्येत, "[4]लोपो व्योर्वलि" इत्यनेन। द्वन्द्वान्तर्गतानां द्विर्वचनादीनां समीचीनरीत्यान्वयोऽपि न स्यात्, तस्मादन्तरङ्गत्वञ्च भावसाधन एव विधिशब्दः स्वीकार्यः। कर्मषष्ठ्या समासश्चाभ्युपेय इति भावः।

**म० भा०—[5]नैवं विज्ञायते—पदस्यान्तः पदान्तः, (पदान्तस्य विधिः पदान्तविधिः) पदान्तविधिं प्रतीति। कथं तर्हि? पदे**

---

१. पा० सू० ६।४।१४८
२. प्र० पृ० ४५५
३. पा० सू० ६।४।१४८
४. पा० सू० ६।१।६६
५. म० भा० पृ० ४५५

**अन्तः पदान्तः, (पदान्तस्य विधिः पदान्तविधिः) पदान्तविधिं प्रतीति ।**

(प्रदीपः)—[1]पदेऽन्त इति । न च डमतुप्प्रत्ययः पदम् । एवं षडिके इक्प्रत्ययो न पदमिति नास्ति स्थानिवत्वनिषेधः ।

(उद्द्योतः)—[2]अथ वेतस्वानित्येवं जातीयकानामेतदनुदाहरणत्वमेवेति बोधयितुं वास्तवं सिद्धान्तमाह - नैवमिति । तद्व्याचष्टे—न च डमतुबिति ।

अत्र समीक्षा—भाष्यकृता वेतस्वानित्यत्र रुत्ववारणाय [3]"न पदान्ते" ति सूत्रे पदस्यान्त इति षष्ठीसमासं निराकृत्य पदेऽन्त इति सप्तमीघटितः "[4]सुप्सुपे" ति समासोऽभ्युपेयते । तथा च पदपरकत्वविशिष्टो यान्तस्तस्य विधिं प्रति स्थानिवन्नेत्यर्थे सति वेतस्वानित्यत्र पदत्वपरत्वाभावेन न स्थानिवत्वनिषेध इति तात्पर्यम् ।

अत्र प्रदीपकारः - वेतस्वानित्यत्र [5]"कुमुदनडवेतसेभ्यो डमतुबि" ति डमतुप्प्रत्ययः, स तु न पदमिति पदपरकत्वविशिष्टान्तत्वं सकारे नास्तीति भावः । अनयैव रीत्या षडिकशब्देऽपि इक्प्रत्ययो न पदमिति पदपरत्वाभावे नैव स्थानिवत्वनिषेधः संभवति पदसंज्ञायाः कर्तव्यत्वेऽपि । तथा च वेतस्वानित्यत्र सान्तत्वाभावाद् भत्वाप्राप्तौ पदत्वसत्त्वेऽपि सकारस्य पदान्तत्वाभावान्न रुत्वापत्तिः । एवं "ब्रह्मबन्ध्वा" इत्यादौ उकारान्ते पदत्वबाधेन भसंज्ञायामपि धकारस्य पदान्तत्वाभावान्न जश्त्वापत्तिः । तथा षडिक इत्यत्राकारान्तस्य भत्वेऽपि षान्तस्यान्तर्वर्तिविभक्त्या पदत्वेन जश्त्वमुपपद्यते एव ।

अत्रोद्द्योतः—नेवं विज्ञायते पदस्यान्त इत्यादि भाष्यावतरणं दर्शयति उद्द्योतकारः—अथ वेतस्वानिति । एवं जातीयकानि पदान्तविधौ स्थानिवत्वनिषेधस्योदाहरणानि भवितुं नार्हन्तीति बोधयितुं वास्तवः सिद्धान्तो दर्श्यते भाष्यकृता—नैवमिति । तस्यैव भाष्यस्याशयं विशदयति प्रदीपकारः न च डमतुबिति । तस्याशय उक्त एव । एवं ब्रह्मबन्धूशब्दे अकारो न पदमित्यपि मन्तव्यम् ।

इतोऽग्रे उद्द्योतकारः स्वयमाक्षेपसमाधानाभ्यां भाष्यं लापयति नन्विदम-

१. प्र० पृ० ४५५ २. उ० पृ० ४५५
३. पा० सू० १।१।५८ ४. पा० सू० २।१।४
५. पा० सू० ४।२।८७

युक्तमित्यादिना। अयं भावः—यदि पदेऽन्त इति पक्षोऽत्र गृह्यते तर्हि "गोचा" इत्यत्र अवङापत्तिः स्यात्, [1]"गतिकारकोपपदानां कृद्भिः सह समासे त्वुत्तरपदत्वे प्रत्ययलक्षणनिषेधेन चोत्तीस्य पदत्वाभावादनेन स्थानि-[2]वत्वनिषेधाप्राप्तो अचोऽकारलोपस्य स्थानिवत्वे "अवङ्स्फोटायनस्ये"ति अवङि सति "गवाचा" इति स्यादिति चेदुच्यते—उत्तरपदं यत्र कार्यि तत्रैव [3]प्रत्यासत्तिन्यायेनैतन्निषेधस्याप्रवृत्तिः इति स्वीकारे न कोऽपि दोषः। एतद्-भाष्यमपि कार्यित्वपक्षस्वीकारे प्रमाणतया ग्रहीतुं शक्यते। सुबुत्पत्तेः पूर्वं समास इति वचनस्यैतद्विषयं नित्यत्वमपि स्वीकार्यं स्यात्, अतश्च न तस्य प्रवृत्तिः। एवं च पदस्यान्तः, पदेऽन्त इति विग्रहद्वयप्रदर्शनेन पदचरमा वयवे कर्तव्ये परपदस्थाजादेशस्यैव न स्थानिवत्वमिति भाष्यतात्पर्यमसेयम्।

कानि सन्ति, कौ स्तः, को स्तः, इत्यादीन्येवोदाहरणानि मन्तव्यानि। इतोऽग्रे प्रदीपकारस्य किञ्चित्खण्डनं कृतमुद्द्योतकृता। तत्तु नातीवसमीचीनं यादृशं तत्रत्यं भाष्यम्, तादृशं व्याख्यातं तेन, यादृशं वाद्यं भवति, तादृश एव ध्वनिर्निःसरति—इति संक्षिप्तं निभाल्यताम्।

**म० भा० [4]अथवा-यथैवान्यान्यपि पदकार्याण्युपप्लवन्ते-जश्त्वं च। एवमिदमपि पदकार्यमुपप्लोष्यते। किम्? भसंज्ञा नाम।**

(प्रदीपः)—[5]अथवेति। यचि भमित्यत्र तक्षो मत्वर्थ इत्यत्र च पदमिति वर्तते। तेन पदं सद्भं भवतीति लब्धे पदत्वे तन्निबन्धनरुत्वप्रतिबन्धार्था भसंज्ञा तद्विषयत्वात् पदान्तविधिरिति स्थानिवत्वनिषेध इति भत्वादुत्वाभावः सिद्धः।

(उद्द्योतः) - [6]भाष्ये - पदस्यान्त इति पूर्वपक्षे पूर्वपक्ष्यभिमते एकपदस्थाजादेशस्य स्थानिवत्वनिषेधेऽपि न दोष इति प्रौढ्या प्रतिपादयितुं भसंज्ञाऽत्र बाधिका भविष्यतीति स्वोक्तेरेकदेश्याशयमाह - अथवेति।

अत्र समीक्षा—यथा रुत्वजश्त्वप्रभृतीनि पदकार्याणि उपप्लवन्ते पदान्तविधिशब्देन गृह्यन्ते, तथैव भसंज्ञारूपमपि कार्यं पदान्तविधिशब्देन

---

१, पा० सू० ६।२।१३९ २. पा० सू० ६।१।१२३
३, ल० श० शे० १।१।५६ ४. म० भा० पृ० ४५६
५. प्र० पृ० ४५६ ६. उ० पृ० ४५६

गृह्यते एवेति भाष्याभिप्रायः। अत्र प्रदीपः—[1]यचि भम्, [2]तसो मत्वर्थे, च पदमिति [3]"सुप्तिङन्तं पदमि"ति सूत्रतोऽनुवर्तते। ततश्च पदं सद्भं भवतीति सूत्रार्थे सति पदत्वसम्पत्तौ सत्यामेव तन्निबन्धनरुत्वस्य प्रतिबन्धाय भसञ्ज्ञा प्रार्थ्यते इति कृत्वा साऽपि भवति पदान्तविधिरिति स्थानिवद्भाव-निषेधे सति भत्वादुत्वं न भविष्यति।

अत्रोद्द्योतकारः प्रदीपं व्याख्यातुमारभते—तत्र प्रदीपव्याख्या एक-देशिभाष्याभिप्रायपोषिका, अत एव पूर्वं "भसंज्ञाऽत्र बाधिका भविष्यतीत्यु-क्तम्।" यः संप्रति पदान्त, इत्येतत्तु न भाष्याक्षरस्वारस्यानुगुणम्। एवं चात्र प्रदीपव्याख्या नोचिता, तावताऽपि भसंज्ञायाः पदान्तविधित्वानुप-पादनात्। किं च यथा कारकाधिकारे कारके सत्कर्मसंज्ञां स्यादित्यर्थेनो-भयोः संज्ञयोः समावेशो विधीयते, तथैवात्रापि प्रसज्येत, किन्तु अत्र भपद-संज्ञयोः समावेशो नैवेष्टः। अतश्च भाष्यस्यायमाशयो मन्तव्यः—यथा रुत्वजश्त्वादीनां साक्षात्प्रापकः प्रतिबन्धको वा स्थानिवद्भावः प्रतिषिध्यते, तथा भसंज्ञाविषयकातिदेशस्यापि परम्परया सत्वात् (पदचरमावयवकार्य-त्वात्) स्थानिवत्वनिषेधः सुलभ इति भावः। इतोऽग्रे भाष्ययोजना इत्थं विहिता—यथैवान्यानि पदकार्याणि पदचरमावयवकार्याणि रुत्वजश्त्वादीनि तत्प्रापकपदसंज्ञारूपं चात्र सूत्रे उपप्लवन्ते—पदान्तविधिशब्देन गृह्यन्ते। एवमिदमपि भसंज्ञारूपमपि पदकार्यं परम्परया पदचरमावयवप्रापकं प्रति बन्धकं वा पदचरमावयवत्वेन गृह्यते इत्यर्थः मूलभाष्यस्य। अयं भावः—यथा पदान्तपदे उपस्थितत्वात् पदत्वद्वारिका परम्परा गृह्यते, तथा पदत्व-बाधकतया भत्वस्यापि प्रत्त्यासत्या तद्द्वाराऽपि पदचरमावयवविषयस्थानि-वत्वप्रतिषेध इति।

इतोऽग्रे उद्द्योतकृता षडिकादिप्रयोगाणामुपपत्तिः प्रदर्शिता, सा तु प्रासङ्गिकी—इति न विमृश्यते।

अत्रेदमवश्यं समालोचनीयमस्ति—यदुद्द्योतकृता अत्रत्या प्रदीपव्याख्या चिन्त्या इत्युक्तम्, तत्तु नातीवरमणीयम्- यतो ह्यङ्गं सन्दर्भं भवतीति रीत्या व्याख्याने भत्वस्यापि अङ्गोद्देश्यककार्यत्वं यथोच्यते, तथैवात्रापि पदं सह भं भवतीति व्याख्यायां भत्वस्य पदविधित्वं पदोद्देश्यकविधित्वमाग-

---

१. पा० सू० १।४।१८ २. पा० सू० १।४।१९
३. पा० सू० १।४।१४

च्छत्येव, एवमेव पदपरक्रान्तोद्देश्यकविधित्वं पदसम्बन्ध्यन्तोद्देश्यकविधित्वमपि साक्षात् परम्परया वा योजयितुं शक्यमेव ।

**म० भा०--[1]प्रतिषेधे स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति वक्तव्यम् । स्वर—आर्कर्षिकः । चिकीर्षकः । जिहीर्षकः । यो ह्यन्यः आदेशः, स्थानिवदेवासौ भवन्ति---पञ्चारत्न्यो दशारत्न्यः'' स्वरः ।**

अत्र समीक्षा –[2]न पदान्तेति सूत्रके स्वरे कर्तव्ये दीर्घे कर्तव्ये यलोपे च कर्तव्ये लोपरूप एवाजादेशः स्थानिवत्वं न लभते, अन्यस्तु लभते एव, अतः –चिकीर्षक इत्यादौ [3]लितीतिसूत्रेण ककारोत्तरस्येकारस्योदात्तत्वे कार्ये सनोकारस्य लोपो न स्थानिवत्वं लेभे, इत्यचाव्यवधानाभावे इकारस्योदात्तता सिध्यति ।

अत्र प्रदीपाशयः—आर्कर्षिक इति भाष्योदाहरणे आकर्षात् [4]ष्ठल् इति सूत्रेण ष्ठल्प्रत्ययः [5]यस्येति लोपस्य स्थानिवद्भावे ककाराकारस्य उदात्तत्वं न स्यात् । कारक इत्यादिप्रयोगे च [6]स्वरविधौ व्यञ्जनमविद्यमानवदिति व्यञ्जनस्याविद्यमानवद्भावेऽनन्तरस्य स्वरोद्देश्यस्य सम्भवेऽन्यव्यवधाने न स्यात् ।

अत्र पुनः प्रदीपः—[7]आर्कर्षिक इति प्रयोगे चरतीत्यर्थे आकर्षरूपप्रातिपदिकप्रकृतिकतृतीयान्तात्तदादेः आकर्षात् ष्ठल्, इति सूत्रेण ष्ठल्प्रत्ययः । ठस्येक इतीकादेशः, [8]यस्येति चेत्यकारलोपः, तस्य स्थानिवत्वात् ककारोत्तरवर्त्यकारस्योदात्तत्वं न स्यात् । अनया भाष्येष्टयाऽस्य लोपात्मकाजादेशस्य स्थानिवत्वनिषेधे तु सस्वरः सिध्यति । ननु [9]लितीति स्वरविधानसामर्थ्याद् व्यवहितेऽप्ययं स्वरः प्रवर्तताम्, किमनया निषेधबोधकियेष्टया इति चेदुच्यते-करोतीति कारक इत्यादौ [10]"स्वरविधौ व्यञ्जनमविद्यमानवदिति परिभाषया एकस्य रेफरूपस्य हलो विद्यमानवद्भावे सत्यस्य स्वरस्य चारितार्थ्येऽत्राकारस्य स्थानिवत्वेन व्यवधायकत्वे सस्वरो न स्यात् । यत्र

१. भा० वा० ४६३ २. भा० सू० १।१।५८
३. पा० सू० ६।१।१९३ ४. पा० सू० ४।४।९
५. पा० सू० ६।४।१४८ ६. प० शे० प० ८०
७. प्र० पृ० ४५८ ८. पा० सू० ६।४।१४८
९. पा० सू० ६।१।१९३ १०. प० शे० प० ८०

तु व्यवधानाभावः संभवति, तत्र व्यवधानं न सोढव्यं भवति यत्र तु व्यवधानसहनं गले पतितं भवति, तत्रापि मध्यपातिनो व्यवधायकपदार्थान् अनादृत्य व्यवहरणीयम्। प्रकृते ष्ठलो लित्करणेन लितीति स्वरो व्यवधानेऽपि प्रवर्तेत – इति चेत् – तदेतन्न रमणीयतामादधाति, "आकर्ष"शब्दे आद्याकारस्यापि पक्षे स्वरः प्रसज्येतेति स्थानिवत्वनिषेधपरे ष्ठिरवश्यमभ्युपेया, [1]"न पदान्तेति सूत्रेणैव निर्वाहे सिद्धे इष्टेः प्रयोजनं तु स्वयं भगवतैवोक्तमस्ति—यो ह्यन्य आदेशः, स तु स्थानिवद्भवत्येव। पञ्चारत्न्यौ दाशरत्न्यः, इति।

अत्रोद्द्योतः—नन्वस्या इष्टेरभावेऽकारलोपस्य स्थानिवद्भावे सति तस्यैवाकारस्योदात्तस्वरः आपद्येति कुतो न शङ्क्यत इति चेदुच्यते–तस्य लुप्ततया तदुच्चारणाभावेन तदाश्रयस्यापादयितुमशक्यत्वात्तस्य न स्वरापत्तिर्दत्ता, अथवा स्वोद्देश्यकविधौ स्थानिवद्भावो यं न भवत्यपि तु स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये एवायं स्थानिवद्भावः।

यत्र तु व्यवहितेऽप्यित्यादि प्रदीपग्रन्थमवतारयति–नन्विति। [2]"लिती"-ति सूत्रे प्रत्ययात्पूर्वमित्यनुवर्त्य पूर्वग्रहणस्य सत्वान्निर्दिष्टपरिभाषा नोपतिष्ठते, पूर्वशब्दस्तु व्यवहितेऽपि वर्तते एवेऽति कृत्वा न दोषस्तर्ह्यस्या इष्टेः काऽऽवश्यकतेति जिज्ञासायामुक्तम् यत्र त्विति। तत्राप्यव्यवहितत्वारोपेणैव प्रयोगः, पूर्वादीनां चाव्यवहितपूर्वे एव शक्तिरिति तात्पर्यम्। परन्त्वयं प्रदीपाभिप्रायो युक्तो न प्रतीयते, यतो हि [3]"तस्मिन्निति निर्दिष्टे पूर्वस्ये" ति सूत्रे महामुनिः पाणिनिर्निर्दिष्टपदं गृह्णाति, यद्यव्यवहितपूर्वे एव पूर्वपदस्य शक्तिः स्यात्तदाऽत्र सूत्रे व्यवहितलाभाय निर्दिष्टग्रहणं न कुर्यात्, पूर्वशब्देन तल्लाभसम्भवात्। तस्माद्यथा [4]"प्रत्ययः परश्चे"त्यादौ उत्तरांशरहिता [5]"तस्मादित्युत्तरस्ये"ति परिभाषोपतिष्ठते, "[6]परश्चे"त्यनेनैवोत्तरांशस्य लाभात्, तथैवापूत्रापि पूर्वशब्दं दृष्ट्वा तद्विरोध्युत्तरांशो नोपस्थातुमर्हति, किन्तु तद्रहितो व्यवहितांशस्तूपस्थित एव भवति।

यदि ष्ठलो लित्करणसामर्थ्याद् व्यवहितेऽपि प्रवृत्तिः स्यादित्युच्यते, तर्ह्यादिभूतस्याकारस्यापि पाक्षिक उदात्तस्वरः प्रसज्येत। यदा ककारा-

१. पा० सू० १।१।५८ २. पा० सू० ६।१।१९३
३. पा० सू० १।२।६६ ४. पा० सू० ३।१।१
५. पा० सू० १।१।६७ ६. पा० सू० ३।१।२

कारस्य स्यात्तदा [1]त्वनुदात्तं पदमेकवर्जिमिति परिभाषया आदिराकारो-ऽनुदात्तः स्यात्, किन्तु यदि व्यवहितेऽपि [2]प्रवृत्तिर्लितीतीत्यस्य स्यात्, तदा व्यवहितस्य।द्याकारस्यापि कदाचित्स्यात्, एवञ्च तस्य पाक्षिकत्वं स्यादिति कृत्वा स्थानिवद्भावनिषेधः तत्रावश्यकः।

एवञ्च सन्नन्तात् कृधातोः कर्तरि ण्वुल्प्रत्यये इकादेशे "चिकीर्षिकः" इति प्रयोगो स्थानिवत्वनिषेध आवश्यकः, यतो हि ण्वुलो लित्वं कारक इत्यादौ सफलम्, अतः पाठलोलित्वसाफल्यसिद्धौ वित्तस्य सामर्थ्यं वक्तुं न शक्यत इति कृत्वा प्रदीपग्रन्थः चिन्त्यः। भाष्यकृता "पञ्चारत्न्यः" इति यदुदाहृतं तत्र त्वन्तरङ्गपरिभाषयापि सिद्धिर्भविष्यति, एवञ्च बहुखट्वक इत्युदाहरणं देयम्। तस्य तु बहवः खट्वाः यस्य स इति विग्रहे कपि कृते सति [3]"आपोऽन्यतरस्यामि" ति अकारस्य ह्रस्वत्वे सति सिद्धिर्भविष्यति, तस्य चेदानीं स्थानिवद्भावाद् ह्रस्वान्तेऽन्त्यात्पूर्वमिति स्वरो न स्यात्।

अत्रेदमप्यवश्यमालोचनीयमस्ति यत् मुख्ये संभवत्यारोपितग्रहणे मानाभाव इति भावमुक्तं परन्त्विदं चिन्त्यमित्येवं रूपेण प्रदीपखण्डनं यत्कृतमुद्द्योतकृता तत्र च [4]हेतुरुक्तः तस्मिन्निति सूत्रे निर्दिष्टग्रहणादिति। तदीदं नातिसमञ्जसं प्रतीयते तथा हि पूर्वादीनां पूर्वत्वविशिष्टे शक्तिः, अव्यवहितत्वं तु तत्र प्रत्यासत्तिन्यायेनैव भासते, शब्दशास्त्रे तस्यैव प्रत्यासन्नत्वादिति प्रदीपाभिप्रायस्वीकारे न काऽपि हानिः प्रतिभाति। एवमेव लित्वसामर्थ्यमेव कथमिति चिन्त्यमित्युक्तिरपि नात्यन्तं समीचीनम्। यतो हि ष्ठलः लित्वसामर्थ्यं न प्रदीपकृताऽपि गृहीतम्, किन्तु पूर्वपक्षमुद्रयोक्तं तस्य च पूर्वपक्षस्य स्थानिवत्वनिषेधानभ्युपगमेनोपपादयितुं शक्यत्वमस्तीति दिक्।

**म० भा० [5]अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनम्। पापच्यतेः पापक्तिः। यायज्यतेऽर्था यष्टिः। पाचयतेः पाक्तिः। याजयतेर्याष्टिः।**

(प्रदीपः)—[6]पापक्तिरिति। क्तिच्। संयोगान्तलोपादयः पदान्तविधौ स्थानिवत्वनिषेधात्सिद्धा इति भाष्ये नोदाहृताः। स्कन्दयतेः स्कन्, काष्ठं तक्षयतीति काष्ठतक्। संयोगादिलोपलत्वणत्वेष्विति वचनात्संयोगादिलोपे

---

१. पा०सू० ६।१।१५८ २. पा० सू० ६।१।१९३
३. पा० सू० ७।४।१५ ४. पा० सू० १।१।६६
५. भा० वा० ४६८ ६. प्र० पृ० ४६४

स्थानिवत्त्वात्तदभावादत्र संयोगान्तलोपः। दोहयतेर्धोक्। लेहयतेर्लेअ्। उणादीनामव्युत्पन्नत्वात् किर्योगियोरित्यत्र दीर्घाभावः।

(उद्द्योतः)—[1]ननु संयोगान्तलोपप्रभृतिषु इत्युक्त्वा तं विहाय कुत्वाद्युदाहरणदाने बीजाभावो त आह—संयोगान्तेति। पदान्तेति। चिन्त्यमेतत्। पदचरमावयव एव तन्निषेधात् परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्चेति।

अत्र समीक्षा—[2]"अचः परस्मिन्नि"ति सूत्रेण निर्दिष्टस्य स्थानिवद्भावस्य [3]"न पदान्ते"ति सूत्रेण पदचरमावयवादिविधौ निषेधः कृतः, तत्र च पदान्तवरेयलोपस्वरांशान् वर्जयित्वा द्विर्वचनादीनि षट्संख्याकानि त्रैपाद्यकानि कार्याणि स्थानिवद्भावनिषेधोद्देश्यतया प्रत्याख्यातानि, तथाहि [3]"पूर्वत्रासिद्धे न [4]स्थानिवदि"ति वार्तिकं कृतं वार्तिककृता। तस्य चायमाशयः यत् त्रैपादिकेषु कार्येषु स्थानिवद्भावो न भवत्वनेन वार्तिकेन द्विर्वचनादीनां प्रत्याख्यानं युक्ततरं प्रतिभाति, यतश्चैतद्वचनं द्विर्वचनादिभ्योऽन्यत्राऽपि प्रयोजनवदस्ति, तदेवोच्यते—अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनमिति।

तत्र ण्यन्तात् पच्धातोः [5]"क्तिक्तौ च संज्ञायामि"त्यनेन तृचि प्रत्यये सति पाक्तिरिति रूपं भवति, एवं याजतेः याष्टिरिति रूपं भवति, तत्र कुत्वे षत्वे कर्तव्ये णिलोपस्य स्थानिवत्वमनेन निषिध्यते, कुत्वषत्वयोः त्रैपादिकत्वात्। संयोगान्तलोपादयस्तु नोदाहृताः पदान्तविधौ स्थानिवत्वनिषेधेनैव सिद्धत्वात्। तदुदाहरणञ्च—ण्यन्तात् स्कन्दिधातोः क्विपि सति स्कन्ध इति, एवं काष्ठं तक्षयतीति विग्रहे ण्यन्तात् तक्षिधातोः सति क्विपि-काष्ठतक् रूपं भवति, मूर्धन्यषकारस्य संयोगान्तलोपः, ककारस्य संयोगादिलोपस्तु न शङ्क्यः तस्मिन् कर्तव्ये णिलोपस्य स्थानिवत्वात् तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति वचनेन [6]"पूर्वत्रासिद्धे न स्थानिवदिति निषिद्धत्वात्। एवं दोहयतेर्धोक्, लोहयतेर्लेट् इत्यादिषु धत्वढत्वादिकमपि निष्पद्यते, एवमेवौणादीनामव्युत्पन्नत्वात् किरिगिरिशब्दाभ्यामोसि किर्योर्गिर्योः इत्यत्र [7]"र्वोरुपधायाः दीर्घ इकः" इति दीर्घाभावश्च सिध्यति।

---

१. उ० पृ० ४६४
२. पा० सू० १।१।५७
३. पा० सू० १।१।५८
४. का० वा० ३३७
५. पा० सू० ३।३।१७४
६. का० वा० ३३७
७. पा० सू० ८।२।७६

अत्रोद्द्योतः—[1]भगवान् भाष्यकार अल्लोपणिलोपौ संयोगान्तलोप-
प्रभृतिषु प्रयोजनमित्युक्त्वाऽपि तं परित्यज्य कुत्वषत्वे उदाहरत्—तत्र किमपि
बीजं नोपन्यस्यति इति न्यूनतां परिजिहीर्षुः प्रदीपकारो ब्रूते—संयोगान्ते-
त्यादिः । तत्र पदान्तविधित्वात् स्थानिवत्वनिषेधेन सिद्धिर्भविष्यतीति
कृत्वा इत्येतत् तदुदाहरणत्वाभावे बीजं दर्शितम् । वस्तुतस्तु तन्न साधुतरं
प्रतिभाति, यतो हि—पदपरमावयवे विधावेव स्थानिवत्वनिषेधः परपद-
स्थाजादेशस्यैव तन्निषेधश्चेति । तादृशी स्थितिः संयोगान्तलोपे नास्ति,
लोपस्याभावरूपतया तत्रावयवत्वासंभवात्, अत अन्यान्य एव तदुदाहर-
णानि । तानि च स्कन्नेत्यादीनि । ननु "काष्ठतक्" इति तूदाहरणं न
संभवति यतो हि भाष्यकृता [2]"परश्चे"ति सूत्रे उक्तम्--यत् काष्ठशगेव
नास्ति, कुतः काष्ठशकस्थाता इति । अनेन ज्ञायते यदिदृशाणां प्रयोगाणा-
मनभिधानमेवेति चेदुच्यते यत्र संयोगादिलोपस्य प्रसक्तिः तद्विषयकमेवान-
भिधानं कल्पनीयम् ।

नन्वत्राऽपि संयोगादिलोपः प्राप्नोति, न हि तत्र पदचरमावयवविधित्व-
मिति न स्थानिवत्वनिषेधसिद्धिरिति चेदुच्यते [3]"न पदान्तेति सूत्रेण तन्नि-
षेधस्यासिद्धावपि [4]पूर्वत्रासिद्धे न स्थानिवदि"ति वार्तिकेन स्थानिवत्वनिषेधः
प्राप्नोति । तथापि तस्य दोषः संयोगादिलोपणत्वलत्वेष्वति वचनेन पूर्वत्रासिद्धे
इत्यस्याऽपि निषेधस्य निषेधो भवत्येव, अन्येत्वेतद्भाष्यप्रामाण्याद् एतेषां
प्रयोगाणामनभिधानमेवोचितमिति वदन्ति ।

**म० भा०—[5]ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भा-**
**वस्य । यदयम् –"ओः पुयण्ज्यपरे" इत्याह, तज् ज्ञापयत्या-**
**चार्यो—भवति णौ स्थानिवद्भाव इति ।**

(प्रदीपः)—ओः[6] पुयण्जिष्विति । नहि णौ कृतस्य स्थानिवद्भावमन्तरेण
पुयण्जिषु सर्वेष्ववर्णपरेषु उवर्णान्तोऽभ्यासः संभवति । पिपविषते यियविष-
तीत्यत्रैवानेन स्थानिवद्भावात् । तत्र तु इति वर्गग्रहणाद् यणिति प्रत्याहार-
ग्रहणाज्जग्रहणाच्च ज्ञापकाण्णौ कृतस्य स्थानिवद्भावोऽनुमीयते । ननु तत्र
णाविति नास्ति तत्कथं तत्रैव स्थानिवत्वानुमानं न तु निनवनीयिषति दिद-

---

१. भा० वा० ४६८ २. पा० सू० ३।१।२
३. पा० सू० १।१।५८ ४. का० वा० ३३७
५. भा० वा० ४७९ ६. प्र० पृ० ४६९

वनीयिषतीत्यादावपि। नैतदस्ति। [1]येन नाव्यवधानमित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणाण्णेरेव केवलस्य व्यवधायकस्य संभवात्।

अत्र समीक्षा "द्विर्वचनेऽचि[2]" इति सूत्रे पञ्चपक्षाः भाष्यकृता उक्ताः-तत्र पञ्चमपक्षे द्विर्वचननिमित्तेऽचि स्थानिवद्भाव अनेन सूत्रेण प्रतिपाद्यते। तस्मिन्नेव पक्षे इदं दूषणमुच्यते, यत् णौ परतः स्थानिवद्भावो वक्तव्यो भविष्यति। नुनावयिषतीत्यादि प्रयोगसिध्यर्थम्, तथा हि नुधातोर्णिचि सनि इष्टि "[3]सन्यङोरि"ति द्वित्वे कार्ये "द्विर्वचनेऽचि" इत्यस्य प्रवृत्त्याऽणौ परतः वृद्ध्यादेशस्य स्थानिवद्भावेन "नु" इति रूपे जाते तस्यैव द्वित्वं भवति यद्यनेन स्थानिवद्भावो न स्यात्तर्हि वृद्धौ वादेशे च सति "नाव" इत्यस्य द्वित्वे ह्रस्वादिकार्ये "सन्यतः[4]" इतीत्वे सति "निनावयिषति" इत्यनिष्टं रूपं स्यादिष्यते च "नुनावयिषती"ति। अतः स्थानिवद्भावेन "नु" इत्यस्यैव द्वित्वं कार्यं ततश्चेष्टसिद्धिर्भविष्यति। तदुपर्युक्तं भगवता- स्थानिवद्भावविधायकसेतद्वचनं न कार्यम्, "ओःपुयण्ज्यपरे[5]"—इति वचनं ज्ञापकं भवति णौ स्थानिवद्भावो भवतीत्यस्य। अस्य भाष्यस्याशयं प्रदीपकारो व्याचष्टे—[6]यत्सर्वत्र प्रयोगेषु परत उवर्णान्तो अभ्यासः नैव संभवति। यियविषतिः, पिपविषति इत्यनयोरेव प्रयोगयोः "द्विर्वचनेऽची"त्यनेन स्थानिवद्भावे सतीष्टं साधयितुं शक्यते। अन्येषु प्रयोगेषु ण्यन्तात् सनि कृते णिचि [6]निमित्तकवृद्धौ वादेशे चाभ्यासे "सन्यतः[7]" इतीत्वे सति ओः पुयण्जिति[8] सूत्रं विनैव इष्टसिद्धिर्भविष्यति। यु पु धातुभ्यां तु साक्षात् सनि इष्टि "द्विर्वचने[8]चि" इत्यनेन गुणनिषेधे यु पु इत्यनयोर्द्वित्वेऽभ्यासस्योकारस्य इकारादेशार्थमिदं सूत्रमावश्यकम्, तथाऽपि "ओः पयोः अपरयोरिति लघीयसा न्यासेन सिद्धे वर्गप्रत्याहारजग्रहणं व्यर्थीभूय ज्ञापयति यद्भवति णौ स्थानिवद्भावः द्वित्वे कार्ये इति।

नन्वोः पुयण्जिति[10] सूत्रे "णौ" इति नास्ति तर्हि कथं णिचि परत एव स्थानिवद्भावस्य ज्ञापनं क्रियते, निनवनीयिषतीत्यादावपि कथन्न तदनुमानं क्रियते, तस्य सिद्धिर्हि नु धातोर्लिटि नवन इति तदिच्छति नवनियति, पुनः

१. भा० प्र० पृ० ४६९
२. म० भा० आ० सू० १।१।८४
३. पा० सू० ६।१।९
४. पा० सू० ७।४।७९
५. पा० सू० ७।४।८०
६. ८. प्र० पृ० ४६९
७. पा० सू० ७।४।७९
८. पा० सू० ७।४।८०
९. म० भा० आ० सू० १।१।८।४
१०. पा० सू० १।१।५९

नवनियतुमिच्छति क्यजन्तात् सनि नव इत्यस्य द्वित्वे "सन्यतः[१]" इतीत्वे निनवनीयिषति। तत्रापि नु धातोः सत्वात् गुणादेशस्य स्थानिवद्भावे तु इत्यस्य द्वित्वं स्यादिति शङ्काभिप्रायः, समाधानं तु तत्रैव कृतमस्ति "येन [२]नाव्यवधानं तेन व्यवधानेऽपि कार्यं भवति, णिचि त्वेकेनैव प्रत्ययेन व्यवधानं केवलस्य णेरेव व्यवधायकस्य सत्वात्। अत्र तु प्रथमतो ल्युटि ततः क्यचि, इति प्रत्ययद्वयेन व्यवधानम् अत इदं नियतं व्यवधानं नास्तीति कृत्वा उपेक्षितं भवति, णौ तु नियतस्य णिरूपस्य एकस्यैव प्रत्ययस्य व्यवधायकत्वमिति नाव्यवधानं तत्रास्तीति भावः।

अत्रोद्द्योतकारो व्याचष्टे ओः [३]पुयण्जिषु वचनं ज्ञापकमिति भाष्य-वाक्ये पुयण्जिष्विति "[४]यतश्च निर्धारणमि' ति सप्तमी निर्देशः, तस्य व्यावर्त्यस्थलं पिपविशत इति। अयं भावः पुयण्जिषु पययोरेव चारितार्थ्यम्, अन्येषां ग्रहण तु व्यर्थमेव, तदेव ज्ञापकम् यथा—नृषु द्विजः श्रेष्ठ इति वाक्ये श्रेष्ठत्वेन द्विजो व्यावृतो भवति, तथैव पुयण्जिषु वचनं पकारयकारातिरिक्त-ग्रहणं ज्ञापकमिति वाक्ये ज्ञापकत्वेन पकारयकारातिरिक्त-पवर्गयण्जकारादि-ग्रहणं व्यावृतं भवति, तत्फलं तु यियविशतिः पिपविशत इत्यनयोरित्वसिद्धिः।

तत्राऽपि पुन उद्द्योतकृता शङ्कितम् न चात्रोत्तरखण्डे जातयोः गुणो-द्देशरूपयोरचोः "अचः[५] परस्मिन्निति स्थानिवद्भावेन अवर्णपरत्वाभावात्कथं "ओः पुयण्जी"त्यस्य प्राप्तिरिति वाच्यमिति। तत्र समाधानमुक्तम्—एतत्सूत्रारम्भसामर्थ्येनैव तत्राचः परस्मिन्नित्यस्याप्रवृत्तेः, यदि तत्र तस्य प्रवृत्तिः स्यात्तर्हि पुनरपि[६] "ओः पययोरि"त्यंशोऽपि व्यर्थः स्यात्। तत्र यियविशतीति लक्ष्ये "[७]सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" इति सूत्रेण सनः इडागमः "पिपविशते" इत्यत्र तु "स्मिपूङ्[८]रञ्ज्वशां सनी"त्यनेन इडागमः।

नन्वर्णपरकाः पवर्गयण्जकाराः प्रत्ययान्तरपरत्वेऽपि संभवन्ति न तु णावेव, तर्हि णावेव कथं स्थानिवद्भावस्य ज्ञापकता उक्ता भाष्यप्रदीपयो-रित्याशङ्कां प्रदीपोक्तामवतारयति - नन्वर्णपरे इत्यादिना। येन नाव्यवधान-मिति प्रदीपोक्तं समाधानमप्यनुदितम् - येन नेति। तदेव विशदयति प्रकृत-

---

१. पा० सू० ७।४।७९
२. भा० प्र० पृ० ४६९
३. उ० पृ० ४६९
४. पा० सू० २।३।१४१
५. पा० सू० १।१।५७
६. भा० वा० ४७९
७. पा० सू० ७।२।४९
८. पा० सू० ४।२।४७

सूत्रे (द्विर्वचनेऽ[1]चीति सूत्रे) परस्मिन्नित्यनुवर्तते, ततश्च द्वित्वनिमित्तेऽजादौ प्रत्यये प्रत्ययान्तरेणाव्यवहिते परे सति य अजादेशः सः स्थानिवत् स्यादिति "[2]द्विर्वचनेऽचि" इति सूत्रार्थः पञ्चमपक्षे संभवति, तत्रानेन ज्ञापकेन व्यवधानेऽप्येतस्य प्रवृत्तिर्ज्ञाप्यते, तत्र प्रत्ययव्यवधानं विना वर्गादीनामुदाहरणं न संभवतीति येन नाव्यवधानन्यायेन एकप्रत्ययेन व्यवधानेन प्रवृत्तिः भवितुं शक्नोति, स च प्रत्ययः णिरेव संभवतीति प्रदीपाभिप्रायः।

एतदग्रे उद्द्योतकारः स्वयं शङ्कते समाधत्ते च। तथा हि–न च उरुरियु, अम्बुशब्दादिभ्यः आचारे क्विपि सनि इटि द्वित्वे गुणाद्यभावे उरुरविशति इत्यादौ इकारोदेशार्थं वर्गादिग्रहणं चरितार्थम्, तथा च भ्वादिभ्यो धातुभ्यः विजन्तेभ्य आचारे क्विपि सनि विभविशतीति वाच्यम्। [3]"सनिग्रहगुहोश्चे"-त्यत्रोपदेशाधिकाराभावस्य [4]"एकाच उपदेशे ङ" इति सूत्रे भाष्ये सूचितत्वेनोक्तप्रयोगेषु तेनैव सूत्रेण इटो निषेधात्, ईदृशानामनभिधानाच्च, विच्प्रत्ययस्यापि "सार्वत्रिकत्वाभावाच्च। "अतश्च" इङ् धातोः [5]"ॠदोरप्" इत्यनेन अप्प्रत्यये सति दवशब्दाद् आचारे क्विपि सनि दिदविशतीत्यादौ एकेनैव अपा प्रत्ययेन व्यवधानमिति तत्र दोषोऽस्त्येवेति कथनमपि निदस्तम्, तादृशानामप्यभिधानाभावात्।

अग्रे चोद्द्योतकारः–णौ स्थानिवदिति भाष्यं विशदी करोति–तत्र णावित्यादिना। तथा हि–[6]प्रत्ययग्रहणे यस्मात् गृहीतः तदादेः तदन्तस्य ग्रहणमिति परिभाषया तदादेः इत्यस्योपस्थित्या तस्य तदादेरचो णिनिमित्तकादेश इत्यर्थः। यदि त्वनियमप्रसङ्गाभावेन तस्याः परिभाषायाः नियमफलिकायाः उपस्थितिर्न संभवति, अत एव [7]"ह्रस्वस्य पित्कृत्तुक्" इत्यादौ न तस्याः परिभाषाया उपस्थितिरित्युच्यते–तर्हि मास्तु तदुपस्थितिः, णौ परे इत्यर्थे रेफेन व्यवधानात् पुस्फारयिष्यतीत्यादेः सिद्धिर्न स्यादिति ज्ञेयम्, ज्ञापनस्य फलं तु "तुतावयिष्यती" त्यादि सिद्धिरिति दिक्।

**इति महाभाष्य-समीक्षणे चतुर्थोऽध्यायश्चतुर्थः पादश्च।**



१. पा० सू० १।१।५९
२. पा० सू० १।१।५९
३. पा० सू० ७।२।१२
४. पा० सू० ७।२।१०
५. पा० सू० ३।३।५७
६. प० शे० प० २३
७. पा० सू० ६।१।७१

# पञ्चमोऽध्यायः

**म० भा०—[1]प्रसक्तादर्शनं लोपसंज्ञा भवतीति वक्तव्यम् ।**

(प्रदीपः)—[2]सिद्धं त्विति । शास्त्रादर्थाद्वा प्रसक्तस्य यददर्शनं तल्लोपसंज्ञं भवति । स्थाने ग्रहणमिहाप्यनुवर्तते । स्थानं च प्रसङ्गः । तेन प्रसङ्गे यददर्शनमिति लभ्यते ।

(उद्द्योतः)—[3]चादिलोप इति सङ्ग्रहायाह—अर्थाद्वेति ।

अत्र समीक्षा – "अदर्शनं [4]लोपः" इति सूत्रे सर्वस्यादर्शनस्य लोपसंज्ञा प्राप्नोति, यतो हि—स्वभावतो प्रयुक्तस्य अन्वाख्यानमात्रमत्र क्रियते तदा सर्वस्यापि शब्दस्य स्वविषयादन्यदप्रयुक्तत्वाद् अदर्शनमस्त्येवेति लोपसंज्ञा-प्रसक्तिः । एवं च "त्रपु जतु" इत्यतोऽग्रे तद्धितस्याणो दर्शनं तत्र लोप-संज्ञायां प्रत्ययलक्षणेनादिवृद्धिः प्राप्नोतीति आक्षिप्य समाहितं भगवता भाष्य-कृता निति विति प्रत्यये ङ्गस्याचो वृद्धिरित्युच्यते [5]यस्मात्प्रत्ययविधिस्त-दादिप्रत्ययेऽङ्गं भवतीति । यस्माच्चात्र प्रत्ययविधिः न तत्प्रत्यये परतः, यच्च प्रत्यये परतो वर्तते न तस्मात्प्रत्ययाविधिरिति समाधाय पुनः शङ्कितं क्विपस्तर्हि अदर्शनं तस्य प्रत्यय लक्षणे सति [6]"ह्रस्वस्य पिति कृति तुक्" इति तुकि प्राप्नोति, अस्याः शङ्कायाः समाधानमुक्तम्—प्रसक्तादर्शनं लोपसंज्ञ-मिति, अस्याशयं प्रदीपकार इत्थं प्रकाशयति—यत् शास्त्रतः लोकतो वा प्राप्तस्य शब्दस्य यददर्शनं तल्लोपसंज्ञं भवति, त्रिष्वित्यस्योत्तरं क्विपः प्राप्तिर्न शास्त्रः नापि लोकतः । आद्युदाहरणं राजेत्यत्र राजन्-शब्दात् सुविभक्तेः [7]हलङ्यादिसूत्रेण यददर्शनं विधीयते तस्य लोपसंज्ञा अनेन क्रियते । द्वितीयोदाहरणं तु श्वसुराज्जिह्रतीत्यत्र [8]वाक्यार्थबोधनेच्छया वाक्यैकदेशस्याऽपि प्रयोगो भवतीति न्यायेन वीक्ष्य पदस्य यददर्शनं कृतं तल्लोपसंज्ञं भवति, अतएव [9]"ल्यब्लोपे कर्मण्यधिकरणे चे"ति वार्तिकेन श्वसुरशब्दात् कर्मणि पञ्चमी सिध्यति ।

१. म० भा० पृ० ४७४
२. प्र० पृ० ४७४
३. उ० पृ० ४७४
४. म० भा० आ० सू० १।१।६१
५ पा० सू० १।४।१३
६. पा० सू० ६।१।७१
७. पा० सू० ६।१।६८
८. म० भा० १।१।४५
९. का० वा० ८६६

ननु सूत्रे प्रसक्तपदं नास्ति तर्हि कथमस्यार्थस्य लाभ इति चेत्तदप्युक्तं प्रदीपकृता "षष्ठी स्थाने [1]योगा" इत्यतः स्थाने ग्रहणमिहाप्यनुवर्तते, च प्रसङ्गो तस्यर्थः। एवं च प्रसङ्गे सति यददर्शनं तल्लोपसंज्ञं भवतीत्यर्थस्य लाभे फलत उक्तं भगवता—प्रसक्तादर्शनं लोपसंज्ञं भवतीति।

अत्रोद्द्योतकार इत्थं व्याचष्टे—यत् "चादिलोपे [2]विभाषा" इति सूत्रेण चवादिशब्दलोपेऽनुदात्तस्वरो विभाषया क्रियते। तत्र कादिशब्दानां लोपस्य विधानं कुत्राऽपि शास्त्रे न कृतम् अतः प्रदीपग्रन्थे उक्तम्—अर्थाद्वा इति। अस्यैव व्याख्यानं मया कृतं लोकत इति। यथा—[3]एकवचनमुत्सर्गतः करिष्यते इत्यादि शास्त्रमर्थमनपेक्ष्य विभक्ति प्रसज्जयति, एवं चेयं प्रसक्तिः शास्त्राद्बोध्या, क्वचिदेकत्वाद्यर्थविवक्षायामेकवचनादि प्रयुज्यते, तत्त्वर्थाद्भवति। यतः सोऽर्थः तत्र प्रतीयत एवञ्च तद्वाचकः शब्द उच्चारणे प्रसक्तः अस्यैव प्रसक्तां शास्य लाभाय "स्थाने" इत्यस्यानुवृत्तिरत्र विहिता। पुनः शङ्का उत्थाप्यते उद्द्योतकृता न च पित्कृता इति। अयमाशयः क्विप्प्रत्ययः कृत्संज्ञकः पकारेत्संज्ञकश्च, तेन प्रकृतेराक्षेपः कार्यः, अतोऽपि हेतोः त्रिष्वित्यादौ [4]"ह्रस्वस्य पितिकृति तुक्" इति तुक् वारयितुं शक्यते। अत्र समाहितं प्रकृतेराक्षेपे आक्षिप्तस्य शब्देऽन्वये च मानाभावःअत्र चेदमेव-भाष्यं प्रमाणम्, किञ्च उपपाद्यान्यथादनुपपत्त्या उपपादकस्य कल्पना क्रियते, यथा—पीनत्वेन रात्रिभोजनं कल्पते, प्रकृते त्विदृशी स्थितिर्नास्ति न ह्येतत्सूत्रे प्रकृत्याक्षेपं विना पिति किति प्रत्ययस्यानुपपत्तिरस्ति, नाऽपि च तदाक्षेपेन तदुपपत्तिः। यदि तु प्रत्ययग्रहणपरिभाषया तदादेरिति तदंशस्योपस्थितिः काम्यते तदपि न समीचीनम्, अनियमप्रसङ्गे एव परिभाषोपस्थितिस्वीकारात्। किञ्च इयानेत्यादौ अत्रापि च प्रकृतिं विनैव प्रत्ययज्ञानसत्वेन व्यभिचारादाक्षेपो न संभवति। यत्तु ग्रामाधिकरिणिका स्थितिरित्यर्थके ग्रामे तिष्ठतीति वाक्ये [5]"ल्यब्लोपे" इति पञ्चमी माभूदिति प्रसक्तस्येत्यशं आवश्यक इति तन्न समीचीनम्, तेन प्रत्यासत्याल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानात्तस्य अत्राप्राप्तेः, यदि तु तादृशी स्थित्यत्रापि वक्तुं शक्यते तर्हीष्यत एव पञ्चमी विभक्तिरिति दिक्।

**म० भा०—[6]एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्ति-**

---

१. पा० सू० १।१।४९
२. पा० सू० ८।१।६३
३. सि० कौ० ३।१।६७
४. पा० सू० ६।१।७१
५. का० वा० ८६६
६. म० भा० पृ० ४७८

**ज्ञापयति लुक्श्लुलुपः सर्वादेशा भवन्तीति। यदयं—"लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये" इति लोपे प्रकृते लुकं शास्ति।**

अत्र समीक्षा—[1]"प्रत्ययस्य लुक्श्लुलुपः" इति सूत्रे प्रत्ययग्रहणस्य प्रयोजनमुक्तं भगवता—लुक्श्लुलुपः सर्वादेशः सम्पूर्णस्य प्रत्ययस्य स्थाने आदेशरूपतया भवन्त्विति। तस्य प्रत्याख्यानं पुनरग्रे उच्यते—एतदपि नास्ति प्रयोजनमिति। अस्याशयं प्रदीपकारः ब्रूते यद्ययमित्यादिना। अयं भावः [2]"घोर्लोपो लेटि वा" इत्यस्मात् लोपपदम् [3]ओतः श्यनि "वसस्याचि" इत्युत्तरसूत्रद्वयमनुवर्तते, एवञ्च लोपप्रकरणमिदमनुभूयते, ततोऽग्रिमं सूत्रं [4]"लुग्वादुहदिहलिहगुहामात्मनेपदे दन्त्ये" इत्यायाति। तत्र च भगवता पाणिनिना लुक्पदं गृह्यते, लोपपदं तु नानुवर्तते, अतश्च ज्ञायते यल्लुक्श्लुलुपः सर्वादेशाः भवन्तीति। यद्यलोऽन्त्यपरिभाषया अन्त्यादेशाः स्युः तर्हि प्रकृतं लोपपदमनुवर्त्य लुक्पदं कथमुपपात्तम्? अतः लुक्विधानं सर्वादेशत्वस्य ज्ञापकं भविष्यति। अनुपसञ्जातविरोधन्यायेन विपर्ययो न कल्पितः।

अत्रोद्द्योतकारः प्रदीपाशयमित्थं ब्रूते—यल्लुग्ग्रहणमकृत्वा लोप एव विधेयः सामर्थ्यात्तस्यैव सर्वादेशत्वं कल्पनीयमिति शङ्कायामुच्यते [5]प्रदीपकृताविपर्ययस्तु न कल्पत इति। तत्र हेतुरुक्त अनुपसञ्जातविरोधित्वादिति। अयं भावः नोपसञ्जातः (उत्पन्नः) विरोधः वैयर्थ्यशङ्कोत्पादः यस्य तत्वात्। वैयर्थ्यशङ्कोत्पत्तिरूपविरोधस्य अनुत्पत्तौ वैपरीत्यं कल्पयितुं न शक्यते, अतः लुगादीनामेव सर्वादेशत्वं न तु लोपस्येति भावः।

**म० भा०—[6]अथ द्वितीयं प्रत्ययग्रहणं किमर्थम्? प्रत्ययलक्षणं यथा स्यात् वर्णलक्षणं माभूदिति। गवे हितं गोहितम्, रायः कुलं रैकुलमिति।**

(प्रदीपः)—[7]वर्णलक्षणमिति। प्रत्ययलोपे तल्लक्षणमित्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययरूपाश्रयेण वर्णरूपता तत्सर्वं स्यात्, सर्व-

१. म० भा० भा० सू० १।१।९।१२
२. पा० सू० ७।२।७०
३. पा० सू० ७।३।७१
४. पा० सू० ७।३।७३
५. प्र० पृ० ४७८
६. म० भा० पृ० ४८१
७. प्र० पृ० ४८१

नाम्नो वस्तुमात्र परामर्शित्वात् । प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे भवति, न वर्णरूपतानिमित्तम् ।

(उद्द्योतः)-- [1]ननु द्वितीयप्रत्ययग्रहणाभावे बहुव्रीह्यलाभात्तल्लभ्यकार्यातिदेशो न सिध्येदत आह--तल्लक्षणमिति

अत्र समीक्षा [2]"प्रत्ययलोपे प्रत्ययलक्षणमि" ति सूत्रे द्वितीयस्य प्रत्ययग्रहणस्य फलमुच्यते भगवता—प्रत्ययलक्षणं यथा स्याद्वर्णलक्षणं माभूदिति । अस्याशयं वदति प्रदीपकारः—तथा हि—प्रत्ययलोपे तल्लक्षणमित्येव सूत्रं कार्यं प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययरूपाश्रयेण वर्णरूपाश्रयेण वा तत्सर्वं भवति प्रत्ययलक्षणेन । सर्वनाम्नो वस्तुमात्रस्य परामर्शतया तच्छब्देन अनयोर्द्वयोरपि परामर्शात्, प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे भवति, न तु वर्णनिमित्तकम् । तदेवोच्यते— [3]प्रत्ययं गृहीत्वा यदुच्यते तदेव प्रत्ययलक्षणम्, शब्दं गृहीत्वा यदुच्यते तन्न प्रत्ययलक्षणम् । तत्फलं गवे हितं गोहितम्, रायः कुलं रैकुलम् इत्यादौ ङेऽसोः प्रत्ययलक्षणणेन अच्परत्वादवाद्यादेशो माभूत, अज्रूपावयवद्वारेण सम्पूर्णस्य ङस्प्रत्ययस्यापि अयादेशं प्रति निमित्तताऽस्त्येव । किन्त्वयादेशस्य निमित्तता न प्रत्ययत्वव्याप्यधर्मावच्छिन्ना किन्तु वर्णत्वव्याप्याच्त्वावच्छिन्ना, अतः प्रत्ययलक्षणं न भवति । अनयैव रीत्या [4]"न धातुलोपे आर्धधातुके" इत्यत्रापि [5]"धिन्विकृण्व्योरच" [6]"लोपो व्योर्वलि" इति वलोपस्य वलनिमित्तत्वादार्धधातुकप्रत्ययनिष्ठनिमित्तत्वाभावाद् गुणप्रतिषेधो न भवति, ततश्च "सुधे सुकः" इति भवति, न तु सुधि सुकिः, इति ।

अत्रोद्द्योतकारः—द्वितीयप्रत्ययग्रहणाभावे बहुव्रीहिसमसो न स्यात्ततश्च तत्प्रयोज्यकार्यातिदेशोऽपि न स्यादिति कृत्वा प्रत्ययपदाभावेति तत्स्थाने तत्पदं निवेश्य बहुव्रीह्यर्थः सम्पादितः प्रत्ययनिमित्तमेव कार्यमित्यस्य प्रत्ययत्वतद्व्यान्यान्तरधर्मावच्छिन्ननिमित्तताकमित्यर्थः, न वर्णनिमित्तमित्यस्य तु वर्णत्वव्याप्यधर्मावच्छिन्ननिमित्तताकमित्यर्थः । अन्ये आचार्यास्तु प्रत्ययग्रहणमित्यस्य द्वितीयपदघटितं प्रत्ययलक्षणग्रहणमिति अर्थं कृत्वा "प्रत्ययलोपेऽपी" त्येव सूत्रं कार्यमिति वदन्ति । तत्र च स्थानिवदादेश इत्यतः स्था-

१. उ० पृ० ४८१
२. म० भा० आ० सू० १।१।९।३
३. प्र० पृ० ४८१
४. पा० सू० १।१।४
५. पा० सू० ३।१।८०
६. पा० सू० ६।१।६६
७. पा० सू० १।१।६२

निवत्पदमनुवर्त्य प्रत्ययलोपेऽपि स्थानिवद्भवतीति रूपेण, अथवा प्रत्ययलोपेऽपि तद्भवति यत्प्रत्यये विद्यमाने सति भवतीत्यध्यहृत्य सूत्रार्थं सम्पादयन्ति। एवञ्च प्रत्यये सति वर्णनिमित्तं भवतीति तल्लोपेऽ स्यादित्याशयः साम्प्रतमागतः, प्रदीपकृद्व्याख्यानं तु चिन्त्यं प्रतीयते, यतो हि प्रकृते प्रत्ययशब्दतच्छब्दयोः पर्यायतया तद्विचारोऽ नुचितः।

पुनश्चानेनैव न्यायेन यदुक्तं प्रदीपकृता तदपि चिन्त्यम्, यतो हि अत्र प्रत्ययग्रहणसामर्थ्यात् तादृशार्थलाभः, तत्र तु तथार्थलाभे न किमपि प्रमाणम्, आर्धधातुके इति तु "तोतोती"त्यादि व्यावृत्तये चारितार्थ्यम्। पूर्वसूत्रे[1] आर्धधातुकग्रहणमनवकाश इति क्ङिति[2] चेति सूत्रभाष्यविरोधश्च। किं च तादृशार्थकल्पनायां "[3]यङियकि क्यङ्वलोपे" इति वार्तिकं तदुदाहरणं परं जीरदानुरिति भाष्यं च सङ्गतं स्यात्, "सुधी"त्यस्य तु सिद्धिरेवं कर्तव्याः [4]धिन्विकृण्व्योश्च वलोपेऽपृक्तलोपे गुणे सुशब्देन सह समासे सुविभक्तौ हल्ङ्यादि लोपे नलोपे च सति इदं रूपद्वयं भवति। गुणनिषेधपक्षे तु सिधन्शब्दे "[5]इनहनेति दीर्घः, सुकृन्शब्दे सर्वनामस्थाने चेति दीर्घः "[6]उपधायाश्च" इतीत्वे रपरत्वे सुनलोपयोः "र्वोरुपधाया दीर्घः"[7] इति दीर्घः स्यादित्याशयः।

वस्तुतस्तु तच्छब्दस्य प्रत्ययशब्देन सह न पर्यायता अपि तु वस्तुमात्रपरामर्शत्वेन तस्य लाभः, एवमेव न [8]धातुलोप आर्धधातुके, इति दार्ष्टान्तिकस्याऽपि गतिः चिन्तनीया इति दिक्।

**इति महाभाष्य-समीक्षणे पञ्चमाध्यायस्य प्रथमपादः।**



---

१. पा० सू० १।१।४ | २. म० भा० १।१।४ आ० २
३. म० भा० पृ० १६९ | ४. पा० सू० ३।१।८०
५. पा० सू० ६।४।१२ | ६. पा० सू० ७।१।१०१
७. पा० सू० ८।२।७६ | ८. पा० सू० १।१।४

## अथ द्वितीयः पादः

**[1]म० भा०—आमन्त्रितस्वर—सर्पिरागच्छ, सप्ता गच्छत "आमन्त्रितस्य च" इत्याद्युदात्तत्वं यथा स्यात् ।**

प्रदीपः—[2]सर्पिरिति । सर्पिः शब्दोऽन्तोदात्तः प्रत्ययस्वरेण घृतादित्वाद्वा । सप्तन्शब्दोऽपि घृतादित्वादन्तोदात्तः । नित्स्वरे त्वाद्युदात्तत्वे विशेषो न स्यात ।

[3](उद्द्योतः) प्रत्ययस्वरेणेति । इसिप्रत्ययान्तत्वादिति भावः । नब्विषयस्येत्यस्य तु न प्राप्तिः, अनिसन्तस्येति पर्युदासाद् घृतादित्वकल्पनं तु किमर्थमिति चिन्त्यम् । नित्स्वरेणेति । सप्तन् शब्दो हि सप्यशम्भ्या तुट् चेति कनिन्नन्तः । [4]नः सङ्ख्याया इत्यप्याद्युदात्तत्वं प्राप्नोतीति द्रष्टव्यम् ।

अत्र समीक्षा—"[5]न लुमताङ्गस्ये"ति सूत्रे एकपदाश्रयो यः स्वरः तत्र प्रत्ययलक्षणं न भवतीत्युक्त्वा सर्वस्वरमामन्त्रितस्वरं सिजि लुक्स्वरं च वर्जयित्वा पूर्ववार्तिकं वर्तते, तत्र सर्वस्तोम इत्यत्र सर्वस्य सुपीति यदाद्युदात्तत्वं तदेव बहुव्रीहौ प्रकृत्या पूर्वपदमिति प्रकृतिस्वरेण विधीयते इत्येकपदाश्रयः स्वरः भवत्येव सर्वस्वरविषये इदमुदाहरणम् । आमन्त्रितस्वरविषये तु सर्पिरागच्छ सप्ता गच्छत इत्यनयो [6]"रामन्त्रितस्य" चेति सूत्रेण सर्पिः सप्तमस्योराद्युदात्तत्वं विधीयते ।

अत्र [7]प्रदीपकारः व्याचष्टे—सर्पिश्शब्दोऽन्त्योदात्तः प्रत्ययस्वरेण घृतादित्वाद्वा, सप्तन्शब्दोऽपि घृतादिगणपठित इति "घृतादीनाञ्च" इत्यन्त्योदात्तः । व्युत्पत्तिपक्षे नित्स्वरेणाद्युदात्तत्वे सिद्धेः कोऽपि विशेषो न लक्ष्यते, इति कृत्वा व्युत्पत्तिपक्ष एतद्विषये त्यक्तः ।

अत्रोद्द्योतकारः सर्पिः शब्दः सृप्लृगतौ इत्यस्मात्, सर्पे [8]ऋषिः, इत्यौणादिकसूत्रेण इसिप्रत्यये लघुपधगुणे च प्रत्यय आद्युदात्तश्चेतीकार-

१. म० भा० आ० सू० १।१।६।४ २. प्र० पृ० ४९२
३. उ० पृ० ४९२ ४. फिटसूत्रम् २८
५. म० भा० आ० सू० १।१।६।४ ६. पा० सू० ८।१।१९
७. प्र० पृ० ४९२ ८. उ० सू०

स्योदात्तत्वात् सर्पिस् इति शब्दः प्रत्ययस्वरेणान्त्योदात्तः सम्पन्नः। "न विशेष्यानि सन्त्यस्ये"ति फिट् सूत्रेण नित्यनपुंसकत्वाद् आद्युदात्तत्वं न शक्यम्, "अनिसन्तस्ये"ति पर्युदासेन इसन्तभिन्नैव तत्प्रवृत्तिः स्वीकारात्। अनेन प्रकारेण इष्टसिद्धौ घृतादित्वकल्पनेन अन्तोदात्तत्वस्वीकृतिः न समीचीना। सप्तन्शब्दो हि [1]"सप्यशूभ्यां तुट् चे"ति उणादिसूत्रेण कनिन प्रत्ययान्तो व्युत्पादितः [2]"नित्यादिनित्यमि"ति सूत्रेण यथाद्युदात्तः क्रियते तदा प्रकृते [3]"आमन्त्रितस्य चे" त्याद्युदात्तत्वं यथा स्यादिति प्रयोजनं न सिध्येत्। अव्युत्पत्तिपक्षे "नूः [4]सङ्ख्यायाः" इति फिट्सूत्रेणाद्युदात्तः प्राप्त इत्यपि विचारणीयम्। अत्रोच्यते उद्द्योतकृता—सर्पिः शब्दस्य प्रदीपसम्मतं घृतवादित्वमयुक्तमिति प्रतिपाद्यते तत्प्रतिपादनमेव चिन्त्यं प्रतिभाति। यतो हि—"उणादयो व्युत्पन्नानि" इति वचनेन "चतुष्पादो गर्भिण्या" इत्यत्र सप्तघटितनिर्देशज्ञापितेनोणादीनामव्युत्पत्तिपक्षस्यैव सिद्धान्तितया अन्तोदात्तत्वात् घृतादित्वकल्पनमावश्यकम्।

ननु "फिषोऽन्त [5]उदात्तः" इत्यनेनैवान्तोदात्तता सिध्यति, किमर्थं घृतादित्वकल्पनमिति चेदुच्यते—नन्वविषयानि सन्त्स्येत्यनेन तद्बाधनात्। न च इसन्तभिन्ने एव नित्यनपुंसके तत्प्रवृत्तिरिति वाच्यम्, साम्प्रतमव्युत्पत्तिपक्षेऽस्य सर्पिश्शब्दस्य सान्तत्वेऽपीसन्तभिन्नत्वात्, यतो हि—लक्षणप्रतिपदोक्तपरिभाषयो प्रतिपदोक्त एवेसशब्दः तत्र गृहीत इत्यभ्युपगमात्। प्रतिपदोक्तश्च सर्पैर्विहित इस्प्रत्यय एव, न त्वव्युत्पत्तिपक्षीय सर्पिस्शब्दघटक इस्शब्दः। एवमेव सप्तन्शब्दस्य घृतादित्वकल्पनमप्यव्युत्पत्तिपक्षीयमेव, व्युत्पत्तिपक्षे तु कनिन्त्वात् नितिस्वरेणाद्युदात्तत्वेऽत्रत्यं प्रयोजनांनं न सिध्येत्। न चाव्युत्पत्तिपक्षेऽपि "नूः [6]सङ्ख्यायः" इत्याद्युदात्तत्वेऽत्रत्यं प्रयोजनं कथं सिद्धमिति शंङ्क्यम्, अत एव कारणात् घृतादित्वकल्पनं ततश्च सामान्यस्य "नः [7]सङ्ख्यायाः" इत्यस्य बाधः, इति स्वीकारादिति शम्।

**[8]म० भा०—यद्यपदादिविधिवित्युच्यते उत्तरपदाधिकारो न प्रकल्पेत। तत्र को दोषः? "कर्णो वर्णलक्षणात्" इत्येवमादिविधिर्न सिध्यति।**

---

१. उ० सू० १५५
२. पा० सू० ६।१।१९७
३. पा० सू० ८।१।१९
४. फिटसूत्रम् २८
५. फि० सू० १
६. फि० सू० २८
७. फि० सू० २८
८. म० भा० पृ० ४९४

अत्र [1]प्रदीपः—[2]ननूत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षण नात वार्तिके पदादिविधौ, इत्युच्यते स्वरश्चायं पदादिमुद्दिश्य विधीयते, यतश्चोत्तरपदादिरित्यधिकारोत्र वर्तऽत इति चेदत्रोच्यते—वर्णशब्दे ककारोऽत्रादिः, न त्वकार, [3]न च स्वरविधौ व्यञ्जनमविद्यमानवदिति परिभाषया ककारस्य विद्यमानवद्भावे पदादिविधित्वमत्र अकारोद्देश्यकस्वरोऽप्यस्त्येवेति वाच्यम्, स्वरकर्मकविधावेव व्यञ्जनस्याविद्यमानवद्भावः, न त्वादिविषयकव्यवहारे।

ननु "कर्णः" इत्यादि सूत्रारम्भसामर्थ्यादत्र स्वरः स्यादिति चेत्तदपि न समञ्जसम्, असमासे सूत्रस्य चारितार्थ्यात्। कर्णशब्दाद् [4]अर्शादित्वादचि शुक्लः कर्ण इत्यत्राद्युदात्तस्वरसिध्यर्थं तस्य चारितार्थ्यात्। अत्र वर्णशब्दस्य स्वाङ्गवाचित्वाभावात् [5]"स्वाङ्गशिष्टामदन्तानामि"त्यनेन स्वरसिद्धिर्न शक्या।

अत्रोद्द्योतकारः—[6]अपदादिविधाविति एकदेशोक्त्या सम्पूर्ण वार्तिकमुपलक्षितमस्ति, ततश्च प्रतिषेधस्यातिव्याप्तिरस्ति, न तु प्रतिषेधापवादस्य। प्रदीपकृता यदुक्तं कर्णोवर्णलक्षणादित्यादिना तत्तु न साधुतरम्, एवमादिविधिर्न सिध्यतीति भाष्यादुत्तरपदादित्यधिकारस्थसूत्राणां वैयर्थ्यस्यैव दूषणत्वेन प्रतीतिरिति रीत्यापि भाष्यं सुयोज्यम्। अयमाशयः—उतरपदत्वे, इति वार्तिकेन प्रत्ययलक्षणनिषेधात् शुक्लवर्ण इति बहुव्रीहौ वर्णशब्दस्य [7]"कर्णोवर्णलक्षणादि"त्याद्युदात्तता न सिध्येत्, उत्तरखण्डस्य पदत्वाभावात्।

उत्तरं च तत्पदं चेति व्युत्पत्त्या पदसंज्ञक एवोत्तरखण्डो ग्राह्यः, एवञ्चोत्तरपदादिरित्यधिकारे यावन्तः विधयः तावतां समेषां साम्प्रते वैयर्थ्यं स्यादित्येकेषामाशयो वर्णित उद्द्योतकृता। प्रदीपकृता त्वर्शाद्यजन्तो कर्णशब्दे शुक्लः कर्ण इत्यत्रासमासावस्थायां कर्णो वर्णलक्षणादित्यस्योत्तरपदादिरित्यधिकारपठितस्य चारितार्थ्यं दर्शितम्, तत्र सार्थक्यकल्पनायाः सम्भवे सत्यानर्थक्यकल्पना न न्याय्या, इति नियमेन कैयटोक्ता एव युक्तं प्रतीयते इति दिक्।

---

१. प्र० पृ० ४९४
२. भा० वा० ५१६
३. प० शे० प० ८०
४. पा० सू० ५।२।१२७
५. फि० सू० २९
६. उ० पृ० ४९४
७. पा० सू० ६।२।११२

[1]**म० भा० – द्वन्द्वेऽन्त्यस्य लुमतालुप्तप्रत्ययलक्षणं न भवतीति वक्तव्यम् । वाक् च स्रक् च त्वक् च वाक्स्रक्त्वचम् ।**

[2]अत्र प्रदीपसम्मतिः—ननूत्तरपदत्वे चापदादिविधाविति वार्तिकेनैव द्वन्द्वेऽप्यन्त्यस्योत्तरपदस्य लुमता लुप्ते सति प्रत्ययलक्षणप्रतिषेधो भविष्यत्येव, किमनेन वार्तिकारम्भेणेति चेदत्रोच्यते—द्वन्द्वे उत्तरपदस्य प्रत्ययलक्षणप्रतिषेधश्चेत्तर्हि -अन्त्यस्योत्तरपदस्येति नियमार्थमस्य स्वीकारः, यतो हि मध्यमपदस्याऽपि पूर्वपदापेक्षया उत्तरपदत्वसत्वे प्रत्ययलक्षणप्रतिषेधः प्राप्नोति । वस्तुतस्तु मुख्ये उत्तरपदे संभवति मध्यमत्वाक्रान्तस्य तस्य ग्रहणं नोचितमित्येकदेश्युक्तमेवेति तत्त्वम् ।

[3]अत्रोद्द्योतकारः—उत्तरपदशब्दो हि समासस्यान्तावयये योगरूढः तस्यैव ग्रहणमित्यत्रेदं वार्तिकमपि प्रमाणम् । उत्तरपदत्वे इत्यस्य प्रत्याख्यानेऽपि न मध्यमस्य प्राप्तिः, मध्यसुबन्तस्याऽपि स्वादिपरत्वेन विशेषितत्वे स्वादिष्विति योगविभागेनैव पदत्वसंभवात् । एवञ्च वाक् च स्रक् च त्वक् चेति वाक्स्रक्त्वचमित्यत्र मध्यमत्वाक्रान्तस्य स्रक्शब्दस्य पदत्वं सुस्थिरमेव, ततश्च कुत्वमपि सुसाधम् । अत्रोद्द्योतकृता कैयटोक्तं नियमार्थं न समादृयते, इति रूढस्यैव ग्रहणमित्यनेन सूचितम्, तत्रोच्यते नास्ति प्रदीपग्रन्थस्यापराधः, भाष्यमेव तादृशं वर्तते, यथा वाद्यं तथा ध्वनिः, उपसंहारकाले तु मुख्ये उत्तरपदे संभवतीत्यादिना प्रदीपकृतापि तस्य समादृतत्वादिति दिक् ।

[4]**म० भा०—अथवा—शिल्लोपः करिष्यते । स [5]"शित्सर्वस्य" इति सर्वादेशो भविष्यति । तर्हि शकारः कर्तव्यः । न कर्तव्यः । क्रियते न्यास्य एव द्विशकारको निर्देशः—[6]"ध्वसोरेद्धावभ्यासलोपश्च" इति ।**

अत्र प्रदीपाशयः—लोपशब्दस्य कृदन्ताददर्शनरूपार्थेन अर्थवत्वाच्च, प्रातिपदिकसंज्ञायां सुविभक्तिः तदुत्तरः शकारः निर्देष्टव्यः, [7]शकारस्य च हलन्त्यमित्यनेनेत्वे सति लोपस्य शित्वात्सर्वादेशलोपो भविष्यतः । इत्संज्ञा

१. भा० वा० ५२१
२. प्र० पृ० ४९८
३. उ० पृ० ४९८
४. म० भा० आ० सू० १।१।९।५
५. पा० सू० १।१।५५
६. पा० सू० ६।४।११९
७. पा० सू० १।३।३

तूपदेश एव प्रवर्तते, तत्फलभूतं कार्यं तु लक्ष्ये भवति इति शाब्दिकानां राद्धान्तः।

अत्रोद्योताभिप्रायः—ननु द्विशकारको निर्देश इति भाष्योक्तिर्नोपपद्यते, लोपशब्दस्य आनर्थक्येन अप्रातिपदिकत्वात् सुविभक्तिर्न स्यात्, कथञ्चित् तत्सत्वे तु हल्ङ्यादिलोपादिति भावः। तत्ससमाधानं प्रदीपे उक्तम्, [1]सुविभक्तौ कृतायां शकारः प्रतिनिर्दिश्यत इति। एवञ्च तालव्यशकारोत्तरा यदि सुविभक्तिः स्यात्तदा लोपः स्यात्, सा च स्थितिर्नास्ति, किन्तु सुविभक्तेरुत्तरं शकारः।

ननु तावताऽपि शकारस्य संयोगान्तलोपः स्यात्, किं वा सोः सकारस्य संयोगादिलोपः स्यादित्याशङ्कायामुच्यते पदस्य संयोगान्तत्वाभावात् [2]"झलां जश् झशी" त्यत्र असन्देहाय जश्त्वाभाववत्वयोः प्रकृते भावः।

ननु प्रदीपकृता उच्यते—इत्संज्ञा उपदेशे एवेति तत्तु भावघनन्तोपदेश-शब्दाभिप्रायेण। करणघनन्तपक्षेऽपि साधुत्वमुच्यते धातुप्रातिपदिकप्रत्यय-निपातागमादेशानामुपदेशभूतानां [3]"हलन्त्यमिती"त्वेऽपि न दोष इति। शका-रस्य कथं प्रातिपदिकत्वमित्यप्युक्तं शस्य स्वरूपेणार्थवत्तया प्रातिपदिकत्वात्, करणसाधनोपदेशशब्दार्थत्वमिति भावः। एवञ्च हलन्यमित्यत्रोपदेशपदं नानुवर्तनीयम्। ननु लोपविधानकाले शित्वाभावात्कथं तस्य सर्वदिशत्व-मित्याशङ्कायामुच्यत उद्द्योतकृता—इत्संज्ञा उपदेश एवेति। एवञ्च तस्याः अन्तरङ्गत्वं दृष्टव्यम्। ननु लोपशकारयोर्भिन्नपदत्वात् कथं लोपपदार्थे तदित्वफलमिति चेदुक्तमुद्द्योतकृता—[4]अनेकाल्शिदित्यादौ समीपेऽवयवत्वारोपेण न दोषः। अनुबन्धानामवयवत्वरूपेमुख्यपक्षे तु पुनर्लोपवचनसामर्थ्यात्सर्वस्य भविष्यतीति प्रथममेव समाधानं सिद्धान्तितत्वेन ग्राह्यमिति भावः।

**म० भा०—[5]अन्यथाजातीयकेन शब्देन निर्देशः क्रियते, अन्यथा जातीयक उदाह्रियते।**

अत्र प्रदीपकारः भाष्यमेतदित्थं व्याख्याति—अन्यथा जातीयकेनेति। इति शब्दग्रहणेन पूर्ववर्तिनः शब्दस्य स्वरूपपरता संभाव्यते, अन्यथा इत्यत्र

---

१. प्र० पृ० ५०५ २. पा० सू० ८।४।५३

३. पा० सू० १।३।३ ४. पा० सू० १।१।५५

५. म० भा० आ० सू० १।१।१।६–७

थाल्प्रत्ययेन प्रकारमात्रमर्थो गृह्यत इति तदवतोग्रहणाय जातीयर्प्रत्ययो विहितः। यद्यप्येकेनैव प्रत्ययेनेष्टं सिध्यति, तथा ह्यन्यथाशब्देन निर्देशः क्रियत अन्यथा उदाह्रियते, इत्येवोच्यतां जातीयर्प्रत्ययो नोच्यताम्, [1]नास्ति कापि क्षतिरित्याशङ्कायां समाधीयते प्रदीपकृता लौकिके प्रयोगे शब्दकृतं लाघवं नातीवादार्तव्यम्, अतः प्रत्ययद्वयस्य प्रयोगो नानुपपन्नः, केवलेनापि जातीयर्प्रत्ययेन प्रकारवान् अर्थो लब्धुं शक्यत एवेति।

अत्रोद्द्योतकारः—[2]लोके शब्दा अर्थपराः, तत्रेतिशब्दप्रयोगः पदार्थ-विपर्यासं करोतीति शब्दपरत्वदर्शनादत्रापि तत्परता प्रसजति। थाल्प्रत्ययः प्रकारमात्रवाची, जातीयर्प्रत्ययस्तु प्रकारवतोवाचकः, एवञ्च द्वयोः प्रयोगः समीचीन एव, न चैव जातीय एव प्रयोक्तव्यः नास्तु थाल्प्रत्यय इति शङ्कायां समाहितं प्रदीपकृता—लौकिक इत्यादिना। उभयोः प्रकार-वद्वाचित्वेऽप्येवं वक्तुं शक्यमित्युक्तो प्रयत्नो वृथा प्रतीयते, एवञ्च द्वयोर्मध्ये कस्य प्रयोगः कर्तव्य इत्यत्र विनिगमनाविरहः।

**इति महाभाष्य-समीक्षणे पञ्चमाध्यायस्य द्वितीयपादः।**



१. प्र० पृ० ५०८ २. उ० पृ० ५०८

## अथ तृतीय पादः

म० भा०—[1]झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम्। किन्निर्देशः कर्तव्यः। ततो वक्तव्यम्—तस्य च ग्रहणं भवति तद्विशेषाणां चेति। किं प्रयोजनम्? मत्स्याद्यर्थम्। "पक्षि-मत्स्यमृगान् हन्ति"—मात्सिक। तद्विशेषाणाम्-शापरिकः। शाकुलिकः। पर्यायवचनानां भवति—इजिह्मान् हन्ति, अनि-मिषान् हन्तीति। अस्यैकस्य पर्यायवचनस्येष्यते मीनान् हन्ति मैनिकः।

(प्रदीपः)—[2]झित्तस्य चेति। इदं वाचनिकमेव। मत्स्याद्यर्थमिति। मृग-पक्षिणोऽस्तु पिन्निर्देशस्तत्फललाभार्थः कर्तव्यः। अस्यैकस्येति। इयमिष्टिरेव।

(उद्योदतः)—[3]आद्यन्तौ विहाय मध्योपादानेऽभिप्रायमाह—मृगेति। एवं च मत्स्याद्यर्थमित्यादिशब्दप्रयोजनं चिन्त्यम्।

ननु "स्वं रूपं [4]शब्दस्याशब्दसंज्ञा" इति सूत्रसत्वे तत्तत्सौत्रशब्देन स्वरूप-मात्रस्य ग्रहणं स्यान्न तु तद्विशेषस्य तस्य च पर्यायवचनस्य चेति जिज्ञासायां सूत्रसत्ताकालिकन्यूनतां परिजिहर्षुर्भगवान् भाष्यकारः तत्तद्वार्तिकमारभतेऽञ्च शित्तद्विशेषाणां वृक्षाद्यर्थमित्यादि। तत्र च चतुर्थमुपसंहारवार्तिकमिदम्। कुत्रचित् झित्तनिर्देशः कर्तव्यः तस्य तद्विशेषाणान्च ग्रहणाय; यथा [5]"पक्षि-मत्स्य-मृगानि हन्ति" इत्यत्र मत्स्यशब्दः झित्कर्तव्यः, मत्स्य झ इति निर्देशः कर्तव्यः, तत्र किं फलं स्यादिति जिज्ञासायामुच्यते स्वयं भगवता—मात्स्यिकः" इति स्वरूपग्रहणे फलं तद्विशेषाणां ग्रहणं च शफरी हन्ति शाफरिकः, इत्यत्र शफरीशब्दात् मत्स्यविशेषबोधकादपि ठप्रत्ययः। मृगपक्षिणोस्तु पिन्निर्देशः पर्यायग्रहणार्थः कर्तव्यः, मत्स्यपर्याये त्वैकस्यैव ग्रहणमिष्यने मीनस्येति

---

१. भा० वा० ५६२

२. प्र० पृ० ५२१

३. उ० पृ० ५२१

४. म० भा० आ० सू० १।१।६८

५. म० भा० पृ० ५२१

स्वतन्त्रेष्टिरूपेण वचनं तदर्थं कृतम्। अत्रोद्द्योतकारः—[1]मत्स्याद्यर्थमिति भाष्योक्तौ चिन्ताबीजमुपस्थापयते, एवञ्च मत्स्याद्यर्थमित्यादिशब्दप्रयोजनं चिन्त्यमिति। यतो हि—आदिपदेन मत्स्य आदिर्यस्येति बहुव्रीहिसमासेन मृगस्य ग्रहणं प्राप्तं किं वा मत्स्यस्य, मत्स्यशब्दस्य आदिरिति षष्ठीतत्पुरुषेण पक्षिणो ग्रहणं प्राप्तम्, तत्तु नेष्टं पिन्निर्देशेनैव तत्रेष्टसिद्धेः। यदि तु झिन्निर्देशेन तद्विशेषाणां ग्रहणं भवति, तच्च मत्स्याद्यर्थमिति। अत्रादिपदेन मृगपक्षिणां ग्रहणे कृतेऽपि न दोषः प्रतीयते यतो हि पिन्निर्देशेऽपि तद्विशेषाणां ग्रहणं भवत्येव, पर्यायस्याऽपि ग्रहणं भवति तर्हि भवतु नाम, अधिकं प्रविष्टं न तु तद्धानिकरमिति नियमेन क्षत्यभावात्, एवञ्चाद्यन्तयोः पक्षिमृगयोः कृतेऽक्षिन्निर्देशः नापूर्वफलकः किन्त्वनुवादक इति प्रदीपोद्द्योतालोचनेन तत्त्वं प्रतिभातीति दिक्।

**म० भा०—एवं [2]तर्हि सिद्धे सति यदप्रत्यय इति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो—"भवत्येषा परिभाषा" भाव्यमानेन सवर्णानां ग्रहणं नेति।**

(प्रदीपः)—[3]भाव्यमानेनेति। प्रतीयते विधीयत इति यौगिकस्यात्र प्रत्ययस्य ग्रहणमिति भावः।

(उद्द्योतः)—[4]नन्वल्पविषयेणाप्रत्यय इत्यनेन कथं बहुविषयपरिभाषार्थः। शक्यते प्रतिपादयितुमत आह—प्रतीयत इति।

अत्र समीक्षा—[5]"अणुदित्सवर्णस्य चाप्रत्ययः" इति सूत्रेऽत्यल्पमिदमुच्यते प्रत्यय इति। अप्रत्ययादेश टित्किन्मित इति वक्तव्यमित्युक्त्वा प्रत्ययादेशादिषूदाहरणञ्च प्रदर्श्य सर्वेषां प्रयोजनानां निराकरणं च विधाय उच्यते भगवता भाष्यकृता—एवं तर्हि सिद्धे सति यदप्रत्यय इति प्रतिषेधे शास्तीत्यादि।

अत्र प्रदीपाशय इदृशः प्रतीयते विधीयत इति प्रत्ययः, इति यौगिकस्य प्रत्ययशब्दस्यात्र ग्रहणम्, इति पूर्वकाद् [6]इण् धातोरेरचीति सूत्रेणा चि प्रत्यये निष्पन्नोऽयं प्रत्ययशब्दः। एवं च प्रत्ययभिन्न एवाऽण् सवर्णाद्ग्रहिष्यति,

१. उ० पृ० ५२ २. म० भा० पृ० ५२३
३. प्र० पृ० ५२३ ४. उ० पृ० ५२३
५. म० भा० आ० सू० १।१।६१० ६. पा० सू० ३।३।५६

प्रत्ययश्च विधीयमानमात्रं तत्रागमादेशयोरपि संग्रहो भवितुमर्हति । [१]एवं च भाव्यमानेन सवर्णानां ग्रहणान्नेत्येषा परिभाषा योगार्थातो ज्ञापितेति भावः ।

उद्द्योतकृताऽपि प्रदीपोक्तोऽयं भाष्याभिप्रायः अनुमोदितः–[२]नन्वल्पविषय इत्यादिना । पुनश्च भाष्ये योजयत्युद्द्योतकारः—ज्ञापयतीत्यस्य योगेन बोधयतीत्यर्थः । एवञ्च यथा–सिच इडागमे कृते इस् इत्यस्य सिज्ग्रहणे-नाग्रहणे [३]"नेटी"ति सूत्रं व्यर्थं स्यादिति ज्ञापयति—भवत्येषा परिभाषा-यदागमास्तद्गुणी [४]भूतास्तद्ग्रहणेन गृह्यन्त इति । तत्फलं चान्यत्रापि प्रणिदापयतीत्यादौ भवति, स्वांशे चारितार्थ्यमपि भवति । तादृशं त्विदं ज्ञापनं नास्ति, अतः योगेन बोधयतीत्यर्थं कृत्वा उद्द्योतकारः समादधौ । अप्रत्यय इति च वाक्यभेदेन निषेधाऽर्थम्, अपीत्यस्य चाऽत्र वाक्ये सम्बन्धा-भावः ततः, प्रत्यागमादेशेषु सवर्णग्रहणाभावे लब्धे एषा परिभाषा सिध्यति ।

वस्तुतस्तु विधीयत इत्यर्थे प्रतीयत इत्यस्य कुत्रापि प्रयोगो नास्तीत्य-प्रत्ययग्रहणमेकदेशानुमतिद्वारा एनां परिभाषा ज्ञापयतीति भाष्याशयः ज्ञातव्यः, एवञ्च प्रतीयते विधीयत इत्यादिप्रदीपग्रन्थः चिन्त्यः । वस्तुतस्तु योगाद्रूढिर्बलीयसीति दृष्ट्या उद्द्योतग्रन्थस्य समीचीनत्वेऽप्येकदेशानुमतिः परिभाषाज्ञापने साधनत्वेनाश्रयणीया भविष्यति, प्रदीपनये तु यदि रूढिशक्तिः परित्यक्ता स्यात्तदा सर्वांशेऽनुमतिरागच्छेत्, सा चाशंक्याऽनुमत्यपेक्षया श्रेयसी प्रतीयते । भाष्यकृताऽप्युपक्रम उक्तम्—अत्यल्पमिदमुच्यते ह्यप्प्रत्यय इति । पुनश्चाल्पतां परिहर्ता भगवतोक्तमयमेव निषेधो भाव्यमानेनेति परि-भाषां ज्ञापयति, तेनेदं प्रतीयते यत्प्रत्यये ग्रहणेऽप्यल्पता नास्ति, स चाल्प-त्वाभावः योगशक्त्यभिप्रायेणैवेति भावः ।

**म० भा० –[५]तत्र प्रत्याहारग्रहणे सवर्णानां ग्रहणं न प्राप्नोति—[६]"अकः सवर्णे दीर्घः" इति । किं कारणम् ? "अनु-पदेशात्" । यथा—जातीयकानां संज्ञा कृता तथा जातीयकानां संप्रत्यायिका स्यात् । ह्रस्वानां च क्रियते ह्रस्वानामेव संप्रत्या-यिका स्याद्दीर्घाणां न स्यात् ।**

---

१. प० शे० प० १९
२. उ० पृ० ५२३
३. पा० सू० ७।२।४
४. प० शे० प० ११
५. भा० वा० ५६४
६. पा० सू० ६।१।१०१

अत्र प्रदीपकारः—भाष्यमिदं व्याचष्टे—प्रत्याहारग्रहणे—इत्यादिना। अयमाशयः—"अक्कोऽची"ति यत्र तत्तत्संज्ञया इकारादीनां ह्रस्वानां बोधनं विधीयते, तत्र तैः संज्ञाशब्दैरन्येषां दीर्घादीनां ग्रहणं न स्यात्, यत्र तु स्वरूपेणोच्चार्यन्ते [1]"अच्च च्वौ" [2]"यस्येति चे"ति तत्रैवाकारादिभिः येषां दीर्घादीनां ग्रहणं भवितुमर्हति। "अकः सवर्णे [3]दीर्घः" इत्यादौ तु प्रत्याहारे दीर्घाणामनुच्चारणाद् आदिशब्दैः तेषां ग्रहणं न स्यादिति भाष्याशयः। अथवा "अक्कोऽची" त्यादौ अगादिप्रत्याहारेऽनुच्चारिताः इकारादयो वर्णाः दीर्घाणां ग्राहका न भविष्यन्तीति भावः।

अत्रोद्द्योतकारः—नन्विदं सवर्णग्रहणरूपं प्रयोजनम् [1]"अस्य च्वावि"-त्यादौ अगादिप्रत्यारेषु वा, तत्राद्यपक्षः न समीचीनः, तत्रानुवृत्तिनिर्देश इत्यादिना भाष्यकृतैव दोष इष्यमाणत्वात्। द्वितीयपक्षोऽपि न संभवति, तथा हि-प्रत्याहारग्रहणे सवर्णग्रहणमिति वार्तिकस्य व्याख्याद्वयी संभाव्यते। "अकः" इत्यादाविकारादीनां दीर्घाणामगादिसंज्ञाभिः ग्रहणं न स्याद्वर्णसमाम्नाये तेषामनुच्चारणात्।

एकस्यैवैकस्मिन् काले बोध्यत्वं बोधकत्वमुभयं न संभवति-विरोधात्। यत्र स्वरूपेणोच्चार्यन्ते-इति प्रदीपोक्तिः न युक्ता व्यक्तीनामानन्त्ये तत्र णत्वं नास्ति, प्रत्युच्चारणशब्दानां भेदात्। अतश्च यः स्वरूपेणोच्चारितः "अकः" इत्यादावकारः "इकः" इत्यादाविकारः, तस्यैव ग्राहकत्वं स्यादिति प्रदीपकृता वक्तव्यं स्यात्। न हि प्रत्याहारे दीर्घाः उच्चारिताः इति प्रदीपवाक्ये प्रत्याहारशब्देनागादयो न ग्राह्या अपितु तादर्थ्यात्ताच्छब्दमिति रीत्या "[4]अइउण्" इत्यादीनि सूत्राणि ग्राह्याणि। पुनश्चोद्द्योतकारः भाष्यं योजयति यथा-जातीयकानामिति। अक्षरसमाम्नायपठितानामित्यर्थो बोध्यः। संज्ञापदेन आदिरन्त्येनेत्येतत्सूत्रेण कृताः अगादिसंज्ञाः ग्राह्याः, अथवा प्रदीपग्रन्थ इत्थं व्याख्येय अगादाविकारादिभिर्ह्रस्वैः दीर्घाणां ग्रहणं न संभवति, कुतो हेतोरनुपदेशात्-[5]"अक्कोऽची" त्यादौ इकारादीनामुच्चारणाभावात्, तदेवोच्यते-अथवा इत्यनेन प्रदीपे। भाष्यस्वारस्यं तु प्रथम एव व्याख्याने निहितमस्ति।

वस्तुतस्तु यत्र स्वरूपेणेत्यादि प्रदीपग्रन्थस्य यच्चिन्त्यत्वमुक्तमुद्द्योतकृता

---

१. पा० सू० ७।४।३२ २. पा० सू० ६।४।१४८
३. पा० सू० ६।१।१०१ ४. पा० सू० ७।४।३२
५. शि० सू० १

तत्साधुतरं न प्रतिभाति, यतो हि–व्यक्तीनामानन्त्ये तत्राण्वाभावः हेतुरुगातः। विचारे क्रियमाणे तु प्रत्युच्चारणं शब्दाः नैव भिद्यन्त इति पक्षमादाय प्रवृत्तस्य प्रदीपस्य नासाधुत्वमिति शम्।

**म० भा०–[1]तपरस्तत्कालस्येति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नाग्रहणम्। "[2]तपरस्तत्कालस्य" इति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नानां ग्रहणं न प्राप्नोति। केषाम्? उदात्तानुदात्तस्वरिता (नुनासिका) नाम्।**

(प्रदीपः)—[3]दीर्घग्रहण इति। भेदका उदात्तादय इति भावः। तत्र वृद्धिरादैजिति षण्णामकाराणां वृद्धिसंज्ञेष्यते, एकस्यैव तु दीर्घस्य स्यात्। तपरत्वैजर्थमेव स्यात्।

(उद्द्योतः)—[4]षण्णामिति। अनुनासिकाकारस्य वृद्धिसंज्ञायां फलाभावादवसाने तदभावाच्चेदं चिन्त्यम्। अत एव वार्तिके स्वरभिन्नेत्येवोक्तम् न तु गुणभिन्नेति। भाष्येऽप्युदात्तानुदात्तस्वरितानामित्येव पाठः। ननु तत्र तपरत्वसामर्थ्यादयस्य सूत्रस्यावृत्तिमङ्गीकृत्यावृत्तस्याण् ग्रहणाननुवृत्त्या विध्यर्थवान्न दोष इत्यत आह–तपरकरणमिति।

अत्र समीक्षा—"[5]तपरस्तत्कालस्ये" ति सूत्रं तः परो यस्मात्स तात्परश्चोच्चार्यमाणो वर्णः सवर्णस्य समकालस्यैव संज्ञा स्यादित्येवं नियमार्थत्वे दीर्घग्रहणं स्वरभिन्नानां ग्रहणं न प्राप्नोति। यथा–"[6]पथिमथ्यृकुक्षामात्" इत्यादौ भेदका उदात्तादय इति पक्षमादाय दीर्घेणाकारेण भिन्नस्वरकाणां ग्रहणं न स्यादेकस्यैव ग्रहणं स्यात्। तपरकरणं तु मुखसुखार्थमुच्चारणार्थं वा। एवमेव "[7]वृद्धिरादैजि" त्यत्रापि तपरकरणेन एकस्यैव दीर्घाकारस्य वृद्धिसंज्ञा स्यादिष्यते तु षण्णामप्युदात्तानुदात्तस्वरितानुनासिकानामिति। तपरकरणं त्वैजंशे समकालग्रहणार्थम्, तेन प्लुतयोरैकारौकारयोर्न वृद्धिसंज्ञा–इति।

---

१. भा० वा० ५८०
२. म० भा० आ० सू० १।१।६।१०
३. प्र० पृ० ५३१
४. उ० पृ०, ५३१
५. म० भा० आ० सू० १।१।७०
६. पा० सू० ७।१।८५
७. पा. सू० १।१।१

अत्रोद्द्योतकारः—इमं प्रदीपाशयं दूषयन् ब्रूते—[1]अनुनासिकाकारस्य वृद्धिसंज्ञायां प्रयोजनाभावादिदं चिन्त्यमिति। तत्र प्रमाणमप्युपन्यस्यति–अत एव वार्तिके स्वरभिन्नानामित्येवोक्तं न तु गुणभिन्नानामिति। भाष्येऽप्युदात्तानुदात्तस्वरितानामित्येव पाठः, न तु स्वरितानुनासिकानामिति। अतश्चानुनासिकोपादानं भाष्येऽपि नास्त्येव। तपरकरणं त्वैजर्थमिति प्रदीपग्रन्थम वतारयति–नन्वित्यादिना।

अयं भावः "[2]वृद्धिरादैजि"त्यत्र तपरकरणसामर्थ्याद् एतत्सूत्रस्य (तपरसूत्रस्य) आवृत्तिं विधायावृत्तस्याण्ग्रहणाननुवृत्त्या विध्यर्थतया न दोष इति वक्तुं न शक्यते, यतो हि [3]वृद्धिरादैजित्यत्र तपरकरणे जशि चरितार्थम्।

अत्रोद्द्योतकृता यदीदमुक्तमू-अनुनासिकाकारस्य वृद्धिसंज्ञायां फलाभावादित्यादिकम्। तत्रेदमालोच्यते–वस्तुगत्यभिप्रायेणेयमुक्तिः प्रदीपकारस्य, यथा–[4]ञमङ्णनम् [5]झभञ् इत्यनयोः मकारप्रत्याख्यानेन एकसूत्रत्वपक्षे "[6]ङमो ह्रस्वादचि ङमुट् नित्यमि"ति न्यासेन झकारभकारयोरपि झुट्भुटौ प्राप्स्यत, इति शङ्कायामिष्टापत्तिर्दर्शिता, तादृशलक्ष्याणामभावात्। पदार्थोपस्थितेः समकालिकं यथासंख्यं गृहीत्वा शाब्दबोधः कर्तव्य इत्यादि। तादृशभाष्येण तुल्यैवात्रापि प्रक्रिया मन्तव्या, लक्ष्येऽनुनासिकाकारः दीर्घत्वविशिष्टः, यदि न प्राप्तो भवति तर्हि माभून्नाम। उपस्थितिस्तु भविष्यत्वे सा केन वारयितुं शक्यते, अनुकरणादिना तस्यापि लाभः कर्तुं शक्यत इति विचारणीयम्।

**इति महाभाष्य-समीक्षणे पञ्चमाध्यायस्य तृतीयपादः।**



---

१. उ० पृ० ५३१
२. पा० सू० १।१।१
३. पा० सू० १।१।१
४. शि० सू० ७
५. शि० सू० ८
६. पा० सू० ८।३।३२

# अथ चतुर्थः पादः

**म० भा०—[1]अपि चान्तरङ्गबहिरङ्गे न प्रकल्पेयाताम्। तत्र को दोषः? स्योनः स्योना। अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः प्रसज्येत। ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुणः।**

अत्र समीक्षा—[2]येन विधिस्तदन्तस्येति सूत्रे यथैव प्रकृतितः तदन्तविधिर्भवत्येवमादेशतो भविष्यति पक्ष इदं दूषणमुपस्थापितम्—अपि चान्तरङ्गबहिरङ्गे न प्रकल्पयेयातामिति।

अयमाशयः—शिवधातोः बाहुलकादणादिके नप्रत्यये गुणस्य वलोपस्य उठश्च प्रसक्तिरस्ति। तत्र अपवादत्वादुडादेशः वलोपं बाधिष्यते, गुणं त्वन्तरङ्गत्वाद्बाधिष्यते, यतो हि गुणादेशोऽङ्गसम्बन्धिनि इग्रूपां लघ्वीमुपधामार्धधातुकञ्च निमित्तत्वेनाश्रयति, उडादेशस्तु वकारान्तमङ्गमनुनासिकादींश्च प्रत्ययमाश्रयन्तीत्यल्पापेक्षत्वादन्तरङ्गः तत्र कृते यण्गुणौ प्राप्स्यतः, तत्र वर्णमात्रापेक्षत्वाद् यणादेशोऽन्तरङ्गः सन् पूर्वं प्रवर्तते। [3]वर्णादाङ्गं बलीय इति तु वार्णाङ्गयोः समानाश्रयत्व एव प्रवर्तते, यथा—"कारः" इत्यत्र धनमाश्रित्य यग्वृद्ध्योः प्राप्तावाङ्गस्य वृद्ध्यादेशस्य प्राबल्यं बोधयितुमस्य न्यायस्य प्रवृत्तिः, प्रकृते तु सा स्थितिर्नास्ति। यदि च "[4]इको-यणची" त्यत्र तदन्तविधिस्तदादिविधिश्च स्याताम्, तदा यणादेशस्यान्तरङ्गत्वाभावात्परत्वाद् गुणादेशः स्यादिति, "सि न" इत्यवस्थायां तस्मिन् लघूपधगुणे जाते सति सयोन इति रूपं स्यात्, असति तदनन्ततदादिविधित्वे तु योऽन्तरङ्गस्तस्य प्रवृत्तिः स्यादिति यणादेश एवान्तरङ्गत्वाद् भविष्यति, स एव चेष्यत इति भाष्यतात्पर्यं प्रदीपकृद्ब्रूते।

अत्रोद्द्योतकारः—अन्तरङ्गबहिरङ्गे न प्रकल्पेयातामित्यादिभाष्याशयं विवृणोति। वर्णमात्राश्रयत्वेन वारणस्यान्तरङ्गत्वमिष्यते, तद्वारणं कार्यमपि यदि समुदायस्य स्यात्तर्हि गुणापेक्षया न कोऽपि विशेषः स्यात्, अन्त-

१. म० भा० पृ० ५३६ २. म० भा० आ० सू० १।१।९।१२

३. पा० शे० प० ५५ ४. उ० पृ० ३५६

रङ्गलक्षणस्य (अन्तरङ्गत्वाभिमतस्य) यणादेशस्य तव मते उभयोः समत्वेन परत्वाद् गुणो बाधकः स्यात्, लघूपधगुणः निमित्तपञ्चकमाश्रयति, उठ् तु तच्च तुष्कमिति विशेषः। वार्णादाङ्गमिति न्यायस्य समानाश्रय एव प्रवृत्तिः न तु नानाश्रय इति प्रदीपाशयं दूषयति - नानेति। अचि परतः यण् सार्वधातुकादिप्रत्यये परतः लघूपधगुणमित्येवं निमित्तभेदः, वस्तुतस्त्वियं प्रदीपोक्तिः चिन्त्या, इयाय इत्यादि प्रयोगाणामसिद्ध्यापत्तेः, ज्ञापकासंभवाच्च। सत्वतुकोरित्यत्र हि तुग्ग्रहणमेतज्ज्ञापकं तत्र समाननिमित्तकत्वं नास्ति। केचित्त्वत्राऽपि तदादितदन्तविधौ वर्णाश्रयत्वाभावान्न तन्न्यायाप्रवृत्तिः, अथवा अनित्यत्वादपि प्रवृत्तेरभावो वक्तुं शक्यः। तदन्ततदादिविध्योः सत्वे तु यणादेशस्य ऊनशब्दनिमित्तकत्वाद् नान्तरङ्गत्वम्। इदमत्र विचारणीयं यदेवमपीगन्तशब्दस्य यणान्त आदेश अजादिशब्दे परे, इत्येवं सूत्रार्थे यण् इगन्तशब्दाजादिशब्दमात्रापेक्षत्वम्, गुणस्य तूक्तरीत्या पदार्थपञ्चकापेक्षत्वमिति बहिरङ्गत्वमस्त्येव। अतः संज्ञाकृतं बहिरङ्गत्वं नाश्रयणीयम्, उडादेशस्तु गुणापेक्षया नित्यः कृताकृतप्रसङ्गीत्वात्, सिद्धान्ते तृठि कृते यणाबाधितत्वाद्गुणो न नित्यः, इदानीमुठो सिद्धिरपि दोषं इत्यपि भाष्याशयः।

तदादितदन्तविधित्वे सति तु यणा तुल्यनिमित्तः गुण इति लघूपधगुणो न बहिरङ्गः। ऊनशब्दमाश्रित्येत्यादिभाष्योक्तिं व्याचष्टे—तथा हि ऊनशब्दमाश्रित्येत्यादिना यणो बहिरङ्गत्वं गुणस्यान्तरङ्गत्वं दर्शितमस्ति, एवं च परत्वाद् गुणस्य स्यादिति प्रदीपोक्तिः न रमणीया, अनेन हि भाष्येण परिभाषायामङ्गशब्दो निमित्तपरो, न तु स्थान्यादिपरोऽपीति सूच्यते, यण्निमित्तो न शब्दावयवत्वेन नशब्दस्य ततो बहिरङ्गत्वाभावः, किन्त्वन्तर्भूतत्वमेव। गुणनिमित्तशब्दाद् ऊनशब्दस्य बहिर्भूतो कारघटितत्वात्तन्निमित्तकस्य यणो बहिरङ्गत्वमित्यभिप्रायः।

अत्र इयाय इत्याद्यसिद्धेः [1]वार्णादाङ्गमिति न्यायस्य समानाश्रयत्वं चिन्त्यम्, समानाश्रयत्वकथनं प्रदीपकारीयं चिन्त्यमिति तु न सम्यक्, यतोहि—उद्देश्यांशे तत्राऽपि समानाश्रयत्वमस्त्येव एवमेव परत्वाद् गुणः स्यादिति प्रदीपोक्तिश्चिन्त्या इत्यपि न सम्यक्, यतो हि - यदि—"इको [2]यणची"त्यत्र तदन्ततदादिविधिः स्यातां तदा इयमुक्तिरित्यप्यालोचनीयमस्तीति दिक्।

---

१. प० शे० प० ५ २. पा० सू० ६।१।७७

[1]म० भा०—अलैवानर्थकेन नान्येनानर्थकेनेति वक्तव्यम्। किं प्रयोजनम्? "हन्ग्रहणे प्लीहन्ग्रहणम्"। (हन्ग्रहणे प्लीहन्ग्रहणं) मा भूत्। "उद्ग्रहणे गर्मुद्ग्रहणम्"। (उद्ग्रहणे गर्मुद्ग्रहणं माभूत)। "स्त्रीग्रहणे शस्त्रीग्रहणम्"। (स्त्रीग्रहणे शस्त्रीग्रहणं माभूत्) (संग्रह "पायसंग्रहणं") सङ्ग्रहणे पायसङ्करोतीति मा भूत्।

अत्र प्रदीपकारः—[2]अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमितिपरिभाषा वर्णग्रहणे न समाश्रियते, वर्णरूपतया यस्य शब्दस्य यत्र सूत्रे श्रयणं कृतमस्ति स्वंरूपमित्यनेन शास्त्रेणार्थतारूपं नाश्रियते। तत्र वर्णग्रहणञ्च सर्वत्रेत्यत्र वर्णग्रहणे जातिग्रहणाद् वर्णसमुदायग्रहणे क्वचिदनर्थकस्य समुदायस्य ग्रहणं प्राप्तमनेन नियमेन वार्यते, यथा—दम्भधातोः सनि [3]"दम्भ इच्चे" त्यनेनेत्वे [4]"हलन्ताच्चे"त्यनेन झलादेः सनः कित्वे नदितामित्युपधाभूतस्य नस्य लोपे "एकाचो [5]बशो भष्" इति भष्भावे द्वित्वेऽभ्यासकार्ये धिप्सतीति सिध्यति। तत्र [6]"हलन्ताच्चे"ति सूत्रप्रवृत्तौ हलपदेन मकारभकारयोर्हलोः समुदायो गृहीतः। अलैवेति च तृतीयैकवचनेन एकत्वसंख्यागुणत्वाद्विवक्षिताऽस्ति, नियमविधानसामर्थ्याद्वा। अत्र भाष्ये एतस्य वार्तिकस्य फलमुक्तम्—हन्ग्रहणे प्लीहन्ग्रहणं माभूदिति। अतः प्लिहन्शब्दादौ विभक्तौ प्लिहानाविति दीर्घघटितं रूपं भवत्येव। पुनश्चोदग्रहणे गर्मुद्ग्रहणं माभूत्तस्येदं तात्पर्यं [7]यदुदःस्थास्तम्भोरित्यत्र गर्मुत्स्थाता इत्यत्र पूर्वसवर्णाभावः, स्त्रीग्रहणे शस्त्रीग्रहणं माभूत्, तत्फलं तु स्त्रियामितिवत् शस्त्र्यामित्यत्र यङ् न भवति तथा सङ्ग्रहणे पायसग्रहणं माभूत्, तत्फलं पायसं करोतीति, "सम्परिभ्यां [8]करोतौ भूषणे" इत्यनेन सुडागमो न भवति। एतेषु हन्ग्रहणे स्त्रीग्रहणे च अङ्गस्य विशेष्यत्वात् तदन्तविधिः भवत्येव, प्रतिषेधविज्ञाने तु न भवति, उद एव तवर्गेण विशेष्यत्वात् तोरित्यस्य "उदः [9]स्थे"ति सूत्रेऽनुवृत्यभावात्। सङ् इत्यस्योपादाने तु पदप्रकरणात्तदन्तविधिः संभव-

१. भा० वा० ६१८
२. प्र० पृ० ५४९
३. पा० सू० ७।४।५६
४. पा० सू० १।२।१०
५. पा० सू० ८।२।३७
६. पा० सू० १।२।१०
७. पा० सू० ८।४।६१
८. पा० सू० ६।१।३७
९. पा० सू० ८।४।६१

तीति स निवार्यते, पदेन समादयो विशेष्यन्ते, पदसंज्ञकाः समादय इति। एवञ्च तदन्तविधिः न भविष्यति। पायसं करोतीत्यत्र कृधातोः भूषणार्थकता संभवतीति सुटः सम्भवः।

अत्रोद्द्योतकारः—[1]नन्वलानर्थकेन तदन्तविधिं प्रतिपादनं न युक्तं प्रतिभाति, यतो हि—अर्थवत् परिभाषा विरोध आयातीति समाधत्ते प्रदीपकारः [2]अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति। इदं च [3]"स्वरूपमि"ति सूत्रे स्थितमिति। तत्र हेतुः दर्शयते प्रदीपकारेण वर्णरूपतया यस्येति तत्र वर्णरूपत्वसमानाधिकरणमर्थत्वरूपं नाश्रियत इति भावः। क्वचिद्वर्णसमुदायग्रहणं प्राप्तमित्येव पाठः, तत्रानर्थकेति पदमादौ योजनीयम्, अलैवेति च एकत्वसंख्या विवक्षते गुणत्वादिति प्रदीपवाक्ये गुणत्वादित्यस्य तदन्तविधिनियमशेषत्वादित्यर्थः। वर्णसमुदायेन चेत्तदन्तविधिः तर्ह्यर्थवत्ता एव, न त्वनर्थकेन, एवञ्च धिप्सतीत्यत्र मा भा इति वर्णद्वयघटितसमुदायेऽर्थवत्वाभावात्तदन्तविधेरभाव एवेति फलति। केचनाचार्यास्त्वन्ये व्याचक्षते यदङ्गाधिकारे तदन्तविधेरतिप्रसङ्गो मा भूदिति तद्वारणाय इदं वार्तिकम्, वर्णग्रहणञ्चेति—अन्वाख्यावार्तिके ज्ञापकसिद्धजातिग्रहणे न मानम्, एवमलैवानर्थकेनेति वार्तिकेऽपि। एकत्वसंख्यागुणत्वान्न विवक्ष्यत इत्यत्राऽपि न मानम्, जातिपरत्वे तद्गतसङ्ख्याया एव तदुत्तरविभक्तिवाच्यत्वेन तद्विवक्षयाऽपि दोषोऽत्रास्यासंभवादिति। दीर्घो भवतीति, तेन इन्हन् इति नियमेन दीर्घस्य निवृत्तिर्न भवतीति ज्ञाप्यते, यतो हि—हन् इत्यनेनार्थवान् एव हन् गृह्यते, प्लिहनित्येतद्घटको हन्शब्दस्त्वनर्थकः, अतः तत्रैतद्ग्रहणाभावान्न तेन नियमेन काचिद्धानिः। उदः [4]स्थास्तम्भोरित्यत्र "तोरि"त्यधिकारात् तवर्गान्तस्योच्छब्देन विशेषणात्तदन्तविधिर्दर्शितः प्रदीपे, स तु नातीव युक्तः, तत्र "वा [5]पदान्तस्य" इत्यतः पदग्रहणमनुवर्त्य तस्य उच्छब्देन विशेषणात्तदन्तविधिः कर्तव्यः, एवञ्चोच्छब्दान्तस्य पदस्येत्यर्थ उचितः।

नन्वव्यभिचारात्तवर्गेण उदो विशेषणव्यर्थमुच्छब्दस्य सर्वथा तवर्गान्तरत्वादित्यत उक्तं प्रदीपे निवृत्तत्वादिति। यथा—"तोरि"ति निवृत्तं तथैव फलाभावात्पदग्रहणमपि निवृत्तं बोध्यम्। पदेन समादयो विशेष्यन्त इत्यत्र

---

१. उ० पृ० ५४९
२. प० शे० प० १४
३. पा० सू० १।१।६८
४. पा० सू० ८।४।६१
५. पा० सू० ८।४।५९

"एङः [1]पदान्तादति" इत्यतः पदग्रहणमनुवर्तनीयम्। पायसं करोतीत्यत्र पायसं भूषयतीत्यर्थं संभवत्येवेति प्रदीपाशयः।

अत्रेदमप्यालोच्यताम् उद्द्योतकृताऽन्ये तु मते यदुक्तमन्वाख्यानवार्तिके—ज्ञापकसिद्धिजातिग्रहणे न मानमित्येवमलैवेति वार्तिकेऽपीति च, तन्न साधुतरं प्रतिभाति, यतो हि—[2]"निपात एकाजनाङि" ति सूत्रे निपातो जनाङित्येव सिद्धे एकग्रहणं व्यर्थीभूय ज्ञापयति यद्वर्णग्रहणे जातिग्रहणमिति। तस्य संकोचे न मानमित्यन्वाख्यानवार्तिके [3]"अलैवानर्थकेने"ति वार्तिके चैकग्रहण-ज्ञापितजातिग्रहणे संकोचो भवितुं नार्हति, असति बाधके ज्ञापनानां सामान्ये पक्षपातित्वात् एवमेकत्वसङ्ख्या विवक्षते गुणत्वादित्युक्तेश्चिन्त्यत्वे हेतुरुक्तः जातिपरत्वे तद्गतसंख्याया एव तदुत्तरविभक्तिवाच्यत्वेन तद्विवक्षयाऽपि दोषानुद्धारादिति। तदपि न रमणीयतरं यतो हि—जातिपक्ष एवात्र (अलंशे वर्णांशे वा) ग्राह्यः, इति नियमो नास्ति, किन्तु व्यक्तिपक्षोऽपि विनिगमनाविरहाद् ग्रहीतुं शक्यते, किञ्च जातिपक्षेऽपि संख्यायाः व्यक्तिद्वाराऽपि जातौ अन्वयः कर्तुं शक्यते, जातौ गुणरूपायाः संख्यायाः साक्षादन्वयासंभावात्। एवञ्च साक्षाद्व्यक्तौ व्यक्तिद्वारा वा जातौ अन्वये दोषोद्धारः संभवत्येव। एवमेव "उदः [4]स्थास्तम्भोरि"त्यत्र "वा पदान्तस्ये"[5]त्यतः पदग्रहणमनुवर्त्योच्छब्दान्तस्य पदस्येत्यर्थे औचित्यं दर्शितं न तु तवर्गान्तस्योच्छब्दस्येत्यर्थे। तदप्यसमञ्जसमेव, यतो हि—[6]"ययोरेव समो दोषः परिहारः तयोः समः" इति न्यायेन स्वयमेव समाधानं कृतमव्यभिचारात्तवर्गेणोदो विशेषणं व्यर्थं फलाभावादुदापदस्य विशेषणं व्यर्थमिति द्वयोर्निवृत्तिः समुचितेत्याशयः।

**म० भा०—[7]सिद्धमजाकृतिनिर्देशात्। सिद्धमेतत्। कथम्? "अजाकृतिनिर्देशात्"। अच आकृतिर्निर्दिश्यते।**

प्रदीपकार इदं भाष्यमित्थं व्याचष्टे—यद् "[8]वृद्धिर्यस्याचामादिस्तवृद्धम्" इति सूत्रे चासन्निवेशाभावाद् अज्झल्समुदायरूपतया सर्वस्यापि प्रातिपदिकस्य ग्रहणं प्राप्तमत आदिरित्येतद् नोपपद्यते, यदि चोच्यते जेवादिरिति तदा इहैव स्यादौपगवीया इति, इह च न स्याद् गार्कीया इति, तत्समाधान उक्तं भाष्यकृता -सिद्धमेतदजाकृन्निर्देशादिति।

---

१, पा० सू० ६।१।१०९
२. पा० सू० १।१।१४
३. भा० वा० ६१८
४. पा० सू० ८।४।६१
५. पा० सू० ८।४।५९
६. भा० वा० ६२३
७. म० भा० आ० सू० १।१।९।१३
८. म० भा० आ० सू० १।१।९।१३

अयं भावः यद्यपि सर्वोऽपि शब्द अज्झलुभयसमुदायरूपः, तथापि [6]वृद्धिर्यस्याचामादिस्तद्वृद्धमिति सूत्रेऽचामिति ग्रहणेनाजाकृतिरेव विवक्ष्यते न तु विद्यमानापि हलाकृतिः। तेनायमर्थः निर्गलितो भवति—यस्य शब्दस्य सकलाजपेक्षया आदिरज्वृद्धिसंज्ञकः, स शब्दः वृद्धसंज्ञको भवतु, यथा पङ्क्तौ ब्राह्मणानामादिमानय, इत्युक्ते सति यद्यपि तत्समुदाये शूद्रादयोऽपि वर्तन्ते तथापि तानानादृत्य ब्राह्मणजातीयापेक्षा एव ब्राह्मणा आदिः स एवानीयते, एवञ्च गार्गीया शब्देऽपि विद्यमाना अपि हलो नादृता भवन्ति, केवला अच एवाद्रियन्ते, अतः तेषामेव समुदायः बुद्ध्या कल्पनीयः, तत्रैवादिरच् विचारणीयः, स तु गार्गीयशब्दे गकारोत्तरोऽकार एवेति तत्त्वम्।

अत्रोद्द्योतकारः—प्रदीपग्रन्थमित्थं व्याख्याति—[1]यद् वृद्धिर्यस्याचामिति सूत्रे यस्येति नाचां विशेषणं तेषामन्यविशेषणत्वात्। एवञ्च न ह्युपाधेरुपाधिसंभवति विशेषणस्य च विशेषणमिति न्यायेनाचामित्यस्यादिविशेषणत्वेन तत्र पुनः यस्येत्यस्य विशेषणत्वान्नौचित्यम्। एवं तर्ह्यादेरेव विशेषणत्वं स्यात्तदपि न व्यवहितत्वेन [2]प्रत्यासत्तिन्यायविरोधात्, किन्तु वृद्धिपदार्थस्यावयवावयवीभावसम्बन्धेन विशेषणम्, अचामिति तु सन्निहितत्वादादेर्विशेषणं न तु वृद्धेः व्यवहितत्वात्। एवञ्च यस्य शब्दस्य वृद्धिरचामादिरित्युक्ते प्राप्तस्याजपेक्षादित्वस्योपपत्त्यर्थं मध्ये विद्यमानाऽपि हलाकृतिर्न विवक्षिता भवति, एवञ्च संकोचे भानाभावात्, सकलाजपेक्षया इत्युक्तं प्रदीपे, यथा ब्राह्मणपङ्क्तावादेर्मध्ये वा विद्यमानोऽपि शूद्रादिः ब्राह्मणानामादिर्ब्राह्मणमानेय इत्यत्र न विवक्षितोऽस्ति, तथैवात्राऽपि अच्समुदाये इत्युक्तावादौ मध्ये वा विद्यमानोऽपि हल् न विवक्षितः।

**म० भा०—[3]संबन्धमनुवर्तिष्यते—"वृद्धिर्यस्याचामादिस्तद् वृद्धम्"। [4]"त्यदादीनि च" वृद्धसंज्ञानि भवन्ति, वृद्धिर्यस्याचामादिस्तद् वृद्धम्। [5]"एङ् प्राचां देशे" यस्याचामादिग्रहणमनुवर्तते, वृद्धिग्रहणं निवृत्तम्। तद्यथा कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते, स यदा निष्क्रान्तकान्तारो भवति तदा सार्थं जहाति [6]"त्यदादीनि च"।**

---

१. पा० सू० १।१।७३
२. ल० श० शे० टी० नि०
३. म० भा० पृ० ५५४
४. म० भा० आ० सू० १।१।९।१४
५. पा० सू० १।१।७५
६. पा० सू० १।१।७४

अयं भावः [1]"त्यदादीनि चे"ति सूत्रे यस्य चामादिर्ग्रहणमनुवर्तत उताहो नेति प्रश्नेऽनुवृत्तिपक्षे शङ्कितं कथं त्वात्पुत्राः मात्पुत्रा इति। तस्यैवाक्षेपस्य समाधाने इदं भाष्यं प्रवृत्तं संबन्धमनुवर्तिष्यत इति।

प्रदीपकार इत्थं व्याचष्ट इदं भाष्यम्—सम्बन्धमिति द्वितीयान्तं पदं न तु प्रथमान्तमनुवर्तिष्यत इत्यस्यानुरोत्स्यते, न हास्यतीत्यर्थः। [2]"त्यदादीनि चे" ति सूत्रं कर्तृभूतम्, अयं भावः त्यदादीनि चेति सूत्रं [3]वृद्धिर्यस्येति सूत्रस्य संबंन्धं न हास्यति, एवञ्च त्यदादीनि वृद्धिसंज्ञानि भवन्ति, [4]"वृद्धिर्यस्याचामादिस्तद् वृद्धमि" ति सम्पूर्णं सूत्रं तत्रानुवर्तते, वाक्यभेदेन च तिष्ठति। पुनः [5]"एङ् प्राचां देशे" इत्यत्र यस्याचामादेर्ग्रहणमनुवर्तते वृद्धिग्रहणञ्च निवर्तते अथवा संबध्यत इति संबन्धं कर्मणि घञ्, नपुंसकेति बाधकाभावादस्मादेव भाष्यप्रामाण्याद्वा भवति प्रयोगः एवञ्च वृद्धिग्रहणसंबद्धमादिग्रहणमिहानुवर्तत इति नास्ति तस्य त्यदादीभिः सह संबन्धः। दृष्टान्तरूपेण भाष्य उच्यते - तद्यथेत्यादि। एतेन दृष्टान्तेनात्रेदमायाति यत्स्वरितत्त्वबलेन [6]"एङ् प्राचामि" त्युत्तरसूत्र एव योग्यतया यस्याचामादिरिति संबध्यते, एवञ्च यस्याचामादिरेङ् तद्वृद्धिसंज्ञकमिति सूत्रार्थः सम्बध्यते, त्यदादीनि चेत्यत्र त्वस्य संबन्धो नोपपद्यते, योग्यत्वात्, तुल्यजातीयस्य निर्धारणाच्च। त्यदादीनां चाज्रूपत्वाभावाद् यस्याचामादयस्त्यदादय इत्येवं संबन्धः संभवादिति भावः।

अत्रोद्द्योतकारः—संबन्धमिति नपुंसकं प्रथमैकवचनमिति नोपपद्यते, नपुंसके भावे घनचोरपवादभूतो क्तल्युटौ विधीयेते, स्त्र्यधिकारात्परतो वा स्वरूपविधिश्च न भवतीति। अत एव द्वितीयान्तमेतदित्युक्तं प्रदीपकृता। यदि तु "घन्जपः [7]पुंसि" इत्यत्र घञ्प्रत्ययो भावार्थक एव क्वाचित्कं वचनमित्युच्यते, तदा नपुंसके प्रथमैकवचनान्तमपि सम्यगेव।

ननु चेतनावत एव त्यागोपादाने संभवतः यस्याचामादिरित्यस्य तु कथं त्यागोपादानसंभव इत्याशङ्कायामुक्तं प्रदीपकृता—एतद्दर्शयतीत्यादिना। अय भावः—कान्तार उपस्थिते कश्चित्सार्थं गृह्णाति, यदा तु कान्तारान्निष्क्रान्तो भवति तदा सार्थं जहातीति दृष्टान्तः चेतनावत्यैव सङ्गच्छते तथापि प्रकृते द्राष्टान्तिके सर्वांशतुल्यत्वे आग्रहो न विधेय इत्येवमभ्युपगम्य

---

१. म० भा० आ० सू० १।१।९।१४
२. पा० सू० १।१।७४
३. पा० सू० १।१।७३
४. म० भा० आ० सू० १।१।९।१३
५. म० भा० आ० सू० १।१।९।१५
६. म० भा० आ० सू० १।१।९।१५

स्वरितत्वप्रतिज्ञानादित्यादिना तस्य न्यायस्य प्रकृते योजनाकृता । योग्यत्वादादिरित्यस्य एङ् इत्यनेन एकवचनान्तरे संबन्धः कार्यः तुल्यजातीयस्येति तूपलक्षणं [1]त्यदादीनीत्यनेनादिरित्यस्य भिन्नविभक्तिकत्वाच्चेत्यपि बोध्यम् । यतो हि—समानाधिकरणे विशेषणे विशेष्यगतलिङ्गसंख्यानुरोध आवश्यकः । उक्तञ्च—

**[1]"या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः ।**
**प्रायस्ता एव कर्तव्याः समानाऽर्थे विशेषणे ।।"इति ।**

अत्र तुल्यजातीयस्येत्युपलक्षणमित्युद्द्योतकृदुक्त्या यद्यपि प्रदीपस्य न्यूनता प्रतीयते तथापि तत्र लक्षणया अप्रसिद्धशक्त्या वा द्वयोर्बोधनेन नास्ति न्यूनत्वाशङ्का यथा—"अं अः" इत्यचः परोऽनुस्वारविसर्गावित्यत्र क प इति कपाभ्यां प्रागर्धविसर्गस्तदा जिह्वामूलीयोपध्मानीयाविति वाक्ये वा क्रमेणाकारस्याजुपलक्षणत्वम्, कपयोर्मध्ये क इत्यस्य कखयोः प इत्यस्य च प फयोरुपलक्षणत्वेन बोधनैव न्यूनताशङ्का विधीयते, तथैव प्रकृतेऽप्यभ्युपगन्तव्यमिति तत्त्वम् ।

**इति महाभाष्य-समीक्षणे पञ्चमाध्यायश्चतुर्थपादश्च ।**



1. पा० सू० १।१।७४

# उपसंहारः

"महाभाष्ये नवाह्निकपर्यन्तं प्रदीपोद्द्योतानुसारि-समीक्षात्मकमध्ययनम्" इत्याख्ये लिखिते ग्रन्थेऽध्यायानां पञ्चकं समुल्लसति, प्रत्येकमध्याये पादानां चतुष्टयी राराजते। तत्र प्रथमाध्याये "अथ शब्दानुशासनम्" लोके तावदभक्ष्यो ग्राम्यकुक्कुटः, किं पुनः शब्दस्य ज्ञाने धर्मः, आहोस्वित् प्रयोगे, लृकारोपदेशः क्रियते, यदृच्छाशब्दार्थो शक्तिजानुकरणार्थः प्लुताद्यर्थश्च। यदि तर्हीमे वर्णा अर्थवन्तः, वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनान्मन्यामहे—अनर्थका वर्णा इति, तुल्यजातीयांस्तुल्यजातीयेषूपदिशति—अचोऽक्ष, हलो हल्षु, अश्नोतेर्वा पुनरयमौणादिके सरन्प्रत्ययः, अश्नुते इत्यक्षरमित्यादिभाष्यग्रन्थस्य समीक्षा विशदं कृता अस्ति।

द्वितीयाध्याये [1]वृद्धिरादैजिति सूत्रे तद्भावितद्भावितपक्षस्य संज्ञाधिकारस्य विचारः कृतोऽस्ति। "इको गुणवृद्धी"[2] इति सूत्रे इग्ग्रहणस्य, तच्छेषतदपवादपक्षयोः षष्ठ्यधिकारेऽनयोर्योगयोः अपेक्षायाश्च विचारः कृतोऽस्ति।

पुनश्च "न धातुलोप [3]आर्धधातुके" इति सूत्रमुद्दिश्य विमर्शः कृतः, ततश्च "क्ङिति [4]चे" ति सूत्रमुद्दिश्य तदीयं प्रयोजनादिकं समीक्षितम्। अग्रे च "हलोऽ[5]नन्तराः संयोगः, [6]मुखनासिकावचनोऽनुनासिकः, [7]तुल्यास्यप्रयत्नं सवर्णमिति सूत्रमुद्दिश्य समीक्षा कृता।

तृतीयाध्याये "[8]ईदूदेद्द्विवचनं प्रगृह्यमिति, [9]अदसो मादिति, निपात [10]एकाजनाङिति, उञ [11]ऊँ, इदूतौ [12]च सप्तम्यर्थे, दा [13]धाघ्वदाबि"-त्यादि सूत्रमुद्दिश्य कृता समीक्षा ग्रन्थे पठनीया। दा [14]धाघ्वदाबित्यस्य

---

१. पा० सू० १।१।१ — २. पा० सू० १।१।३
३. पा० सू० १।१।४ — ४. पा० सू० १।१।५
५. पा० सू० १।१।७ — ६. पा० सू० १।१।८
७. पा० सू० १।१।९ — ८. पा० सू० १।१।११
९. पा० सू० १।१।१२ — १०. पा० सू० १।१।१४
११. पा० सू० १।१।१७ — १२. पा० सू० १।१।१९
१३. पा० सू० १।१।२० — १४. पा० सू० १।१।२०

वाक्यशेषे तु "अर्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते" इति परिभाषाविषये सम्यक् समीक्षणं कृतमस्ति ।

तदग्रे च व्यपदेशिवद्भावविमर्शः दर्शनीयोऽस्ति । [१]"तरप्तमपौ घः" इति सूत्रविषयिका समीक्षा, [२]ष्णान्ता षडिति सूत्रे "शताद्यष्टनोर्नुम्नुडर्थमि" "त्यादिवार्तिकविषये, [३]पूर्वपरावरदक्षिणोत्तरापराधराणिव्यवस्थायामसंज्ञायामि" ति सूत्रे पूर्वपाठविषये, "[४]क्त्वमेजन्तः" इति सूत्रे, [५]सुडनपुंसकस्ये"-ति सूत्रे वर्णनीयं विषयमादाय समीक्षा कृता, अन्ते च— "[६]नवेति विभाषे"-ति सूत्रीया समीक्षा द्रष्टव्या ।

चतुर्थेऽध्याये "[७]इग्यणः सम्प्रसारणमि"ति सूत्रे, "[८]आद्यन्तौ टकितौ" इति सूत्रे, एच [९]इग्घ्रस्वादेशे, उरण् [१०]रपरः" इत्यादिसूत्रेषु समुचितविषयसमीक्षा कृता ।

ततश्च "[११]स्थानिवदादेशोऽनल्विधौ" इति सूत्रे, अचः [१२]परस्मिन्निति सूत्रे, न [१३]पदान्तद्विर्वचनेति सूत्रे सर्वान्ते च "[१४]द्विर्वचनेऽचीति सूत्रमादाय विशदसमीक्षा विहिता ।

पञ्चमाध्याये "[१५]अदर्शनं लोपः, [१६]प्रत्ययलोपे प्रत्ययलक्षणम्, [१७]न लुमताङ्गस्य, तपरस्तत्कालस्य, [१८]येन विधिस्तदन्तस्येत्यादि सूत्रेषु समीक्षणीयविषयिका समीक्षा विहितेति ग्रन्थ उपसंह्रियते ।



---

१. पा० सू० १।१।२२ २. पा० सू० १।१।२४
३. पा० सू० १।१।३४ ४. पा० सू० १।१।३९
५. पा० सू० १।१।४३ ६. पा० सू० १।१।४४
७. पा० सू० १।१।४५ ८. पा० सू० १।१।४६
९. पा० सू० १।१।४८ १०. पा० सू० १।१।५१
११. पा० सू० १।१।५६ १२. पा० सू० १।१।५७
१३. पा० सू० १।१।५८ १४. पा० सू० १।१।५९
१५. पा० सू० १।१।६० १६. पा० सू० १।१।६२
१७. पा० सू० १।१।६३ १८. पा० सू० १।१।७२

# परिशिष्टम् (क)

## वर्णानुक्रमेण सङ्केतसूची

| | |
|---|---|
| अ० को० | अमरकोशः । |
| उ० | उद्द्योतः । |
| उ० पा० सू० | उद्द्योतः पाणिनिसूत्रस्य । |
| उ० सू० | उणादिसूत्रम् । |
| ऋ० | ऋक्संहिता । |
| का० वा० | कात्यायनवार्तिकम् । |
| कि० | किरातार्जुनीयम् । |
| ग० सू० चु० | गणसूत्रचुरादिः । |
| गौ० प्र० पृ० | गौरवाभिसन्धिप्रकाशपृष्ठाङ्कः । |
| त० टी० | तत्त्वालोकटीकायाम् । |
| नि० स० सू० | निबन्धे समीक्षितसूत्राणि । |
| प० शे० प० | परिभाषेन्दुशेखरे परिभाषा । |
| प० ल० मं० ना० नि० | परमलघुमञ्जूषायां नामार्थनिरूपणम् । |
| प० ल० मं० ल० नि० | परमलघुमञ्जूषायां लकारार्थनिरूपणम् । |
| प० ल० मं० टी० नि० | परमलघुमञ्जूषाटीका नित्यानन्दस्य । |
| परि० शे० टी० भू० | परिभाषेन्दुशेखरस्य टीकाभूतिः । |
| पा० सू० | पाणिनिसूत्रम् । |
| पू० मी० | पूर्वमीमांसा । |
| पा० यो० | पातञ्जलयोगसूत्रम् । |
| प्र० | प्रदीपः । |
| प्रौ० म० | प्रौढमनोरमा । |
| फि० सू० | फिट्सूत्रम् । |
| बृ० | बृहदारण्यकः । |
| भा० प्र० पृ० | भाष्यप्रदीपपृष्ठाङ्कः । |
| भा० उ० पृ० | भाष्योद्द्योतपृष्ठाङ्कः । |
| भा० वा० | भाष्यवार्तिकम् । |

| | |
|---|---|
| भा० व्या० सू० | भाष्ये व्याख्यातसूत्राणि । |
| म० भा० | महाभाष्यम् । |
| म० भा० आ० सू० | महाभाष्याह्निकसूत्रम् । |
| म० भा० पृ० | महाभाष्यपृष्ठाङ्कः । |
| म० भा० शि० सू० | महाभाष्ये शिवसूत्रम् । |
| मे० पू० श्लो० | मेघदूतं पूर्वार्द्धश्लोकाङ्कः । |
| ल० म० आ० मि० | लघुमञ्जूषायामाकांक्षानिरूपणम् । |
| ल० श० शे० टि० नि० | लघुशब्देन्दुशेखरटिप्पणी नित्यानन्दस्य । |
| ल० मं० ता० नि० | लघुसिद्धान्तमञ्जूषायां तात्पर्यार्थनिरूपणम् । |
| ल० सि० मं० न० नि० | लघुसिद्धान्तमञ्जूषायां नञर्थनिरूपणम् । |
| लो० प्र० | लोकप्रसिद्धिः । |
| वि० को० | विश्वकोशः । |
| वै० भू० सा० धा० नि० | वैयाकरणभूषणसारे धात्वर्थनिरूपणम् । |
| वै० सि० कौ० सं० प्र० | वैयाकरणसिद्धान्तकौमुद्याः संज्ञाप्रकरणम् । |
| वै० भू० सा० ना० नि० | वैयाकरणभूषणसारे नामार्थनिरूपणम् । |
| शि० सू० | शिवसूत्रम् । |
| शु० यजु० | शुक्लयजुर्वेदः । |
| श्लो० भा० पृ० | श्लोकभाष्यं पृष्ठाङ्कः । |
| सां० का० | सांख्यकारिका । |
| सां० प्र० भा० | सांख्यप्रवचनभाष्यम् । |
| सां० त० कौ० वा० टी० | सांख्यतत्त्वकौमुद्याः वाचस्पतिटीका । |
| सि० कौ० बा० टी० | सिद्धान्तकौमुद्याः बालमनोरमाटीका । |
| सि० कौ० टी० तत्त्व० | सिद्धान्तकौमुद्याः टीकातत्त्वबोधिनी |

# परिशिष्टम् (ख)

## वर्णानुक्रमेण सहायकग्रन्थसूची


| क्रम सं० | ग्रन्थनामानि | ग्रन्थकारनामानि | प्रकाशनस्थानम् | समयः |
|---|---|---|---|---|
| १. | अमरकोशः | अमरसिंहः | मुम्बई | ई० १९६१ |
| २. | ऋग्वेदसंहिता | (सायणभाष्यम्) | पूना–२ | २८ सि० ई० ई० १९३३ |
| ३. | काशिका | श्रीमद्वामनजयादित्यः | वाराणसी | ई० १९७२ |
| ४. | किरातार्जुनीयम् | श्रीभारविः | वाराणसी | ई० १९६८ |
| ५. | गौरवाभिसन्धिप्रकाशः | पं० श्रीरामप्रसादत्रिपाठी | वाराणसी | सं० २०१६ |
| ६. | तर्कभाषा | श्रीकेशवमिश्रः | वाराणसी | ई० १९७१ |
| ७. | न्यासः (का०) | आचार्यजिनेन्द्रबुद्धिपादः | वाराणसी | ई० १९६७ |
| ८. | पदमञ्जरी | श्रीहरदत्तमिश्रः | वाराणसी | ई० १९६७ |
| ९. | परिभाषेन्दुशेखरः | श्रीनागेशभट्टः | वाराणसी | ई० १९७८ |
| १०. | पाणिनीयव्याकरणे- | डा० रामप्रसादत्रिपाठी | वाराणसी | ई० १९७२ |
| ११. | पातञ्जलयोगदर्शनम् | महर्षिपतञ्जलिः | वाराणसी | ई० १९७० |
| १२. | प्रौढमनोरमा | श्रीभट्टोजिदीक्षितः | वाराणसी | ई० १९७८ |
| १३. | बृहच्छब्देन्दुशेखरः | श्रीनागेशभट्टः | वाराणसी | ई० १९६० |
| १४. | बृहदारण्यकोपनिषद् | — | आनन्दाश्रमः पूना | ई० १९१४ |
| १५. | महाभाष्यम् | महर्षिपतञ्जलिः | चौखम्बासीरीज आफीस, वाराणसी | ई० १९५४ |
| १६. | महाभाष्ये गूढाकृतयः | डा० देवस्वरूपमिश्रः | वाराणसी | ई० १९७ |
| १७. | मीमांसादर्शनम् | जैमिनिमुनिः | पूना | ई० १९२९ |
| १८. | मेघदूतम् | श्रीकालिदासः | वाराणसी | ई० १९७८ |
| १९. | लघुशब्देन्दुशेखरः | श्रीनागेशभट्टः | वाराणसी | ई० १९५४ |
| २०. | वाक्यपदीयम् | श्रीभर्तृहरिः (श्रीसूर्यनारायणशुक्लः) | वाराणसी | ई० १९५४ |

| | | | | |
|---|---|---|---|---|
| २१. | वाक्यपदीयम् (अम्बाकर्तृकटीका) | श्रीरघुनाथशर्मा | वाराणसी | ई० १९७४ |
| २२. | विश्वकोश: | श्रीनागेन्द्रनाथवसु: (सम्पादक:) | कलकत्ता | ई० १९२२ |
| २३. | वैयाकरणभूषणसार: | श्रीकौण्डभट्ट: | वाराणसी | ई० १९६९ |
| २४. | वैयाकरणलघुमञ्जूषा | श्रीनागेशभट्ट: | मुम्बई | ई० १९२५ |
| २५. | वैयाकरणसिद्धान्तकौमुदी | भट्टोजिदीक्षित: | मुम्बई | ई० १९५९ |
| २६. | व्युत्पत्तिवाद: | श्रीमद्गदाधरभट्टाचार्य: | मुम्बई | सं० १९६८ |
| २७. | शब्दकौस्तुभ: | भट्टोजिदीक्षित: | काशी | सं० १९९५ |
| २८. | शक्तिवाद: | श्रीमद्गदाधरभट्टाचार्य: | काशी | सं० १९८६ |
| २९. | शास्त्रदीपिका | श्रीपार्थसारथिमिश्र: | काशी | सं० १९६४ |
| ३०. | शिशुपालवधम् | कविमाघ: | वाराणसी | ई० १९७२ |
| ३१. | शुक्लयजुर्वेद: | — | मुम्बई | सं० १९५४ |
| ३२. | सर्वदर्शनसंग्रह: | श्रीमन्माधवाचार्य: | मुम्बई | सं० १९८२ |
| ३३. | सांख्यतत्त्वकौमुदी | श्रीवाचस्पतिमिश्र: | मेरठ: | ई० १९७६ |
| ३४. | सांख्यप्रवचनभाष्यम् | विज्ञानभिक्षु: | वाराणसी | सं० २०२२ |
| ३५. | सांख्यकारिका | श्रीमदीश्वरकृष्ण: | वाराणसी | ई० १९७० |


